॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – ११ – द्वितीयाध्यायः


प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – ११

## द्वितीयाध्यायस्य प्रथमपादे

स्मृत्यधिकरणम् तथा नविलक्षणत्वाधिकरणम् (भागः १)

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



| श्रीमन्न्यायसुधा | Śrīman-Nyāyasudhā |
| --- | --- |
| परिमळाद्युपेता | Parimaḷādyupetā |
| सम्पुटम् – ११ | Volume - 11 |
| प्रथमं मुद्रणम् - ई.सन् २००७ | First Edition -2007 A.D. |


सर्वजित् संवत्सरम्, शके १९२९, भाद्रपद शुक्ल पौर्णिमा, बुधवासरः

मन्त्रालयम्

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**
**Śrīman Madvāchārya Mūla Mahāsamsthāna**
**Śrī Rāghavendra Swāmy Mutt**
Mantrālayam - 518 345
India.

* मुद्रकः *

धनंजयाचार्य बाळाचार्य वरखेडकरः

| सुधा मुद्रणम् | SUDHA MUDRANA |
| --- | --- |
| शंकरपुरम्, बेंगळूर - ५६० ००४ | Shankarpuram, Bangalore - 560 004 |
| दूरवाणी– २६७२ ३१०७, ६५६० २८३६ | Phone : 2672 3107, 6560 2836 |



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-
श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-

**श्रीमन्मध्वाचार्यसमलङ्कृतमूलमहासंस्थानाधिष्ठितानां**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

समर्पितोऽयं ग्रन्थः ॥

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-

श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-

**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**

वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-

**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

## श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्

**तथा तेषामुत्तराधिकारिणां**

## श्री श्रीमत्सुयतीन्द्रतीर्थश्रीपादानाम्

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयम् अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः ।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसम्पादकेभ्यः वैकुण्ठवासिभ्यः साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने च सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गत-श्रीसीतापति-श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयित-आयुरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः ।*

मन्त्रालयक्षेत्रम्,

सर्वजित् संवत्सरम्, शके १९२९, भाद्रपद शुक्ल पौर्णिमा ।



श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठाधीशानां
श्री श्री सुजयीन्द्रतीर्थश्रीपादानां वरकुमारकाणां
**श्री श्री सुशमीन्द्रतीर्थश्रीपादानां**
परमानुग्रहेण सम्पादितोऽयं ग्रन्थः ।

# सम्पादकविद्वन्मण्डली

**प्रधानसम्पादकाः**

**वैकुण्ठवासिनः श्री आचार्य साणूरु भीमभट्टाः**
आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**सम्पादकाः**

**विद्वान् श्री कुर्डि सुशीलेन्द्राचार्याः**

**विद्वान् श्री कडप राघवेन्द्राचार्याः**, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

**विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः**

**विद्वान् आहिताग्नि श्री वरखेडकर भीमसेनाचार्याः**

**निर्वाहकाः**

**श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः**
श्री श्री सुशमीन्द्रतीर्थश्रीपादानाम् आप्तकार्यदर्शिनः,
श्रीमन्मध्वाचार्यमूलमहासंस्थानम् - श्रीराघवेन्द्रस्वामिमठः,
मन्त्रालयम्



# श्रीमन्न्यायसुधा – परिमळाद्युपेता

## टिप्पणीनां क्रमः तथा सङ्क्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | सङ्क्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी | पांग्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# टिप्पणीविषये स्पष्टीकरणम्

श्रीमज्जयतीर्थविरचितं महामेरुतुल्यं श्रीमन्न्यायसुधाग्रन्थमनेके व्याचख्युः। साम्प्रत-मस्माभिः, उपलब्धाः श्रीमन्न्यायसुधाव्याख्याः सङ्गृह्यैकत्र मुद्रापयितव्याः इत्येकमात्रोद्देशेन अनेकव्याख्यासहिततया श्रीमन्न्यायसुधाग्रन्थः मुद्रापितः।

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां श्रीमद्राघवेन्द्रतीर्थश्रीपादानां च सुधाव्याख्यानयोः इदानीं मुद्रापितायां यस्यां कस्याञ्चित् सुधाव्याख्यायां यस्मिन् कस्मिंश्चिद्विषये भिन्नाभिप्राये सति (विरुद्धाभिप्राये सति) सः तद्व्याख्यातॄणामभिप्राय एव। सः श्रीमद्विजयीन्द्रतीर्थ-श्रीपादानां वा परिमलकाराणां वा सम्पादकानां वा प्रकाशकानां वा सम्मत इति न मन्तव्य-मिति एतन्मूलकतया स्पष्टीकुर्मः।

इत्थम्

**सम्पादकाः**



॥ श्रीमन्मूलरामो विजयते ॥

# प्रकाशकीयम्

द्वापरे श्रीगौतममहर्षिभिः शप्तेषु साधुजनेषु व्याकुलीभूतेषु श्रीब्रह्मरुद्रेन्द्रादिभिः प्रार्थितो भगवान्नारायणः श्रीवेदव्यासत्वेनावतीर्य राशीभूतान् वेदान् विभज्य, वेदार्थनिर्णायकानि चतुःषष्ट्यधिकपञ्चशत(५६४)ब्रह्मसूत्राणि व्यरचयत्।

एषां ब्रह्मसूत्राणां श्रीवाय्ववतारिणः सर्वज्ञाः श्रीमदानन्दतीर्थभगवत्पादाः भाष्यम्, श्रीमदनुव्याख्यानम्, न्यायविवरणम्, अणुभाष्यं चेति ग्रन्थचतुष्टयं विरचय्य महदुपाकुर्वन्।

श्रीमदाचार्याणां प्रियान्तेवासिनां श्रीत्रिविक्रमपण्डिताचार्याणां "व्यक्ततर्कततिं कुरु" इति प्रार्थनामनुरुध्य श्रीमदाचार्याः उपर्युक्तग्रन्थेष्वन्यतमं श्रीमदनुव्याख्यानग्रन्थं रचयामासुः।

अनुव्याख्यानस्यास्य इन्द्रांशसंभूताः श्रीमज्जयतीर्थश्रीमच्चरणाः श्रीमन्न्यायसुधानाम्नीं मेरुतुल्यामनुपमां टीकां व्यरचयन्।

ग्रन्थोऽयं चित्रपदपुञ्जमण्डितः, महागाम्भीर्यवान् महापण्डितवरेण्यानामपि महान्तं गर्वपर्वतं खण्डयितुं दक्षश्चकास्ति।

अस्यामोघस्य ग्रन्थस्य महत्त्वम् एतद्ग्रन्थस्य एतदीयानामनेकासां व्याख्यानां सङ्ख्यैव व्यञ्जयति।

| | **व्याख्यातारो महाभागाः** | **व्याख्यानस्य नाम** |
|---|---|---|
| १) | श्री श्रीपादराजतीर्थाः | वाग्वज्रम् |
| २) | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः |
| ३) | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका |
| ४) | श्री राघवेन्द्रतीर्थाः | परिमलः |
| ५) | श्री यदुपत्याचार्याः | टिप्पणी |
| ६) | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः |
| ७) | श्री गलगली नरसिंहाचार्याः | आनन्दः |
| ८) | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः |



| | | |
|---|---|---|
| ९) | श्री श्रीनिधितीर्थाः | टिप्पणी |
| १०) | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका |
| ११) | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला |
| १२) | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका |
| १३) | श्री कुण्डलगिरि आचार्याः | रसकूलङ्कषः |
| १४) | श्री सत्यव्रततीर्थाः | सुधाविवृतिः |
| १५) | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः |
| १६) | श्री विठ्ठलभट्टाः | टिप्पणी |
| १७) | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि |
| १८) | श्री विष्णुतीर्थाः | रसरञ्जनी |
| १९) | श्री अडवि कृष्णाचार्याः | लघुरसरञ्जनी |
| २०) | श्री मन्नारि कृष्णाचार्याः | चषकः |
| २१) | श्री एरी बाळाचार्याः | उपस्पर्शः |
| २२) | श्री काशी तिम्मण्णाचार्याः | काशी टिप्पणी |
| २३) | श्री गूढकर्तृकटिप्पणीकाराः | टिप्पणी |
| २४) | श्री प्रदीपकाराः | प्रदीपः |
| २५) | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी |
| २६) | श्री रोट्टि वेङ्कटभट्टाः | सुधाविवृतिः |
| २७) | श्री ताम्रपर्णी आचार्याः | टिप्पणी |
| २८) | श्री उमर्जी प्रह्लादकृष्णाचार्याः | उमर्जी |
| २९) | श्री व्यासतत्त्वज्ञतीर्थाः | कुलिशम् |
| ३०) | श्री महेश्वरसूरिः | टिप्पणी |
| ३१) | श्री पुट्ट तंबि आचार्याः | टिप्पणी |
| ३२) | श्री रत्नगर्भ ओडेयर् | टिप्पणी |
| ३३) | श्री अनन्तभट्टाः | टिप्पणी |
| ३४) | श्री सत्यनाथाचार्याः | टिप्पणी |
| ३५) | श्री जयवेङ्कटाचार्याः | टिप्पणी |
| ३६) | श्री गूढकर्तृकाचार्याः | सुधासारसङ्ग्रहः |
| ३७) | श्री गलगली गोविन्दाचार्याः | पञ्चरत्नस्तबकः |



३८) श्री श्रीमुष्णाचार्याः — पञ्चाधिकरणी
३९) श्री लिङ्गेरि श्रीनिवासाचार्याः — सिद्धान्तप्रभा
४०) श्री पाण्डुरङ्गि केशवाचार्याः — सुधावाक्यार्थविनोदः
४१) श्री उडुपि राघवेन्द्रतीर्थाः (पुत्तिगे मठः) — टिप्पणी
४२) श्री सत्यनाथाः — न्यायसुधापरशुः
४३) श्री सुमतीन्द्रतीर्थाः — भावरत्नकोशः
४४) श्री पाण्डुरङ्गि केशवाचार्याः — मञ्जरी
४५) श्री व्यासतत्त्वज्ञतीर्थाः — लघुरसरञ्जनी
४६) श्री व्यासतत्त्वज्ञतीर्थाः — गुरुरसरञ्जनी
४७) श्री भीमराव् कुलकर्णी कुम्बारगेरी — टिप्पणी
४८) श्री सत्यपराक्रमतीर्थाः — सुधाफक्किका
४९) श्री हुलिगि श्रीपत्याचार्याः — टिप्पणी
५०) श्री अहोबिलाचार्याः — टिप्पणी
५१) श्री सत्यप्रज्ञतीर्थाः — टिप्पणी

एतादृशस्य अत्युत्तमग्रन्थस्य मुद्रणकार्यं श्रीमत्परमपूज्यानां प्रातःस्मरणीयानां श्रीमत्सुजयीन्द्रतीर्थ-श्रीमच्चरणानामादेशं सदिच्छां चानुरुध्य सम्प्रति श्रीराघवेन्द्रस्वामिमठीयपीठाधीश्वराः पूज्याः श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादाः कारयन्तीति अस्माकं परमं प्रमोदस्थानम् ।

अस्य ग्रन्थस्य संशोधनकार्ये अस्मद्विद्यापीठीयप्राच्यग्रन्थालयस्थाः अधोनिर्दिष्टाः टिप्पण्यः हस्तप्रति-कृतयोऽपि उपयोजिता इति निवेदयितुं नितान्तं तुष्यामः ।

ग्रन्थस्यास्य प्रकाशनार्थं श्रीसुधाव्याख्यानं विठ्ठलभट्टीयं हस्तलिखितं अनुगृहीतवद्भ्यः परमपूज्येभ्यः श्रीउत्तरादिमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । संशोधनादिकार्येष्वनुकूलयितुं श्रीसुधाव्याख्यानं श्रीनिधितीर्थीयं तालपत्रस्थं अनुगृहीतवद्भ्यः परमपूज्येभ्यः श्रीपुत्तिगेमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्प-यामः । एवमेव मुद्रणकार्येऽस्मिन् साक्षाद्वा परोक्षे वा सहकृतवद्भ्यः परमपूज्येभ्यः श्रीमठाधीश्वरेभ्यः सर्वेभ्यः सभक्तिप्रणामगणं कार्तज्ञ्यमाविष्कुर्मः । श्रीनिधितीर्थीयं व्याख्यानं तालपत्रस्थं तौलवलिपिगतं देवनागरिलिपिगतं कृतवतः विद्वान् श्री साणूरु भीमभट्टतनूजः श्री कृष्णमूर्ति महाशयान् सन्दर्भेऽस्मिन् सप्रश्रयं स्मरामः ।

ग्रन्थस्यास्य प्रधानसम्पादकेभ्यः विद्वद्भ्यः वैकुण्ठवासिभ्यः श्री आचार्य साणूरु भीमभट्टमहाशयेभ्यः तथा एतद्ग्रन्थसम्पादकेभ्यः विद्वद्भ्यः श्री कडप राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, तथा



विद्वद्भ्यः आहिताग्नि श्री वरखेडकर भीमसेनाचार्येभ्यः, एवं विठ्ठलभट्टीयां टिप्पर्णी तथा एरी बाळाचार्याणां टिप्पर्णी दत्तवद्भ्यः विद्वद्भ्यः श्री व्यासनकेरे प्रभञ्जनाचार्येभ्यः, तथा पांग्री श्रीनिवासाचार्याणां टिप्पर्णी दत्तवद्भ्यः विद्वद्भ्यः श्री पांग्री लक्ष्मणाचार्येभ्यः, तथा वाक्यार्थरत्नमालाख्यां टिप्पर्णी, सत्यनाथतीर्थीयां टिप्पर्णी, हुग्गिनामकटिप्पर्णी च दत्वा उपकृतवद्भ्यः पंढरपुरीय पूर्णप्रज्ञमतोन्नाहिनीपाठशालाप्रांशुपालेभ्यः विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, तथा वाक्यार्थरत्नमालाटिप्पण्याः प्रतिकृत्यन्तरं दत्तवद्भ्यः विद्वद्भ्यः श्री के. टि. पाण्डुरङ्गि महाशयेभ्यः एवमेव प्रदीपटिप्पर्णी दत्तवद्भ्यः मद्रपुरसर्वकारीयग्रन्थालयव्यवस्थापकेभ्यः श्रीमद्भ्यः, श्रीमन्न्यायसुधाबिन्दुनाम्नीं टिप्पर्णी दत्तवद्भ्यः श्रीमद्भ्यः केरलराज्यीय तिरुवाङ्कूरु ग्रन्थभाण्डारव्यवस्थापकेभ्यः, तथा रसरञ्जनी-लघुरसरञ्जनी इति व्याख्यानद्वयं दत्तवद्भ्यः विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, एवं ग्रन्थस्यास्य प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः विद्वद्भ्यः श्री कुर्डि सुशीलेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री कडप राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, विद्वद्भ्यः श्री एन् राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, विद्वद्भ्यः श्री के. वेङ्कटेशाचार्येभ्यः, विद्वद्भ्यः श्री ओडेयर् कनकाचलाचार्येभ्यः, विद्वद्भ्यः श्री पु. वंशी कृष्णाचार्येभ्यः, विद्वद्भ्यः श्री उंडारु पांडुरंग श्रीनिवासमूर्ती आचार्येभ्यः, एवं विशेषतः अल्पीयस्येव काले महता परिश्रमेण सश्रद्धं ग्रन्थानां प्रतिकृतिसंशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः तथा सर्वाङ्गसौन्दर्येण मुद्राप्य दत्तवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः विद्वद्भ्यः श्री वरखेडकर धनंजयाचार्येभ्यः, तथा ग्रन्थस्यास्य अध्ययनाध्यापनादिकर्तृभ्यः सर्वेभ्यः श्रीभगवान् सीताजानिः श्रीमूल-रघुपतिवेदव्यासः आयुरारोग्यैश्वर्यादीनि चानुगृह्य संरक्षत्विति अनन्यया भक्त्या सम्प्रार्थयामहे।

अत्र मुद्रापितासु टिप्पणीषु काश्चन टिप्पण्यः प्राचीनहस्तप्रतिरूपेण शिथिलाः मध्ये मध्ये त्रुटिताः कदाचिदसमग्रा अपि तेनैव रूपेण पण्डितैः संशोध्य मुद्रापिताः। अत्र प्रकाशितभागे यदि कुत्रचित् स्खलितानि प्राज्ञैर्विद्वद्भिः विलोकितानि चेत् ते अस्मान्प्रति संसूचयेयुः। तेन वयं शुद्धिपत्रिकायाम् अग्रिमसम्पुटेषु वा तत्सर्वं समीकृत्य विदुषां पुरः उपस्थापयितुं शक्ष्यामः। येषां समीपे अस्माभिरमुद्रितटिप्पण्यः उपलभ्यन्ते ते कृपया तान् ग्रन्थान् अस्मभ्यं प्रेषयन्ति चेत् तत्सर्वमागामिसम्पुटेषु वयं सम्यक् संशोध्य मुद्रापयितुं महता सन्तोषेण स्वीकुर्मः।

इत्थम्।

भवदीयम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्,**

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः





॥ श्रीमन्मूलरामो विजयते ॥

# प्रस्तावना

**यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।**
**न क्षमन्ते विमतयः तमुपासे श्रियःपतिम् ॥**

भूर्भुवस्स्वरादिचतुर्दशभुवनात्मकसङ्ख्यातिगब्रह्माण्डकोटीः रोमकूपे सन्निवेश्य सकललोकजनन्या श्रिया सह सर्पतल्पे शयानेन भगवता सृष्टेषु भूलोकखण्डेष्वन्यतमेऽस्मिन् भरतखण्डे जनिमतामस्माकं महद्भागधेयमिदं यदत्र भगवान् तत्तद्युगेष्ववतीर्य बलकार्यं ज्ञानकार्यं च सम्पाद्य स्वभक्तानन्वग्रहीत् । तत्रापीदमतिशयितं वक्तव्येष्वाद्यं वचनं यदत्र तद्भक्ताग्रणीः पावनः पवमानः अनेकधाऽवतीर्य तत्रापि तृतीयेऽवतारे श्रीमध्वनाम्नाऽत्र प्रकटीभूय सज्जनानुददीधरत् । तदीयभक्तानुग्रहकार्येषु आचन्द्रार्कं दीप्यमानानि बहूनि कार्याणि यद्यपि वक्तव्यानि सन्ति तथाऽपि समस्तशास्त्रार्थसारभूतानां श्रीबादरायणसंज्ञकेन श्रीवेदव्यासमहर्षिणा निर्मितानां ब्रह्मसूत्राणां भाष्य-अणुभाष्य-अनुभाष्य-न्यायविवरण-ग्रन्थानां निर्माणमतितरां सर्वैरपि अध्यात्मविद्यारसिकैः विचारविमर्शकैः प्रशंसनीयं सर्वदा स्मरणीयं कार्यमिति निश्चप्रचं दृढतरं वयं वक्तुं शक्नुमः ।

तत्र च सूत्रसंबन्धिग्रन्थचतुष्टये ब्रह्मसूत्र-अनुव्याख्यान-ग्रन्थराजः नभसि नक्षत्रपुञ्जमध्ये चन्द्रमा इव चकास्ति । तस्यास्य ग्रन्थराजस्य इन्द्रावतारभूतैः प्रातःस्मरणीयैः परमपूज्यश्रीजयतीर्थमस्करिवरैः रचितम् अनुव्याख्यानव्याख्यानं न्यायसुधानामकं नैकाभिष्टिप्पणीभिः समलंकृतं श्रीराघवेन्द्रतीर्थगुरुवर्याणां प्रेरणया अनुग्रहेण च इदानीं सम्प्रकाश्य हरिगुरुभक्तानां करकमलयोः समर्पयितुं मोमुद्यते अस्माकं चेतः ।

उपनिषत्प्रस्थान-गीताप्रस्थान-सूत्रप्रस्थाननामकप्रस्थानत्रये सूत्रप्रस्थानमेव अन्तिमं निर्णायकं समस्तैः शिरसा धारणीयं च भवति । किं बहुना समस्तेषु वेदेषु समस्तेषु पुराणेष्वन्यत्राप्यभ्यर्हणीयवैदिकवाङ्मयेषु च उक्तानामर्थानां निर्णयाय सूत्राण्येव अस्माकमवलम्बभूतानि महार्णवे तरतामाधारभूतनौकास्थानीयानि । तेषां सूत्राणां व्याख्यानभूतानुव्याख्यानस्य व्याख्यानरूपा इयं सुधा देवलोकीयसुधातोऽप्यभ्यर्हिततमा जन्ममृत्यु-जरादिकं सर्वमपहृत्य स्वरूपानन्दाविर्भावरूपं मोक्षं दापयितुं समर्था । अस्य ग्रन्थस्य प्रशंसा कथं कार्या, कियती कार्या इत्यादिविषयाः आलोच्यमानाः अस्माकं जिह्वां पुरःसर्तुमेव न मुञ्चन्ति । यतो हि ग्रन्थकाराः श्रीमज्जयतीर्थश्रीमच्चरणाः पूर्वाश्रमे नाममात्रेण गृहस्थाश्रमप्रवेशं लब्ध्वा केनापि अनालोचनीयेन केवलं भगवता क्लृप्तेन घटनाविशेषेण संसारमिमं तुच्छीकृत्य स्वीये तरुणे वयसि संन्यासाश्रमं प्रविश्य स्वगुरूणां विद्यारण्यारण्यच्छेदकानां श्रीमदक्षोभ्यतीर्थगुरुवर्याणां सविधे शुकवत् शिक्षिता भूत्वा स्वीयया अलौकिकप्रज्ञया आचार्याणां अनेकग्रन्थानां टीकाः विरचय्य प्रायः अन्ते इमां न्यायसुधां भक्तेभ्यः नाकीन्द्रः सुधां इव प्रादुः । अस्य ग्रन्थस्य माहात्म्यं शेषोऽपि वर्णयितुं नालम् । बाल्यादारभ्य यौवनपर्यन्तं प्रायः संस्कृतभाषायाः वेदादिशास्त्राणां च परिचयहीना अपि केवलं



गुर्वनुग्रहेण शास्त्राण्यभ्यस्य अनन्तरं किञ्चित्समयपर्यन्तं सरस्वतीं संसेव्य तदनुग्रहेण घण्टां (लेखनीं) पूगं च लब्ध्वा लेखनकार्यं प्रारभन्त जयतीर्थश्रीमच्चरणाः। तत्रापि गुहाया अन्तरुपविश्य पञ्चषशिष्यान् पाठयन्तः स्वयमेव वाणीकृपया लब्धया लेखन्या आचार्याणां ग्रन्थान् व्याख्यान्तः, अनन्तरं तदुपरि पूगेन सम्मार्जनमात्रेण तत्सर्वं त्रुटिलेशरहितं भगवत्कृपया आविर्भावयन्तः ते लोके टीकाचार्याः इत्येव निरुपपदगौरवनाम्ना प्रथिताः बभूवुः।

महानुभावाः जयतीर्थश्रीमच्चरणाः मठीयवैभवादीन् हित्वा शिष्यैः भिक्षया आनीतेन यावनालान्नेन (भक्करि) जीवनं निरवहन्।

महानुभावाः जयतीर्थश्रीमच्चरणाः गुरुभक्तिविषये अन्यादृशम् आदर्शम् अस्माकं पुरतः उपस्थापयामासुः। तद्यथा—

**न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम्।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम्॥**

अनेन श्लोकेन प्रदर्शितः विनयः अनन्यसाधारणः लोकातिशायी सहृदयान् जिज्ञासून् रोमाञ्चयति। एतदपेक्षया अधिकः गुरुप्रवणः गुरोः दासानुदासः लोके यत्र कुत्रापि नोपलभ्येत इत्येवं सर्वैः सर्वथा अनुभूयते एव।

अल्पीयसा अनेहसा स्वकीयप्रखरबुद्धिवैभवेन निर्मितस्य अस्य सुधाग्रन्थस्य वैशिष्ट्यं वर्णयितुं सहस्रवदनः शेषोऽपि नालम्, किमुत अल्पप्रज्ञाः तृणकल्पाः वयम्। एतदीयग्रन्थस्य माहात्म्यं संवर्णयन् कविरेकः एवमुद्गिरति स्म। यथा—

**आमूलाग्रनिबद्धतर्कजटिलं शब्दैकजीवातुकं**
**मीमांसानुनयं च शङ्करवचो हुङ्कारभङ्गप्रदम्।**
**शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्स्वप्रतन्त्रान्तराः**
**व्याख्यास्यन्ति पठन्ति वा कथमहो किं वा कलौ दुर्घटम्॥**

'अध्यात्मविद्या विद्यानाम्' इति श्रीकृष्णोक्त्यनुसारेण अद्वितीयाध्यात्मविद्याख्य-सूत्रव्याख्यानरूपा इयं न्यायसुधा नैकाभिष्टिप्पणीभिः सह संयोज्य, संशोध्य, संमुद्र्य अत्र प्रकाशं नीयते। महदिदं साहसकार्यं महापुरुषोत्तमस्य श्रीहरेः अविच्छिन्नभक्ताग्रेसर-श्रीमन्मुख्यप्राणावताराणां श्रीमदानन्दतीर्थभगवत्पादानां परमानुग्रहेणैव सम्पन्नः प्रह्लादावतारभूतानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानाम् आराधनसमये तत्करकमलाभ्यामेव श्रीमन्मूलरामचन्द्रदेवस्य पादकमलयोः तद्भक्तवृन्देन सप्रश्रयं सभक्ति समर्प्यतेतमाम्। श्रीकृष्णार्पणमस्तु॥

*आचार्याः साणूरु भीमभट्टाः*
प्रधानसम्पादकाः





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## संपुटम् – ११

### विषयानुक्रमणिका







* * *





| विषयः | परिच्छेदः | पुटसंख्या |
|---|---|---|







(उर्वरितभागः अग्रिमसम्पुटे)

* * *



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## ॥ अथ द्वितीयाध्यायः ॥

### ॥ अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

### ॥ अथ स्मृत्यधिकरणम् ॥
### ॥ २-१-१ ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

**॥ अथ मङ्गलाचरणम् ॥**

१ **सु०—** **यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।**
**न क्षमन्ते विमतयस्तमुपासे श्रियः पतिम् ॥ १ ॥**

**परि०—** भवापदो विनश्यन्ति यत्पादस्मृतिमात्रतः ।
तं वन्दे कुमतध्वान्तभास्करं नृहरिं सदा ॥

करिष्यमाणैतदध्यायार्थप्रतिपादनम् एवंविधभगवदुपासनरूपमिति भावेन अध्यायादौ मङ्गलमाचरति **यत्पदमिति** । यस्य स्वरूपम् । अथवा **यत्पदं** = यस्य – परमात्मनः, पदं – पादम् । **कटाक्षेणापि** इत्यादेः तद्विषयमल्पमपि ज्ञानं सम्पादयितुमशक्ता इत्यर्थः । **विमतयः** विरुद्धमतियुक्ताः ।





**यादु०—** युक्तिदुःसमयवेदविरोधः शक्त उक्तगुणजातनिरासे ।
यस्य नो भवति दोषविदूरं तं भजे श्रुतिसमन्वयगम्यम् ॥ १ ॥

व्यासमानम्य मध्वादीन् गुरूनपि यथामति ।
व्याकरिष्ये सुधाऽस्पष्टद्वितीयाध्यायफक्किकाः ॥ २ ॥

गुरुतरकार्ये मध्येऽपि मङ्गलाचरणस्याभीष्टसमास्यादिहेतुतया शिष्टाचारपरम्पराऽवगतत्वेन मध्येऽप्येतदध्यायप्रतिपाद्यार्थविशिष्टश्रीपत्युपासनरूपं मङ्गलं कृत्वा शिष्यान् ग्राहयितुं तदुपनिबध्नाति **यत्पदमिति** । युक्त्यादिभिर्विरुद्धा मतयो येषां ते विमतय इति बहुव्रीहिः ।

**कं०रा०—** अध्यायायादौ मङ्गलमाचरति **यत्पदमिति** । यस्य स्वरूपमित्यर्थः ।

**श्रीनिधि०—** अनन्तदोषदूरायानन्तरूपगुणात्मने ।
अनन्तदेवसेव्याय नमोऽनन्तासनाय च ॥

**विमतयः** विरुद्धमतय इति वा ।

**शे०वा०—** सर्वाभीष्टप्रदं रामं सर्वानिष्टनिवारकम् ।
जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ १ ॥

विद्वन्मत्तेभकुम्भाद्रिविपाटनविचक्षणः ।
विद्याधीशनृसिंहो मे गुरुर्नित्यं भवेन्मुदे ॥ २ ॥

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥ ३ ॥

अविरोधलक्षणं व्याचिख्यासुः ग्रन्थकारः पूर्वाध्यायार्थानुवादपूर्वकं तत्सङ्गतत्वेन द्वितीयाध्यायार्थमेकवाक्यतादिसिद्धये सूचयन्नेव प्रारिप्सितस्यानन्तरायपरिसमाप्तेः प्रचयस्य च हेतुतयाऽविगीतशिष्टाचारपरम्परादिनाऽवगतमवश्यकरणीयं श्रीपत्युपासनारूपम् एतदध्यायप्रतिपाद्यगुणविशिष्टतया तत्स्तुतिरूपं च मङ्गलमनुष्ठाय शिष्यशिक्षायै अध्यायादावुपनिबध्नाति **यत्पदमिति** । अत्र वेदसंवेद्यमिति आद्याध्यायार्थसङ्कीर्तनम् । विमतयो यत्पदं नाभिवीक्षितुं क्षमन्त इति एतदध्यायार्थकथनम् । अत्र च विरुद्धा मतिर्भवति येभ्यो युक्त्यादिभ्यस्ते युक्त्यादयो वा, युक्त्यादिभिर्विरुद्धमतयो येषामिति वादिनो वा, विरुद्धाश्च ता मतयश्चेति युक्त्यादिजन्यचतुर्विधविरोधिप्रतीतयो वा, विमतिशब्देन विवक्षिताः । ते च वेदसंवेद्यं यत्पदं नाभिवीक्षितुं क्षमन्त इत्यस्य वेदसमन्वयसिद्धमर्थं नान्यथयितुं शक्नुवन्तीत्यर्थः । अन्यथा पूर्वाध्यायार्थेन सङ्गत्यसूचनप्रसङ्गाद्वेदसंवेद्यमित्यस्य आनर्थक्यं स्यादिति द्रष्टव्यम् ।





**वा०र०—** श्रीनृसिंहपदे नत्वा गुरुराजपदे अपि ।
व्याख्यास्ये युक्तिपादीयशेषवाक्यार्थचन्द्रिका ॥

अविरोधाध्यायं व्याचिख्यासुर्ग्रन्थकारो मङ्गलमाचरति **सर्वाभीष्टेति** । कुम्भस्य कार इति प्रक्रिया-वाक्यमाश्रित्य उपपदमतिङित्यनेन कुम्भकार इति समासवत् सर्वाभीष्टस्य प्रदतिक्रियावाक्यमाश्रित्योक्तसूत्रेण समासः । शिष्टं जन्मादिप्रदमित्याद्यपद्यगतप्रयोगोपपादनावसरे अस्माभिरभिहितं तत्रैव प्रतिपत्तव्यम् । सर्वानिष्टस्य निवारकमिति षष्ठ्या विग्रहाश्रयणेऽपि कर्तरि चेत्यादिना समासविशेषो नायाति । शेषषष्ठ्या समासस्य निषेधा-भावात् इत्यादिकतत्तच्छक्तिप्रबोध इत्येतत् सर्वगतत्वाधिकरणीयानुभाष्यप्रयोगोपपादनावसरोक्तरीत्या ज्ञेयम् । रमयतीति राम इति यौगिकविशेष्यपदप्रयोगेणोक्तविशेषणद्वयसमर्थनं कृतम् । जनकशब्दादपत्यार्थेऽणि णित्वा-दादिवृद्धौ निष्पन्नजानकशब्दाट्टिड्ढाणञ् इत्यनेनाणत्वाङ्ङीपि जानकीशब्दनिष्पत्तेर्जानकी जाया यस्येति जायान्त-बहुव्रीहेर्जायायां तिङिति सूत्रेण तिङादेशे ङिचेति ङित्वादित्याकारस्यैव निकारे सति लोपोव्योर्वलीति यलोपे जानकीशब्दस्य जनकापत्यपुत्रवाचिताया अपि सत्त्वेन भाषितपुंस्कत्वेऽपि शेष्युक्तरीत्या न कोपधाया इति कोपधत्वे पुंवद्भावनिषेधप्राप्त्या स्त्रिया पुंवदित्यनेन पुंवद्रूपातिदेशाप्राप्तेः तत एव स्त्रीप्रत्ययप्रयोगस्य चाप्रसङ्गात् जानकीजानिमिति प्रयोगोपपत्तिरिति ज्ञेयम् । **मद्गुरुवन्दितमिति** । श्रीविद्याधीशतीर्थवन्दितत्वोक्त्या स्वस्य देवता-प्रीतिः गुरुप्रीतिद्वारकैवेति दृढनिश्चयः आविष्कृतः इति मङ्गलम् ॥ १ ॥

गुरुप्रीतिप्रार्थनारूपमङ्गलान्तरमाचरति **विद्वदिति** । वियूथ्या ये विद्वांसः ते मत्तेभा इव तेषां कुम्भ-लक्षणपर्वतविपाटने विचक्षणः इत्यर्थः । अत्र पर्वतविदारकत्वोक्तिसामर्थ्यात् विद्याधीशनृसिंहस्य बुद्धिलक्षण-नखराः वज्रकल्पाः सन्तीप्युत्प्रेक्षणीयमिति सूचितम् । अत एव नान्दीश्लोकावसरे सत्तर्कलक्षणनखैरित्युक्तम् । मे गुरुरिति मे मुदे इति स्थलद्वयेऽपि सम्बन्धः ॥ २ ॥

**यद्विद्याधीशेति**पद्यं प्रागेव व्याख्यातम् ॥ ३ ॥

यत्पदं वेदेति विशेषणविशेषोपादानेन मङ्गलानुष्ठानप्रयोजनोक्त्या सङ्गमयति **अविरोधलक्षणमिति** । **लक्षणम्** अध्यायः । **सूचयन्नेवेति** । एतत् ग्रन्थकृदेव स्पष्टयिष्यति । रूपं चेत्यनतरं गुणप्रधानभावेनेति शेषः । अत्र टीकाकृता तथोक्तत्वात् । तेन वाक्यभेददोषप्रसङ्गानकाशः । अधिकं तत्त्वनिर्णयटीकापञ्चिका-व्याख्याने अस्माभिरुक्तमस्ति, तत एव प्रतिपत्तव्यम् । अनुष्ठायेत्यस्य कायमनोभ्यां आचरणं कृत्वेत्यर्थः । उपनिबध्नातीत्यस्य तन्मङ्गलोपनिबन्धाख्यं वाचनिकं मङ्गलं आचरतीत्यर्थः । सूचयन्नेवेति प्रागुक्तसूचन-प्रकारं दर्शयति **अत्र वेदेत्यादिना । येभ्यो युक्त्यादिभ्य इति** । अत्र च विरोधिनो युक्त्यादयः । इति तस्य विरोधिनः इत्यादेः मूलेऽथरूपपुरस्कारेणोक्तेः तदनुसारेण पुल्लिङ्गप्रयोगो युक्तः । याभ्यो युक्त्यादिभ्यस्ताः युक्त्याद्याः वेति पाठस्तु स्वरस एव । **ते चेति** । विमतिशब्देन त्रयोऽप्यर्थाः इत्यर्थः । **वेदसंवेद्यम्** इत्यस्य व्याख्यानं वेदसमन्वयसिद्धम् इति । **पदमित्यस्यार्थमिति** । कटाक्षेणापीति पाठानुसारेण टीकायां अयं युक्तम् ।





टीकायामेव वा अभिपदस्थाने अपिपदं योज्यम् । तथैव पाठोऽप्यस्ति । उत्तरपादीय-'नैवं विरुध्यते अन्वयं प्रती'तिभाष्यसम्बन्धिमूलानुसारेण 'नान्यथयितुं शक्नुवन्ति' इत्यर्थः उक्तः । वेदसंवेद्यं इत्यादेरुक्तरीत्या अर्थाकरणे बाधकमाह **अन्यथेति** । वेदवेद्यत्वमात्रपुरस्कारेण तदाक्षेपतत्परिहारयोः एतदध्याये प्रवृत्त्यभावादिति भावः ।

**स०व्र०**— द्वितीयाध्यायार्थत्वेन परमात्मानं स्तौति **यत्पदमिति** । यत्स्वरूपमित्यर्थः । **कुमतयः** कुत्सिता मतयः । साकल्येनाविषयीकरणेऽपि कथञ्चित् कुमतिविषयत्वं सम्भवतीत्यत आह **कटाक्षेणापीति** । अथवा **यत्पदं** यस्य परमात्मनः पदं पादम् । **कुमतयः** कुत्सिता मतयो येषां पुरुषाः ।

**विठ्ठल०**— श्रीमदानन्दतीर्थार्यहृदयाम्भोजवासिने ।
सर्वदोषविदूराय कमलापतये नमः ॥

**श्रियःपतिम्** एतदध्यायोक्तगुणविशिष्टतया स्तुवन् प्रणमति **यत्पदं श्रुतिसंवेद्यमिति** । **यत्पदं** यत्स्वरूपम् । **कटाक्षेणापीति** । भगवद्विषयकज्ञानमत्यल्पमपि न सम्पादयितुं शक्ता इत्यभिप्रायः । **विमतयः** विरुद्धमतियुक्ताः विप्रतिपत्तयो वा ।

**चषकः**— त्रयीतात्पर्यविषयगुणरत्नौघसंस्कृतः ।
दुर्दर्शः कुदृशामव्यादपाङ्गैर्मां हयाननः ॥ १ ॥

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः ।
सुनन्दतात्सेवया मे भक्त्यलङ्कृतयाऽनया ॥ २ ॥

प्रथमलक्षणीयतृतीयचरणस्थभूवादिसूत्रं व्याचक्षाणेन भाष्यकृता 'वकारागमोऽयं मङ्गलार्थः । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते, वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ता यथा स्युरि'ति भाष्ये भाषणात् प्रकृतग्रन्थस्य वीरपुरुषायुष्मत्पुरुषत्वयोरध्येतॄणां माङ्गलिकतायाश्च सिद्ध्ये ग्रन्थमध्येऽनुष्ठितं श्रीजान्युपास्तिरूपं प्रकृतलक्षणप्रतिपाद्यविमनीषिदुष्प्रतिपदत्वगुणविशेषितत्वोपरक्तस्तुतिरूपं च मङ्गलमनुपकण्ठवर्तिविनेयाधिकरणकतत्कर्तव्यताप्रतिसंहित्यै लक्षणादावुपनिबध्नाति **यत्पदमिति** । अत्र च कृत्यान्तेन वृत्तलक्षणार्थमनूद्य लकारान्तोत्तरदलेन तादृशार्थनिरूपितसङ्गतिविशेषितत्वेन वर्तिष्यमाणलक्षणार्थमेकवाक्यताधिगत्यै ध्वनयति । द्विर्वचनेचि, अनुदात्तपदमेकवर्जम्, आद्यमिदं नगरमित्यादाविव संवेद्यमित्येतत् अर्शआद्यजन्तमिति विभाव्य एतत्पद्याशयं चन्द्रिकाविरोधलक्षणीयप्रकाशे । 'आम्नायोदितकल्याणगुणं श्रीरमणं भजे । यद् द्रष्टुं नेशतेऽपाङ्गवीक्षयापि कुबुद्धयः' इति प्राकाशयन् परिमलकृत इति त्रयीतात्पर्येत्यादिना तथैव प्राकाशयाम । **विमतयः** विरुद्धमतियुक्ताः । पञ्चम्यर्थे बहुव्रीहिणा वादिनो वा समानाधिकरणतत्पुरुषेण चतुर्विधविरोधिगोचरप्रतीतयो वा विमतिपदबोध्याः, ते च वेदसमन्वयसिद्धमर्थमन्यथयितुं न शक्नुवन्तीत्यर्थ इत्यप्या-





र्तीथपन् । इदं तु वैशेष्यमेतन्मते आद्यतृतीययोर्जानाति मन्थाचल इत्यादाविव तुमुन्प्रकृतिभूतेक्षतिः अन्यथा-नयनरूपगौणार्थः, द्वितीयवर्णके मुख्यार्थः कटाक्षपदमपि तथैवेत्यवसेयम् ।

**ए०बा०**— मध्येमध्येऽप्याचरितानि मङ्गलानि निबध्नन्ति **यत्पदमिति** । समस्तवेदसंवेद्यं **यत्पदं** यत्स्वरूपम् । **विमतयः** कुयुक्त्यादिभिः विरुद्धा मतयो येषां ते दुर्जनाः । कटाक्षेणापि नेत्रान्तेनापि वीक्षितुं **न क्षमन्ते** । अल्पमपि वीक्षितुं न शक्नुवन्तीति भावः । 'अपाङ्गौ नेत्रयोरन्तौ कटाक्षोपाङ्गदर्शनमि'त्यमरः । तं **श्रियः पतिम् उपास** इत्यन्वयः । सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणि । ध्यानरूपा परा चैवे-त्यादेः ।

यद्वा 'भूषयन्न योधि', 'तां सुते', 'कीर्तिं', 'बळित्थे'त्यादि वेदसंवेद्यं, यत्पदं = यस्य वायोः पदं स्वरूपम् । तदुक्तं श्रीमन्महाभारततात्पर्यनिर्णये चरमेऽध्याये— 'भूषयन्न योधि बभ्रूषु नम्नते बळित्था तद्वपुषे धायि दर्शतम् । तांसुते कीर्तिं मघवन्महित्वेत्यादीनि सूक्तानि च तत्प्रमाणमि'ति विमतय इत्यादि प्राग्वत् । 'तꣳहासुराविदध्वसुर्यथाश्मानमाखणमृत्वोविध्वंसेते'ति श्रुतेः । **श्रियः** भारत्याः **पतिं** वायुमुपासे । 'शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्तिते'ति निर्णयोक्तः । एवमग्रेऽपि ॥ १ ॥

**॥ इति मङ्गलाचरणम् ॥**

* * *

**॥ अथ पूर्वापरसङ्गतिप्रदर्शनम् ॥**

**॥ तत्रादौ विशेषसङ्गतिप्रदर्शनम् ॥**

**॥ अथ तत्राप्यादौ प्रथमाध्यायार्थसङ्गतत्वेन द्वितीयाध्यायार्थकथनम् ॥**

**॥ अथ तत्र प्रथमाध्यायार्थानुवादः ॥**

२ **सु०**— एकवाक्यता(दि)सिद्धये प्रथमाध्यायार्थसङ्गतत्वेन द्वितीयाध्यायार्थं विवक्षुरबुद्धिस्थेन सङ्गतेर्दर्शयितुमशक्यत्वात् प्रथमाध्यायार्थं तावदनुवदति **उक्त इति** ।

## अनु०— उक्तः समन्वयः साक्षात्

(सकल)जगज्जन्मादिनिमित्तकारणे सार्वज्ञ्यसर्वैश्वर्याद्यनन्तगुणपरिपूर्णे अविद्या-द्यवद्यगन्धविधुरे परे ब्रह्मणि नारायणे स्वरवर्णपदवाक्यमहावाक्यरूपस्य समस्तस्य शास्त्रस्य, **साक्षात्** परममुख्यया वृत्त्या न तु लक्षणया, तथा महातात्पर्येण न तु पारार्थ्येन, **समन्वयः**, प्रथमेऽध्याये, समर्थित इत्यर्थः ।





**यद्यपि समन्वयशब्देनैव साक्षादित्यर्थो लभ्यते, तथाऽपि परकीयसंशब्दव्याख्यान-निरसनेऽवहितैर्भवितव्यमिति सूचनाय तद्व्याख्यानमिदं कृतमित्यदोषः । अथवा सम-न्वयशब्देन मुख्यया वृत्त्याऽन्वयः प्रतीयते, परममुख्यया तु वृत्त्या अन्वयं दर्शयितुं साक्षात् इत्युक्तम् । यद्वा न प्रधानपरमाण्वादिनिरसनेन उपादानत्वादिप्रतिपादनेन च परम्परया, किन्तु साक्षादेवेत्यनेनाचष्टे ।**

**परि०— एकवाक्यतासिद्धय इति** । पादचतुष्टयात्मकेऽस्मिन्निति योज्यम् । एकवाक्य-तादीति क्वचित्पाठः । तत्रादिपदेन पूर्वोत्तरभेदसिद्धये चेत्यपि ग्राह्यम् । द्वितीयाध्यायार्थं विवक्षुरि-त्यन्वयः । 'अर्थैकत्वादेकं वाक्यमि'त्युक्तं जिज्ञासानयसुधायाम् । कथं विवक्षुरित्यतः **प्रथमा-ध्यायार्थसङ्गतत्वेनेति** । 'ततो विष्णुरिच्छापूर्वकमश्रमः । करोति पितृवद्विश्वं पूर्णाशेषगुणात्मक' इति पूर्वपादान्तोक्तं विभक्तिपरिणामेन अनुषज्य योजयति **जगज्जन्मादीति** । जन्मादिहेतुत्वेन लब्धं ब्रह्मपदेनोक्तमाह **सार्वज्ञ्येत्यादि** । अत एव **अविद्याद्यवद्यगन्धविधुर इति** । ननु सकलगुण-पूर्णत्वस्य प्रथमाध्यायार्थत्वात् तदनुवादस्यैव कर्तव्यत्वेन अविद्याद्यवद्यगन्धविधुर इत्यस्य द्वितीया-ध्यायार्थत्वेन कथं तदनुवाद इति चेन्न । अर्थात्सिद्धस्यापि तदर्थत्वात् । प्रकृते च यस्मि-न्यस्मिन्नधिकरणे यो यो गुण उच्यते तद्विरोधिदोषराहित्यस्यार्थाल्लब्धत्वात् तदर्थत्वेनानुवादो युक्त एव । अत एव सार्वज्ञ्यसर्वैश्वर्याद्यनन्तगुणपरिपूर्ण इत्युक्त्या सार्वज्ञ्यादिविरोध्यविद्यादिदोषराहित्य-मेवानूदितवानिति भावः । गुणपूर्णत्वं निर्दोषत्वं च सूत्रादिस्थब्रह्मपदलब्धमिति भावेनोक्तं **ब्रह्म-णीति** । तच्च ब्रह्म जन्मादिहेतुत्वलक्षणबलात् चिदचिद्विलक्षणमेव न जीवादिरूपम् । येन ततः सार्वज्ञ्यादिगुणपूर्त्यदिरलाभः स्यादिति भावेनोक्तं **पर इति** । साक्षादित्यनुवादः । परमेत्यादि व्याख्या । **पारार्थ्येनेति** । धर्मादिशेषत्वेनेत्यर्थः । पौनरुक्त्यमाशङ्क्य निराह **यद्यपीति** । समन्वय-शब्दस्थसंशब्देनेत्यर्थः । **इत्यर्थो लभ्यत इति** । साक्षात्पदस्य यः परममुख्यत्वरूपोऽर्थ उक्तः स लभ्यत इत्यर्थः । तथैव समन्वयसूत्रादावुक्तेरिति भावः ॥ **परकीयेति** । अमुख्यवृत्तिरूपेत्यर्थः । तद्व्याख्यानं = संशब्दव्याख्यानम् । **उपादानत्वादीति** । प्रकृतिश्चेत्यादिसूत्रैः (ब्रह्मणः) उपादानत्व-प्रतिपादकवाक्यमुपादानपरत्वेन ब्रह्मणोऽप्युपादानत्वात्तत्परम् इति परम्परया समन्वयप्रतिपादनेन च इत्यर्थः ॥ **परम्परयेति** । प्रधानादिस्वरूपस्यैव निरासे ब्रह्मण उपादानत्वे च साधिते सति सदेव सोम्येत्यादेर्निरर्थकत्वायोगेनार्थादीश्वरार्थत्वं सेत्स्यतीत्येवं न भवति किन्तु प्रधानादिस्वरूपे सत्यपि क्वचिद्वाक्ये तस्य प्रतिपाद्यत्वेऽपि परममुख्यवृत्त्या साक्षादेवेत्यर्थः ।





**गु०दी०— परकीयसंशब्दव्याख्याननिरसनेऽवहितैर्भवितव्यम्** इत्यत्र परकीयव्याख्यानं सं सकल-शब्दानां लक्षणया वृत्त्येति । 'विकारशब्दान्नेति चेदि'त्यादिनाऽऽशङ्किताः विरोधाः तत्तत्प्रकरणगतश्रौतमयडादि-शब्देनैव प्रसक्तत्वादन्तरङ्गाः । पाशुपतादिस्मृत्या श्रुत्यप्रामाण्यादिना समयेन श्रुतीनां परस्परविरोधेन चात्र आशङ्क्यमानविरोधास्तु बहिरङ्गा इति विवेक इति ।

**यादु०—** एकवाक्यतादीत्यत्रादिपदेन पूर्वोत्तराध्यायाभ्यां भेदो ग्राह्यः । सङ्गतेरेकवाक्यताप्रयोजका-काङ्क्षाजनकज्ञानविषयरूपत्वात् तद्वचनेनैकवाक्यतासिद्धिः । असङ्कीर्णार्थान्तरतावचनेन च पूर्वोत्तराध्यायभेद-सिद्धिरित्यवगन्तव्यम् । मायाशबलव्यावृत्तये **अविद्याद्यवद्यगन्धविधुर इति** । इदं च अदृश्यत्वाद्यधिकरणे-ऽभिप्रेतस्य 'निरनिष्टो निरवद्य' इत्यादिदोषाभावप्रतिपादकश्रुतिसमन्वयसिद्धस्यानुवादाय उक्तमिति ज्ञातव्यं 'सर्व-धर्मोपपत्तेश्चे'त्यस्याध्यायान्तर्भावमुपपादयितुम् अनन्तगुणपरिपूर्ण इत्यादि विशेषणमित्यप्याहुः ।

**पारार्थ्येनेति** । उपासनादिविधिशेषत्वेनेत्यर्थः । **समन्वयशब्देनेति** । समन्वयशब्दान्तर्गतसंशब्देने-त्यर्थः । **साक्षादित्यर्थ इति** । साक्षादित्यस्य योऽर्थ उक्तः स लभ्यत इत्यर्थः । **तद्व्याख्यानमिति** । संशब्दव्याख्यानमित्यर्थः । **प्रधानपरमाण्वादिनिरासेनेति** । परेण चतुर्थपादे तथाऽभिहितत्वात् तन्निरासायेदं व्याख्यानमिति मन्तव्यम् ।

**वं०प०— एकवाक्यतादीति** । स्वस्मिन्द्वितीयेऽध्याय इति शेषः । आदिपदेन पूर्वोत्तराभ्यामध्या-याभ्यां भेदसिद्धय इति ग्राह्यम् । अबुद्धिस्थे = प्रथमाध्यायेन । साक्षादित्यस्य व्याख्यानान्तरं **तथेति** । उक्त इत्यस्य व्याख्यानं **समर्थित इति । साक्षादित्यर्थ इति** । परममुख्यया वृत्त्येत्ययमर्थ इत्यर्थः । 'योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वय' इत्युक्तेरिति ध्येयम् । **व्याख्यानेति** । लक्षणारूपेत्यर्थः । **तद्व्याख्यानं** संशब्द-व्याख्यानम् । **उपादानत्वादीति** । परमाण्वादीनामिति शेषः । **परम्परयेति** । परिशेषाद्भगवतो निमित्तत्वं प्रतिपादितं भवतीत्येवंरूपयेत्यर्थः ।

**कं०रा०— एकवाक्यतेति** । प्रथमद्वितीयाध्याययोरिति शेषः । उक्तसमन्वयः साक्षादित्यस्य परम-मुख्यया वृत्त्येत्येकार्थानभिधायार्थान्तरमाह **तस्येति** । **समन्वयशब्देनेति** । समन्वयशब्दस्य परममुख्य-वृत्त्या योऽन्वयस्तद्वाचितया तेनैव साक्षादित्यनेन वक्तव्यार्थो लभ्यत इत्यर्थः । **परकीयेति** । संशयेन सकलवेदान्तगतपदानां लक्षणया ब्रह्मप्रातिपदिकार्थमात्रपरत्वमुच्यत इति यत्परकीयं संशब्दव्याख्यानं तन्निरसने शिष्यैरवहितैर्भवितव्यमिति सूचनाय संशब्दव्याख्यानं साक्षात् इत्यनेन कृतमिति न तस्य वैयर्थ्याख्यदोष इत्यर्थः ।

**श्रीनिधि०— अविद्याद्यवद्यगन्धविधुर इति** । तदधीनत्वादर्थवदित्यत्र दुःखादिदोषासमवायेनैव दुःख्यादिशब्दसमन्वयस्य साधितत्वादिति भावः । **परकीयसंशब्देति** । तात्पर्यकमेव संशब्दार्थो न तु मुख्य-





वृत्तिरिति व्याख्याननिरसन इत्यर्थः । भास्करेणोपादानत्वं प्रतिपादितम् । प्रधानपरमाण्वादिनिरसनेन मायिना ब्रह्मण उपादानत्वसिद्ध्यर्थं प्रधानपरमाण्वोर्निरासः कृतः ।

**शे०वा०—** मूले 'उक्तः समन्वयः साक्षादि'ति पूर्वाध्यायार्थानुवादवैयर्थ्यशङ्कां तत्प्रयोजनप्रदर्शनेन परिहरति **एकवाक्यतादीति** । स्वस्मिन्निति शेषः । आदिपदेन पूर्वोत्तरभेदसङ्ग्रहः । अध्यायार्थानुक्तौ हि कुतोऽस्य वाक्यसमुदायस्यैकवाक्यत्वं कुतश्च पूर्वोत्तराभ्यां भेद इति शङ्क्येत । तदुक्तौ ह्यविरोधलक्षणैकार्थप्रतिपादकत्वादेकवाक्यत्वस्य तस्य पूर्वोत्तरव्यावृत्तत्वात् पूर्वोत्तरभेदस्य च सिद्धिरिति भावः । नन्वेवमविरोधः साध्यत इत्यध्यायार्थोक्त्यैव स्वस्मिन्नेकवाक्यत्वस्य पूर्वोत्तराभ्यां भेदस्य च समर्थितत्वात् भाष्ये 'अत्र' इत्यस्य आनर्थक्यमित्यतोऽध्यायार्थोक्त्या एकवाक्यत्वादिसिद्धावप्यसङ्गतार्थप्रतिपादने प्रेक्षावदप्रवृत्त्या तत्प्रवृत्त्यर्थतया सङ्गतेरप्यवश्यं दर्शनीयत्वात् तत्सूचकतया 'अत्र' इत्यस्यार्थवत्त्वोपपत्तेः नानर्थक्यमित्याशयेन प्रथमाध्यायार्थसङ्गतत्वेनेत्युक्तम् । **दर्शयितुमशक्यत्वादिति** । सङ्गतेः सम्बन्धिकपदार्थतया सम्बन्धिनिरूपणाधीननिरूपणत्वादिति भावः । 'अविरोधोऽत्र साध्यते' इति द्वितीयाध्यायार्थस्याप्युत्तरत्र कथनात् तावदित्युक्तम् । प्रकृत्यधिकरणे परोक्तोपादानत्वनिरासायाह **निमित्तकारण इति** । उपादानत्वे ब्रह्मणो निर्विकारत्वानुपपत्तिः विवर्ताधिष्ठानत्वे तु, श्रुतौ 'यतो वा इमानि भूतानि जायन्ते' इति निर्देशः, सूत्रे जन्मादीति निदेशश्चासङ्गतः स्यात् । न हि शुक्तिकातो रजतं जायत इति व्यपदेशोऽस्तीति भावः । द्युभ्वादीति तृतीयपादे परोक्तस्य निर्गुणे समन्वयस्य निरासं सूचयितुमाह **सार्वज्ञ्येत्यादि** । पूर्वाध्याय एव प्रथमद्वितीयपादयोः परोक्तस्य मायाशबले ब्रह्मणि समन्वयस्य निरासं सूचयितुमुक्तम् **अविद्यादीति** । नारायणस्य अपरब्रह्मत्वमिति परमतनिरासायोक्तं **परे ब्रह्मणीति** । प्रधानस्याशाब्दत्वं चतुर्थपादार्थ इति परमतमश्रद्धेयमिति भावेनाह **स्वरेत्यादि** । यद्वा समन्वयादित्यत्र कात्स्र्न्यं संशब्दार्थ इत्याशयेनोक्तं **स्वरेत्यादि** । **न त्विति** । परमत इवेति शेषः । **पारार्थ्येनेति** । उपासनाविधिशेषत्वेनेत्यर्थः । समन्वयसूत्रे तस्योक्तत्वेऽप्यानन्दमयोऽभ्यासादित्यादिनाऽध्यायेन तस्यानुक्तत्वादुक्तपदास्वारस्यमित्यत उक्तशब्दः समर्थनरूपतद्विशेष इत्याह **समर्थित इति** । **समन्वयशब्देनैवेति** । सौत्रसमन्वयशब्दान्तर्गतसंशब्देनेत्यर्थः । **साक्षादित्यर्थ इति** । साक्षादित्यस्य योऽर्थः परममुख्यादिरुक्तः स इत्यर्थः । **लभ्यत इति** । समिति ह्युपसर्गेण परममुख्यार्थ उच्यत इति वक्ष्यमाणप्रकारेणेति शेषः । ततश्च साक्षात्पदानर्थक्यमिति भावः । व्याख्यानव्याख्येयभावाश्रयणान्न वैयर्थ्यमिति भावेन, किं व्याख्यानेनापीत्यतः परकीयसंशब्दव्याख्याननिरासस्तत्प्रयोजनमित्याशयेनाह **तथाऽपीति** । **परकीयेति** । समीचीनोऽन्वयः **समन्वयः** समीचीनता त्वन्वयस्य तात्पर्यवत्ता, सा च लाक्षणिकेऽप्यर्थे शब्दानां सम्भवतीति न समन्वयसिद्ध्यर्थं वाच्यत्वापेक्षेति परकीयव्याख्यानेत्यर्थः । एतन्निरासप्रकारश्च 'कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम्' इतीक्षत्यधिकरणोक्तरीत्या अनुसन्धेयः । व्याख्यानव्याख्येयभावाश्रयणमगतिका गतिरित्यपरितुष्यन्नाह **अथवेति** । **मुख्यया वृत्त्याऽन्वय इति** । एतच्च कारणाभावेऽपि सङ्कोचाभ्युपगमेन प्रवृत्त-'मुख्यार्थो भगवान्विष्णुरि'ति समन्वयसूत्रीयानुव्याख्यानानुसारेणोक्तम् । अत एवास्वरसात् साक्षाच्छब्दस्वारस्यानुसारेण पक्षान्तरमाह **यद्वेति** ।





**परम्परयेति** । कारणवाक्यानां प्रधानादिपरत्वनिरासेन ब्रह्मण उपादानत्वादिप्रतिपादनेन च ब्रह्मपरत्वं सिद्ध्यतीत्येवं परम्परयेत्यर्थः । चतुर्थपादे परेण कारणवाक्यानां ब्रह्मणि परम्परया समन्वयसिद्धेरङ्गीकारात् तन्निरासाय साक्षादित्युक्तमिति भावः ।

**वा०र०—** एकवाक्यतायाः आदिपदोक्तपूर्वोत्तराध्यायभेदस्य च 'परस्परविरोधपरिहाराय पूर्वोत्तरपाद-भेदस्य स्वस्मिन् एकवाक्यतायाश्चे'ति भिन्नवाक्यत्वादिति च लिङ्गपादादिस्थमूलं मनसि निधाय शेषं पूरयति **स्वस्मिन् इतीति** । अनेन स्वस्मिन् एकवाक्यता च आदिपदोक्तः पूर्वोत्तरभेदश्च तदुभयसिद्धये इति व्याख्यातं भवति । अन्यथाख्यातिस्थं एकवाक्यत्वसङ्गत्या आनयनमपि अज्ञानमूलमिति सूचितम् । एकवाक्यत्वसिद्धये इत्यस्य सङ्गतत्वेनेत्यत्र योजनात् । आदिपदोक्तपूर्वोत्तराध्यायभेदसिद्धेरपि प्रयोजनत्वापत्तिश्च । द्वितीयाध्यायार्थ-वचनफलत्वेन तद्भेदसिद्धियोजनेऽपि अर्धजरतीयापत्तिः । असङ्कीर्णार्थान्तरवचनेनैव स्वस्मिन् एकवाक्यतायापि सिद्ध्या उभयपरत्वेन योजनीयत्वाच्च । एकवाक्यताप्रयोजकेत्यादिना उक्तायाः सङ्गत्या लब्धायाः एकवाक्यतायाः वादादिस्थले नैयायिकादिभिः उक्तायाः पूर्वाध्यायनिरूपितत्वेन पूर्वेण एकवाक्यतायाः पूर्वेण भेदस्य च इत्यर्थ-प्राप्तेश्च । लिङ्गपादीयोदाहृत-स्वस्मिन्नेकेत्यादिमूल-भवदीयतद्व्याख्यानाभ्यां विरोधश्च । नन्वस्याध्यायस्याविरोध-लक्षणैकार्थत्वेनैकवाक्यत्वे सतीति उत्तरमूलविरोधश्च । अधिकं वाक्यार्थविनोदे ज्ञेयम् । पूर्वोत्तरेत्यत्र अध्यायेति स्पष्टत्वान्नोक्तम् । **तस्य च पूर्वोत्तरेति** । अविरोधलक्षणार्थप्रतिपादकत्वस्येत्यर्थः । एकपदान्तर्भवितिं वा स्वरूप-कथनं तत्पदमिति बोध्यम् । सिद्ध्यतीत्यनन्तरं नोक्तशङ्केति भाव इति पाठः । तथापाठाभावे तावान् शेषः पूरणीयः । **अत्रेत्यस्यार्थवत्त्वेनेति** । इदं च अत्रोक्तार्थ इत्याद्युत्तरमूले स्पष्टम् । **परोक्तेति** । प्रकृत्यधिकरणे परेणोक्तम् । यदुपादानत्वं तन्निरासायेति योज्यम् । **इति व्यपदेश इति** । उपलक्षणं चैतत् । शुक्तिकातो रजतस्य जन्म भवतीति व्यपदेशश्च नास्तीत्यपि ज्ञेयम् । **प्रथमद्वितीयपादयोरिति** । अध्यायान्तरसम्बन्धिनोरपि तयोः प्रतीतिं वारयितुं उक्तं **पूर्वाध्याय एवेति** । तत्स्थयोरेवेत्यर्थः । **अपरेति** । तन्मते सर्वधर्मरहितस्यैव परब्रह्म-त्वाभ्युपगमादिति भावः । **प्रधानस्येति** । स्वरेत्याद्युक्तौ हि चतुर्थपादेऽपि समन्वेतव्यशब्दयुक्तवाक्यविचार एवास्ति । न तु प्रधानशब्दत्वप्रतिपादनपरः कोऽपि सूत्रभागोऽस्तीति लाभेन तन्मतनिराससिद्धेरिति मूलाशय इति भावः । अत्र पक्षे लक्षणाश्रयण भवतीत्यपरिशेषात् पक्षान्तरमाह **यद्वेति** । **उपासनाविधीति** । आत्मेत्येव उपासीतेति उपासनविधौ हि कार्यमेव प्रधानतया प्रतिपाद्यम् । तच्छेषत्वेनेत्यस्य तदुपासनानिरूपकब्रह्मज्ञाने उपासनायाः निरूपणानुपपत्त्या तदुपासनानिरूपणार्थत्वेनेत्यर्थः । **तस्येति** । समन्वयस्येत्यर्थः । एवमुत्तरत्र । **तद्विशेषेति** । उक्तविशेषेत्यर्थः । **वक्ष्यमाणेति** । उपासनापाद इति पूरणीयम् । एवंजातीयके भगवत्पादैरेव प्रमाणलक्षणादिरूपे एवकारार्थतया अन्ययोगव्यवच्छेदाद्यसम्भवशङ्कादिकं टीकाकाराणाम् असङ्गतम् । ततश्च भवद्भिः प्रमाणलक्षणादिकं नाभिधेयमित्येव एवकारार्थत्वेन प्राप्तेरित्याद्याशयेन अत्रत्य'एव'कारार्थमाह **ततश्च इति** । **एतच्च कारणाभावेऽपीति** । परममुख्यार्थत्वरूपमुख्यार्थे सङ्कोचस्वीकारेण मुख्यार्थ इति यद्व्याख्यानं तत्सङ्कोचे कारणाभावेऽपि प्रवृत्तमित्यर्थः । **अत एवेति** । कारणाभावेऽपि सङ्कोचाभ्युपगमरूपास्वरसादेवेत्यर्थः ।





अनेनैव पूर्वत्र सङ्कोचाङ्गीकारानुपपत्तिरिति दूषणं उद्धर्तुमेवेह समन्वयः साक्षादित्यनेनैव संशब्दार्थपरममुख्यार्थत्वमुक्तमिति ध्वनितं भवति । निरासेनेत्यस्य ब्रह्मपरत्वमित्युत्तरेणान्वयः ।

**स०व्र०— एकवाक्यतादीति** । स्वस्मिन्नेवेति शेषः । आदिपदेन पूर्वोत्तराभ्यां भेदसिद्धये चेत्यपि द्रष्टव्यम् । क्वचित्पुस्तके एकवाक्यतासिद्धये इत्येव पाठः । 'ततो विष्णुरिच्छापूर्वकमश्रमः । करोति पितृवद्विश्वं पूर्णाशेषगुणात्मकः' इति पूर्वोक्तं विभक्तिविपरिणामेनानुषज्य योजयति **जगज्जन्मादीति** । ननु सकलगुणपूर्णत्वस्यैव प्रथमाध्यायार्थत्वेन तदनुवादस्यैव कर्तव्यत्वेन अविद्याद्यवद्यगन्धविधुरत्वस्य द्वितीयाध्यायार्थत्वेन कथं तदनुवाद इति चेन्न । अर्थात् सिद्धस्यापि तदर्थत्वात् । प्रकृते च यस्मिन् अधिकरणे यो यो गुण उच्यते तद्विरोधिदोषराहित्यस्यार्थात् तदर्थत्वेनानुवादो युक्त एव । अत एव टीकाकारः 'सार्वज्ञ्यसर्वैश्वर्याद्यनन्तगुणपरिपूर्णे'त्युक्त्वा सार्वज्ञ्यादिविरोध्यविद्यादिराहित्यमेवानूदितवान् । **उपादानत्वादिप्रतिपादनेन चेति** । प्रकृतिश्चेत्यादिसूत्रैः ब्रह्मणः उपादानत्वं प्रतिपाद्य कारणवाक्यानामुपादानपरत्वेन ब्रह्मणोऽपि उपादानत्वात् तत्परत्वमेवेति परम्परया समन्वयप्रतिपादनेनेत्यर्थः ।

**विठ्ठल०— एकवाक्यतासिद्धय इति** । प्रथमाध्यायेन सह द्वितीयाध्यायस्येकवाक्यतासिद्धये इत्यर्थः । सङ्गतिशून्यत्वे भिन्नवाक्यत्वापत्तेरिति भावः । पादचतुष्टयात्मके स्वस्मिन्नेकवाक्यत्वसिद्धय इति चार्थः । जन्मादिकारणत्वेन लब्धं प्रथमसूत्रगतब्रह्मपदेनोक्तं प्रदर्शितं **सकलजगज्जन्मादीत्यादि साक्षादित्यर्थः इति** साक्षादिति पदस्य योऽर्थः परममुख्यत्वरूपः स लभ्यत इत्यर्थः । **परम्परयेति** । प्रधानस्वरूपस्यैव निरासे सति सदेव सोम्येत्यादेर्निरर्थकत्वायोगादर्थादीश्वरार्थत्वं सेत्स्यतीत्येवंरूपेण न भवति किन्तु प्रधानादि स्वरूपे सत्यपि क्वचिद्वाक्ये तस्य प्रतिपाद्यत्वेऽपि परममुख्यया वृत्त्या साक्षादेवेत्यर्थः ।

**चषकः—** 'उक्तः समन्वय' इत्यानुपूर्वीकमौलानुवादस्य मन्दप्रयोजनताशङ्कां तत्फलवचनेनापहस्तयते **एकवाक्यतेत्यादि** । चरणचतुष्टयात्मके स्वस्मिन्नित्यादिः । आदिपदं पूर्वोत्तराध्यायवृत्तिप्रातिस्विकधर्मावच्छिन्नप्रतियोगिताकभेदयोः प्रेक्षावत्प्रवृत्तेश्च परिग्राहकम् । सिद्धिशब्दो निश्चयवचनो निर्वाहवचनश्च । प्रथमाध्यायार्थसङ्गतत्वेन तन्निष्ठकारणतानिरूपितकार्यतालक्षणया तद्वृत्तिकार्यतानिरूपितकारणतारूपया वा सङ्गत्या विशिष्टत्वेन एकार्थतात्पर्यकतारूपैकवाक्यतायास्तादृशभेदद्वयस्य चाधिगतिरविरोधरूपपूर्वोत्तरासङ्कीर्णार्थप्रदर्शनस्य प्रवृत्तिप्रतिबन्धकपूर्वापरग्रन्थासाङ्गत्यशङ्काविघटकतत्प्रतियोग्यनुयोगिकसङ्गतिप्रदर्शनस्य तु तादृशप्रवृत्तिनिर्वाहः फलमित्याशयः । इदं च मौलात्रेत्यंशलब्धम् । द्वितीयाध्यायार्थं अविरोधलक्षणम् । विवक्षुरित्यनुदात्तद्वचेः सन्नन्तादुकारे निष्पन्नो वचनगोचरेच्छाश्रयतारूपकर्तृताविशेषितमाचष्टे । **अबुद्धिस्थेन** विषयताप्रत्यासत्त्या स्मृत्यविशेषितेन । **अशक्यत्वादिति** । सङ्गतेः प्रतियोग्यनुयोगिप्रतिपत्त्यधीनप्रतिपत्तिकत्वादिति भावः । प्रथमाध्यायार्थानुवादेऽविरोधोऽत्र साध्यत इति द्वितीयाध्यायार्थाभिहित्यवधिकप्राथम्यद्योतनार्थस्तावच्छब्दः । ब्रह्मणः प्रकृतिनयेऽन्याभिहिता परिणाम्युपादानता विवर्तोपादानता च निर्विकारत्वस्य, 'यतो वा इमानि भूतानि जायन्त'





इति श्रौतजन्मादीतिसौत्रनिर्देशयोश्चानुपपत्तिप्रसङ्गेन न सङ्गच्छत इत्यधिगमयितुं निमित्तपदमुपात्तम् । प्रथमलक्षणतृतीयचरणेऽद्वैत्यभिहितनिर्गुणाधिकरणकशब्दसमन्वयमपहस्तयितुं **सार्वज्ञ्येत्यादि** । मन्दोपास्यमायाशबलव्यावर्तनाय **अविद्यादीति** । अदृश्यत्वादिनयाभिप्रेत 'निरनिष्टो निरवद्य' इत्यादिश्रुतिसमन्वयसिद्धप्रमेयानुवादरूपमेतत् । निर्गुणमेव परब्रह्म न तूपहितो नारायण इति मतान्तरं व्यवच्छेत्तुं परब्रह्मपदसमानाधिकरणनारायणपदोपादानम् । आद्यलक्षणीयस्तुरीयचरणः प्रधानाशब्दत्वगोचर इत्यवधीरयितुं समन्वयसूत्रघटकाद्योपसर्गांशार्थः । कात्स्न्यर्मिति ध्वनयितुं वा स्वरेत्यादि ।

**।। इति प्रथमाध्यायार्थानुवादः ।।**

* * *

**।। अथ तत्सङ्गतत्वेन द्वितीयाध्यायार्थोक्तिः ।।**

३ **सु०— एवं प्रथमाध्यायार्थमभिधाय तत्सङ्गतत्वेन द्वितीयाध्यायार्थमाह अविरोध इति ।**

अनु०— अविरोधोऽत्र साध्यते ।

**अत्र** उक्तेऽर्थे **अविरोधः** विरोधाभावः **अत्र** व्याचिख्यासिततया बुद्धिसन्निहिते द्वितीये(ऽध्याये) **साध्यते** ।

अनेन अस्याध्यायस्य अतीताध्यायेन कार्यकारणभावलक्षण(ा)सङ्गतिः सूचिता भवति । सकलशास्त्रस्य समन्वयेन जगज्जन्मादिकारणत्वे समस्तगुणपूर्णत्वेऽशेषदोषविधुरत्वे च परस्य ब्रह्मणोऽभिहित एव (हि) तत्र विरोधः स्फुरति । नान्यथा, निराश्रयत्वात् । विरोधस्फूर्ताविव तदभावसाधनस्यावसरो नेतरथा, अप्राप्तप्रतिषेधायोगात् । अतोऽतीताध्यायार्थस्य कारणत्वमेतदध्यायार्थस्य कार्यत्वं निश्चीयते ।

अथवा श्रुतिसमन्वयेनोपपादितोऽप्यर्थो न तावच्छ्रोतृणां दृढनिरूढो भवति, यावदत्र प्रतीते विरोधाभावो न साध्यते, विरोधेन श्रुतीनामेवाप्रामाण्यशङ्कनात् । तथा चानुपपादितकल्प एवापद्यते । विरोधाभावसाधने तु भवत्येव दृढनिरूढः । यथोक्तम्, 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' इति । अतो विपरीतकार्यकारणभावलक्षणा अनयोः सङ्गतिः ।





**ननूक्तार्थे विरोधस्तत्र तत्रैव परिहृतः, किमत्र परि(तत्किमपरमव)शिष्यते यदर्थमध्यायान्तरारम्भः । सत्यम्, प्रतिवक्ष्यत्यत्राचार्यः ।**

**परि०**— 'अत्रे'त्यनुवादेनार्थद्वयोक्तिः उक्तेऽर्थे द्वितीयेऽध्याये इति च । प्रथमाध्यायेन प्रकृतत्वादस्तूक्तेऽर्थे इत्येतदर्थकत्वं 'अत्रे'त्यस्य । द्वितीयेऽध्याये इत्येतदर्थकत्वं कथम् । तस्य अप्रकृतत्वादित्यत आह **व्याचिख्यासिततयेति** । **अनेनेति** । द्वितीयपादेन । सन्न्यायरत्नावल्युक्तां तावदादौ व्यनक्ति **सकलेति** । तां, उपलक्षणं मत्वा 'विरोधहीनस्य स्यात्समन्वयता यत' इति तार्तीयानुव्याख्योक्तां चाह **अथवेति** । **यथोक्तमिति** । तार्किकैः ॥ **विमृश्येति** । सन्देहमुत्पाद्येत्यर्थः । विचार्येति वा । स्वपक्षसाधनपरपक्षनिरासाभ्यां विमृश्य क्रियमाणमिति शेषः । परार्थनिर्णयलक्षणमिदम् । तेन स्वपक्षसाधनादिना विना जायमाने करस्थितामलकनिर्णये नाव्याप्तिरिति ध्येयम् । **तत्रतत्रैवेति** । 'विकारशब्दान्नेति चेन्न प्राचुर्यात्', 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधादि'त्यादिनेति भावः । **प्रतिवक्ष्यतीति** । 'विरोधस्सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्रतत्रगाः' इत्यादिना 'श्रुतेस्तु शब्दमूलत्वादि'त्यधिकरणान्ते प्रतिवक्ष्यतीत्यर्थः ।

**गु०दी०— प्रतिवक्ष्यत्याचार्य** इत्यनेन अभिप्रैति ।

**यादु०— अविरोधो विरोधाभाव इति** । नन्वविरोध इति कः समासः । न तावदव्ययीभावः । अविरोधमिति प्रयोगप्रसङ्गात् । नापि तत्पुरुषः । पूर्वपदार्थप्राधान्यासम्भवात् । तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् । समासान्तरं त्वसामर्थ्यादिना प्रतिहतम् । अतः कथमेतदिति चेदुच्यते । तत्पुरुष एवायम् । न चैवं पूर्वपदार्थप्राधान्यासम्भवः । अतिमालोऽतिसर्व इत्यादौ व्यभिचारेण तत्पुरुषे उत्तरपदार्थप्राधान्यनियमाभावात् । न च 'एतत्तदोरि'ति सूत्रे अनञ्समासवचनबलान्नञ्तत्पुरुषे उत्तरपदार्थप्राधान्यं नियतमेवेति वाच्यम् । एतद्वचनस्योपसर्जनत्वेऽपि नञ्समासे सर्वनामगणकार्यं भवतीत्यर्थज्ञापकतयाऽपि सावकाशत्वात् । अत एव सूत्रकारो 'न बहुव्रीहावि'ति बहुव्रीहावेव सर्वनामकार्याभावमाह नोपसर्जनत्वमात्रे । तथा च भाष्यकारीयस्य, गौणत्वमात्रे तत्प्रतिषेधस्य, प्रायिकत्वकल्पनमेव न्याय्यम् । ततश्च नञ्समासे उत्तरपदार्थस्योपसर्जनत्वेऽप्यसः अतस्मिन्नित्यादिकमुपपन्नमेव । अन्यथा अब्राह्मणः असुरोः अनुपलब्धिः इत्यादौ नञर्थतया प्रमाणप्रसिद्धानामन्यत्वविरोधाभावानां नञ्समभिव्याहृतोत्तरपदलक्ष्यत्वं वा, आरोपमात्रं नञर्थो विषयत्वं तु संसर्गः अन्यत्वादिकं त्वार्थिकमेवेति वा, अप्रामाणिकं बहुकल्पनीयं स्यात् । ततो वरं क्वचिदुपसर्जनत्वेऽपि सर्वनामकार्यं भवतीति कल्पनमतो नञ्तत्पुरुषे उत्तरपदार्थप्राधान्याभावे न किञ्चिद्बाधकमित्याशयः । अत एवाग्रे एतदेवाभिप्रेत्य वक्ष्यति





विरोधश्च समासे गुणभूत इति । **विमृश्येति** । अत्र विमर्शशब्देन सन्देहो विवक्षितः । पक्षप्रतिपक्षशब्दौ स्वपक्षसाधनपरपक्षोपालम्भपरौ । तथा च 'सन्देहपूर्वं स्वपक्षसाधनपरपक्षोपालम्भाभ्यां जायमानार्थावधारणं निर्णय' इति न्यायसूत्रार्थ ईक्षत्यधिकरणे प्रदर्शितोऽनुसन्धेयः । **अतो विपरीतेति** । पूर्वमापाततो जातं प्रथमाध्यायार्थविषयं ज्ञानं धर्मिज्ञानतयैतदध्यायार्थज्ञानकारणमित्यभिहितम् । इदानीं तस्मिञ्ज्ञाने परीक्षया प्रामाण्यनिश्चयानन्तरं यत् इत्थमेव इत्यवधारणात्मकं तद्विषयं ज्ञानान्तरं जायते तदेतदध्यायार्थज्ञानकार्यमित्युच्यते । अतः कारणत्वेनोक्तस्य कथं कार्यत्वेनोक्तिरन्योन्याश्रयप्रसङ्गादिति शङ्कानवकाश इति ध्येयम् । **तत्रतत्रैवेति** । 'विकारशब्दान्नेति चेन्ने'त्यादिभिः तत्रतत्राधिकरणे परिहृत इत्यर्थः । **प्रतिवक्ष्यत्यत्रेति** । 'विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते' इत्याद्यनुव्याख्याने परब्रह्मणो नारायणस्य सर्वस्माच्चेतनादचेतनाच्च वैशिष्ट्ये वैलक्षण्ये परमोत्कृष्टत्वेऽत्यन्तव्यावृत्तत्वे च यो युक्त्यादिविरोधः स एवात्र द्वितीये निरस्यते । तदन्ये ये विरोधाः शास्त्रसमन्वयविषयास्ते विकारशब्दादित्यादिना तत्रतत्रैवाधिकरणे परिहृता इति प्रतिवक्ष्यतीत्यर्थः ।

**वं०प०**— अविरोध इत्यत्र नञः पर्युदासार्थकत्वप्रतीत्या विरोधभिन्नं किञ्चित्साध्यत इत्यसङ्गतिः स्यादित्यतः प्रसज्यप्रतिषेधार्थतया व्याचष्टे **विरोधाभाव इति** । **विमृश्येति** । विमर्शशब्देन सन्देहो गृह्यते । ततश्च विमृश्य सन्देहं सम्पाद्येत्यर्थः । अत्र पक्षप्रतिपक्षशब्दौ स्वपक्षसाधनपरपक्षोपालम्भपरौ । तथा च सन्देहपूर्वकं स्वपक्षसाधनपरपक्षोपालम्भाभ्यां जायमानार्थावधारणं निर्णय इत्यर्थः ।

**कं०रा०**— **कार्यकारणभावेति** । अस्याध्यायस्य कार्यत्वं पूर्वाध्यायस्य तु कारणत्वमिति यः कार्यकारणभावः तल्लक्षणसङ्गतिरित्यर्थः । कथमेतदध्यायस्य कार्यत्वं पूर्वाध्यायस्य च कारणत्वमित्यतः पूर्वाध्यायस्यैतदध्यायनिरसनीयविरोधशङ्का विषयभूतसमन्वयसाध्यनारायणवैशिष्ट्योपस्थापकत्वेनैतदध्यायं प्रति हेतुत्वादनयोः कार्यकारणभाव इत्याह **सकलेति** । एतदध्यायस्य विरोधनिरासेन पूर्वाध्यायार्थस्थैर्यसाधकतया तद्धेतुत्वाद्विपरीतकार्यकारणभावलक्षणायानयोः सङ्गतिरित्याह **अथवेति** । ननूक्ते आनन्दमयादिशब्दसमन्वये विरोधस्य तत्र तत्राधिकरणे विकारशब्दान्नेति चेन्न प्राचुर्यादित्यादिना परिहृतत्वेनेतःपरं परिहरणीयस्यावशिष्टस्य विरोधस्याभावादेतदध्यायारम्भो व्यर्थ इति शङ्कते **नन्विति** । **प्रतिवक्ष्यतीति** । 'विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्रतत्रगा' इत्यत्र शास्त्रसमन्वयविषयविरोधस्य विकारशब्दादित्यादिना तत्रतत्राधिकरणे परिहृतत्वेऽपि जन्मादिसूत्रसिद्धनारायणसर्ववैशिष्ट्यविषयविरोधस्यापरिहृतत्वात् तत्परिहारार्थमेतदध्यायारम्भ इत्याचार्य एवात्र चोद्ये परिहारं वक्ष्यतीत्यर्थः ।

**श्रीनिधि०— अतीताध्यायार्थस्य कारणत्वमिति** । उपजीव्यत्वमित्यर्थः । **प्रतिवक्ष्यत्याचार्य इति** । 'हरेरेवमशेषेण सर्वशब्दसमन्वये । उक्ते विरोधहीनस्य स्यात्समन्वयता यतः । ततोऽशेषविरोधानां कृतेऽशेन निराकृतिः' इत्यादिनेति भावः ।





**शे०वा०—** नन्वत्र द्वितीयेऽविरोधः साध्यत इति द्वितीयाध्यायार्थमात्रोक्तेः कथमस्य भाष्यस्य पूर्वाध्यायसङ्गतत्वेनोत्तराध्यायार्थाभिधायकत्वमित्यतः अत्रेत्येतदावृत्त्याश्रयणात्तल्लाभ इत्याशयेन तथा योजयति **अत्रोक्तेऽर्थ इति**। नञोऽभावाद्यनेकार्थत्वात् तावदर्थतायाश्च प्रकृतेऽयोगादत्राभिमतमर्थविशेषं दर्शयति **अविरोधो विरोधाभाव इति**। अत्र च नञ्विशिष्टेन विरोधपदेनाभावविशेषस्य लक्षणया उत्तरपदार्थप्राधान्यप्राप्तेर्युक्तमस्य तत्पुरुषत्वम्। न च अक्षपरिसूपप्रतीत्यादौ उत्तरपदार्थप्राधान्येऽपि तत्पुरुषादर्शनादतिमालोऽतिसर्व इत्यादौ चासत्युत्तरपदार्थप्राधान्ये तद्दर्शनात् न तस्योत्तरपदार्थप्राधान्यनियम इति लक्षणाश्रयणमनर्थकमिति वाच्यम्। तत्पुरुषे उत्तरपदार्थप्राधान्यस्यौत्सर्गिकतया क्वचिद्बाधकेनापवादेऽप्यन्यत्र तस्याविकलतया लक्षणाश्रयणस्यावश्यकत्वात्। अस्तु वाऽन्यत्र तत्पुरुषो यथातथा। प्रकृतस्य नञ्तत्पुरुषत्वादुत्तरपदार्थप्राधान्यमावश्यकम्। नञ्समासस्योत्तरपदार्थप्राधान्यस्य भाष्यादिसिद्धत्वात्। तथा हि। न तावन्नञ्समासोऽन्यपदार्थप्रधान इत्याश्रयितुं युक्तम्। तथा सत्यब्राह्मणको देश इत्यादौ कप्प्रत्ययानुपपत्तेः। समासान्तरप्राप्तौ तदपवादकत्वेन नञ्समासस्यैव विधानेन तत्रापि न विद्यते ब्राह्मणो ब्राह्मण्यं यस्मिन्नित्यन्यपदार्थप्रधानकतत्पुरुषस्यैव प्रसङ्गेन बहुव्रीह्यप्रसङ्गेन 'शेषाद्विभाषा' इति बहुव्रीहौ विहितस्य कस्यानवकाशात्। किञ्चैवमस इत्यत्र तच्छब्दार्थस्य गौणत्वप्रसङ्गेन मुख्यत्यदादिविषयत्वं 'त्यदादीनामः तदोः सः सावनन्त्ययोरि'त्यादि त्यदादिकार्यम्, असर्वस्मा इत्यत्र सर्वशब्दार्थस्य गौणत्वेन तन्मुख्यार्थविषयकसर्वनामसंज्ञाऽप्राप्त्या स्मायादेशश्च न स्यात्। अत एव न पूर्वपदार्थप्रधानोऽयं नञ्समासः। न चोत्तरपदार्थप्रधानकत्वे काचिदियं कुसृष्टिः प्रसरतीत्युत्तरपदार्थप्रधानकत्वसिद्धिः। अत्र च लिङ्गम् 'एतत्तदोः सुलोपो' इत्यत्रानञ्समासग्रहणम्। अन्यथैतत्तदोरर्थद्वारेण सम्बन्धिनः सोर्लोपो विधीयमानः 'अनेषो ददात्यसो ददाति' इत्यत्र कथं प्राप्नुयात्। ततश्चोत्तरपदार्थप्रधानत्वात् नञ्समासस्य तत्सिद्धये युक्तं लक्षणाश्रयणम्। नन्वेवमपि पूर्वपदार्थप्राधान्यादव्ययीभावस्यापि प्राप्तेरविरोधमिति स्यादिति चेदत्र वदन्ति। न पूर्वपदार्थप्राधान्येनाव्ययीभावस्यात्र प्रसक्तिः। तथा सति पापाभावोऽपापमिति परकीये तत्पुरुषोदाहरणेऽपि पूर्वपदार्थस्याभावस्यैव प्राधान्येन तत्राप्यव्ययीभावप्रसङ्गात्। यदि च, यदाऽभावसामान्ये नञ् वर्तते तदा अर्थाभावेऽपापमित्यव्ययीभावेऽप्यभावविशेषविवक्षायां तत्पुरुष एव तस्य नञर्थत्वाभावेन पूर्वपदार्थप्राधान्याभावादिति मन्यसे; तदाऽत्रापि तुल्यम्। प्रकृतेऽप्यभावसामान्यविवक्षायामव्ययीभावप्रसङ्गेऽपि तद्विशेषविवक्षायामपूर्वपदार्थप्रधानत्वादेव नाव्ययीभावप्रसङ्ग इति। उक्तं चाग्रहणमिति ग्रहणाभावमात्रविवक्षायामव्ययीभावोदाहरणम्। अभावविशेषविवक्षायां तु तत्पुरुषस्येति। तच्चिन्त्यम्। तथा सति पापाभावोऽपापमिति तत्पुरुषोदाहरणेऽप्यभावत्वेनैव अभावभानेन अव्ययीभावस्यैव प्राप्तेः। यदप्यभावविशेषस्य नञर्थत्वं नास्तीति तदप्यसत्। निर्विशेषस्य सामान्यस्याभावात्। विशेषरूपेण वाच्यत्वं नास्तीत्यभिप्राये चाविघ्नमित्यादिरव्ययीभावो दत्तजलाञ्जलिः स्यादिति। अत्र ब्रूमः। अर्थाभावेऽव्ययीभावेन सह नञ्समासस्य वैकल्पिकत्वात्। अविरोधपदेऽभावेऽव्ययीभावपक्षेऽविरोधमिति प्रसङ्गेऽपि तत्पुरुषपक्षेऽविरोध इति पुलिङ्गं श्लिष्टमेव। वैकल्पिकत्वं च 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति 'अद्रुतायामसंहितम्' इति च भाष्यवार्तिकप्रयोगादवसीयते। अत एव चानुपलब्धिरविवादोऽविघ्नमित्यादि सिद्ध्यतीति सङ्क्षेपः। नन्वस्याध्यायस्य का पूर्वेण सङ्गतिर्यत्सूचकत्वम्





'अत्र' इत्यस्य स्यादित्यतः शृङ्गिग्राहिकतया तां दर्शयति **अनेनेति** । कथमनयोः कार्यकारणभाव इत्यत आह **सकलेति** । **अत इति** । द्वितीयाध्यायनिरसनीयविरोधशङ्काविषयभूतसमन्वयोपस्थापकतया पूर्वो द्वितीयस्य हेतुरिति यतो अत इत्यर्थः । तथा च समन्वयाक्षेपसमाधानार्थत्वादस्य तदनन्तरता युक्तेति भावः । अत्रेति-पदस्यावृत्तिं विनापि 'उक्त'पदस्वारस्येनैव सङ्गतिलाभेन तदावृत्त्याश्रयणेनोक्तसङ्गतिसमर्पणेऽरुचिं मनसि निधाय पक्षान्तरमारचयति **अथवेति** । अत्र न्यायसूत्रसम्मतिमाह **यथोक्तमिति** । अत्र पक्षप्रतिपक्षशब्दाभ्यां तत्साधनोपालम्भौ लक्ष्येते, विमर्शशब्देन च साधनोपालम्भविषयौ सम्भवासम्भवौ, द्विवचनेन मेलनम् । तथा च सम्भवात्सम्भवविषयीभूताभ्यां स्वपक्षसाधनोपालम्भाभ्यां परपक्षसाधनोपालम्भाभ्यां स्वपरपक्षसाधनोपालम्भ-सम्भवासम्भवाभ्यामिति यावत् । मिलिताभ्यां ताभ्यामर्थावधारणं निर्णय इति तर्कनिर्णयविषयलक्षणमेतदिति ज्ञेयम् । **विपरीतेति** । अतीताध्यायार्थस्य कार्यत्वमेतदध्यायार्थस्य कारणत्वमिति विपरीतेत्यर्थः । न चैवं द्वयोः परस्परापेक्षत्वादन्योन्याश्रयः । आपाततो जातस्य प्रथमाध्यायार्थज्ञानस्य द्वितीयाध्यायार्थकारणत्वेऽपि न तस्य द्वितीयाध्यायार्थकार्यत्वम् । यस्य चेदमित्थमेवेत्यवधारणात्मकज्ञानस्य कार्यत्वं न तस्य तत्कारणत्व-मिति तदनवकाशात् । **तत्रतत्रैवेति** । तेषु तेष्वधिकरणेष्वित्यर्थः । विकारशब्दान्नेति चेन्न प्राचुर्यादित्यादिनेति शेषः । **प्रतिवक्ष्यतीति** । 'विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्रतत्रगाः' इत्यादिना । द्वये विरोधाः परिहरणीया भवन्ति । द्वितीयसूत्रसिद्धसर्ववैशिष्ट्यविषयाः शास्त्रसमन्वयविषयाश्च । तत्र द्वितीया विकारशब्दादित्यादिना परिहृताः, न तु सर्ववैशिष्ट्यविषया इति तत्परिहारार्थमध्यायारम्भ इति वक्ष्यतीत्यर्थः ।

**वा०र०— नञोऽभावाद्यनेकेति** । 'तत्सादृश्यं अभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थः षट् प्रकीर्तित' इति भट्टोक्तेः सादृश्यादिषडर्थत्वादित्यर्थः । यद्वा स्वपरसम्मत्याऽभावान्यत्वविरोधरूपार्थ-त्रयवत्वादित्यर्थः । अत्र पूर्वपदभूतनञोऽर्थस्य प्राधान्यस्वीकृतौ तत्प्रधानकाव्ययीभावसमासप्राप्त्याऽविरोधमिति नपुंसकप्राप्तेः पुल्लिङ्गायोगप्रसङ्ग इत्याशङ्कां निरसयितुं नात्रोत्तरीभूतविरोधपदस्य विरोधार्थत्वं अभ्युपगम्यते । येन विरोधाप्राधान्यपूर्वपदार्थप्राधान्ययोः प्राप्त्याऽव्ययीभावशङ्का स्यात्, अपि तर्हि विरोधपदं विरोधाभावलक्षकं अङ्गीक्रियते । ततश्च तत्पदार्थतया विरोधाभावस्य प्राप्तेः । विरोधपदस्यैव प्राधान्यात् युज्यते तत्पुरुषः । न च अन्यत्रादृष्टविरोधपदस्य तदभावलक्षकत्वं कथमत्र स्वीक्रियतेति वाच्यम् । केवलस्य तस्य तदभावलक्षकत्वा-दर्शनेऽपि नञ्विशिष्टस्य तस्य तल्लक्षकत्वोपपत्तेः । अत एव नञ्सूत्रीयभाष्यादौ केवलो ब्राह्मणशब्दः प्रयुज्यमानः प्रसिद्धिवशात् मुख्य एव ब्राह्मणार्थे प्रत्ययमादधाति । नञ्प्रयोगे तु निवृत्तिपदार्थकता ब्राह्मणशब्दस्य प्रतीयते । निवृत्तपदार्थो मुख्यं ब्राह्मण्यं यस्मिन् क्षत्रियादौ तदर्थकतेति यावत् । यद्वा निवृत्तः पदार्थो यस्य स तथोक्तः । ब्राह्मणसदृशाभिधायकता ब्राह्मणशब्दस्येति यावत् । यथा प्रतिष्ठते: इत्यत्र तिष्ठतिरेव यद्यपि गतिवचनः तथापि तस्मिन् केवले प्रयुज्यमाने प्रस्थानं न गम्यते इति द्योतकत्वेन प्रशब्दोऽपेक्ष्यते, तथेह नञ् इत्यादिना नञ्-समभिव्याहारेणार्थान्तरपरत्वं ब्राह्मणशब्दस्य वर्णितम् । **इयांस्तु विशेषः** । तत्र मुख्यलक्षणादिसाधारण्येन





प्रतीतिमात्रमुक्तम् । टीकाकृता तु लक्षणैवोक्ता । अवश्यं चैतदेवम् । प्रातिपदिकधातुनिपातानां अनेकार्थत्वेऽपि अतिप्रसङ्गापत्त्या यस्यकस्यचित्प्रातिपदिकस्य यत्रकुत्राद्यर्थे मुख्यवृत्त्याश्रयणायोगेन अभिधानप्रयोगादिकं मूलीकृत्यैव अनेकार्थत्वस्याश्रयणीयतया अभिधानाद्यभावे लक्षणाया एवाश्रयणीयत्वात् । एतेन नञ्विशिष्टस्य उत्तरपदस्यार्थान्तरलक्षकत्वं खण्डयन् रमाकारोऽपि निरस्तः । उपसर्गद्योतकत्वाङ्गीकारसंरक्षणायैव कथञ्चित् वैयाकरणैः लक्षणामनङ्गीकृत्यैव आरोपितत्वस्य नञा द्योत्यतामङ्गीकृत्य आरोपितो ब्राह्मणो ब्राह्मणपदार्थः इत्यादिकं प्रकल्प्यते । पापाभावः इत्याद्यपि एवमेव उपपादनीयमित्याशयेनाह **अत्र नञ्विशिष्टेत्यादिना** । अभावविशेषस्य विरोधाभावस्य । **उत्तरपदार्थेति** । विरोधाभावो हि प्रतिपाद्यमानत्वात् प्रधानं विरोधपदं च तदर्थकमतः उत्तरपदप्राधान्यमित्यर्थः । ततश्चार्थाभावार्थकस्यापि नञो विरोधपदेन तदभावलक्षणायामुपयुक्तत्वेन विरोधाभाव एव पर्यवसानात् न वैयर्थ्यम् । उभयपदार्थप्राधान्यं च । तत उत्तरपदार्थप्राधान्यात् तत्पुरुषसम्भवात् अविरोध इति पुलिङ्गं च युक्तमिति भावः । उत्तरपदार्थप्राधान्याभावेऽपि तत्पुरुषः किं न स्यात् इत्याशङ्क्य निराकरोति **न च** इत्यादिना **लक्षणाश्रयणम्** इत्यन्तेन । अक्षपरीसूपप्रतीत्यादाविति पाठः । सूपप्रतीअक्षपरि इत्यादावित्येव हरदत्ताद्युक्तेः । तत्राक्षपरीत्येतत् अक्षशलाकासङ्ख्याः परिणेत्येतत्सूत्रार्थोदाहरणम् । तत्सूत्रोदाहरणं हि द्यूतव्यवहारे पराजयेऽभिधेये अक्षशब्दस्य परिणाऽव्ययीभावसमासविधानेनाक्षेणेदं तथा न वृत्तं यथा पूर्वं जये इत्यक्षपरीति सिद्ध्यति । सूपप्रतीत्यैतत्तु सुप्प्रतिना मात्रार्थे इति सूत्रीयोदाहरणम् । तेन हि सुबन्तस्य सूपशब्दस्याल्पपर्यायमात्राशब्दार्थे वर्तमानेन प्रतिनाऽव्ययीभावसमासविधानेनास्त्यत्राल्पः सूपः सूपप्रतीति निष्पद्यते । तदुभयत्रोत्तरोत्तरपदार्थभूताव्ययार्थस्यैव प्राधान्यमिति भावः । न च तर्हि पूर्वपदार्थप्राधान्येऽव्ययीभाव इत्यस्य भङ्गप्रसङ्ग इति वाच्यम् । पूर्वपदग्रहणस्याव्यय उपलक्षणतया अव्ययार्थप्राधान्येऽव्ययीभावः इति लाभेनाक्षपरीत्यादौ अपि अव्ययार्थप्राधान्यसद्भावेनादोषात् । अव्ययीभावः इति सूत्रे तथैव हरदत्तोक्तेः । न च तथापि पारेगङ्गं देशः । द्वियमुनं इत्यादावनव्ययार्थप्राधान्यादव्ययीभावसंज्ञा न स्यादिति वाच्यम् । अस्य प्रायोवादत्वेन लक्षणत्वाभावात् । अव्ययीभावसंज्ञा तु तत्तदधिकारविहितसमासत्वेनैव इत्याद्याकरे स्पष्टम् । **अतिमाल इति** । मालामतिक्रान्तोऽतिमालः इत्यादिरूपेण अत्यादयः क्रान्ताद्यर्थे द्वितीययेति तत्पुरुषसमास इति भावः । **बाधकेनेति** । तत्तदधिकारविहितसूत्रेण तत्तत्समाससंज्ञाभ्युपगमेन तादृशसूत्रविधेयत्वमेव बाधकमिति भावः । **भाष्यादीति** । **नञ् इति** । नञ् इत्येतत्सूत्रीयेति शेषः । आदिपदेन मञ्जर्यादि सङ्ग्रहः । कप्प्रत्ययानुपपत्तेरिति पकारान्तप्रत्ययकीर्तनं शेषात् विभाषेत्यनेन कपो विधानात् । निरनुबन्धपाठे तु अनुबन्धस्याविवक्षया उक्तिरित्यदोषः । **समासान्तरेति** । येनाप्राप्ते यो विधिः आरभ्यते स तस्य बाधक इति न्यायेन प्रागेव एव बहुव्रीहौ नञ्समासारम्भेण, नञ्समासेन बहुव्रीहेः अपवादादित्यर्थः । **कस्येति** । कप इत्यर्थः । उपलक्षणं चैतत् । अवर्षाः हेमन्तः इत्यत्रावर्षापदे परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः इत्यनेन परवल्लिङ्गतया हेमन्तपदलिङ्गस्याप्रसङ्गेऽपि हेमन्तपदस्य यत् वचनं तत्समासस्य स्यादेवेत्यपि भाष्याद्युक्तं ज्ञेयम् । भाष्यकारेण हेमन्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि प्राप्नोतीति लिङ्गप्राप्तिरपि उक्तरीत्या परवल्लिङ्गमिति सूत्रे परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः इति न्यासभेदेन द्वन्द्वैकदेशिसमासयोरेव परवल्लिङ्गताश्रयणीया । राजपुरुषमानयेत्यादौ उत्तर-





पदार्थप्राधान्यादेव लिङ्गसिद्धेः इत्याशयेनोक्तं इत्यादि मञ्जर्यां कुसुमविकासे च स्पष्टम् । **किञ्चैवमिति** । नञ्समासस्य अन्यपदार्थप्रधानत्वे इत्यर्थः । **अस इत्यत्रेति** । असो ददाति । असः शिवः इत्याद्युत्तरपदगतास इत्यत्रेत्यर्थः । एतत्तदोः सुलोपोऽकोरनञ्समासे इत्येतत् व्यावृत्त्यमिदमुदाहरणम् । **तच्छब्दार्थस्येति** । उत्तरपदार्थान्वयप्रक्रमात् अर्थस्यैवात्र गौणत्वकीर्तनेऽपि तस्य तदर्थकतच्छब्दगौणत्वे पर्यवसानम् । प्रचारार्थ-संसर्गेण उपसर्जनस्य स्वार्थकत्वाभावः इति शेष्यादावपि उपसर्जनपदस्यार्थोऽप्युपसर्जन इति लाभेनान्य-पदार्थप्रधानत्वप्रतिद्वन्द्वितया अर्थस्यैव प्राप्तेः । उत्तरपदार्थप्रतियोगितया अन्यपदार्थवत् । अत एव उत्तरपदार्थेत्याद्युक्त्वा उत्तरपदपूर्वपदप्रयोगो रमायां सङ्करेण कृत इति ज्ञेयम् । **गौणत्वप्रसङ्गेनेति** । वृत्तौ प्रधानार्थसंसर्गेणोपसर्जनस्य स्वार्थवाचकत्वाभावात् अप्रधानत्वरूपं गौणत्वमिति भावः । **मुख्यत्यदादि-विषयत्वमिति** । त्यदादिशब्देन मुख्यतया ग्राह्यत्वमित्यर्थः । उत्तरपदार्थस्य गौणत्वेन मुख्यत्यदादि-विषयत्वाभावेऽपि किं प्राप्तमित्यत आह **त्यदादीनामः इत्यादि** । विषयत्वमित्यस्य न स्यात् इति वक्ष्यमाणेनान्वयः । त्यदादिकार्यमित्यस्यापि तेनैव सम्बन्धः । अर्थग्रहणपक्षे तद्द्वारा शब्दस्य विषयत्वे पर्यव-सानम् । पर्यवसन्नशब्दग्रहे तु यथाश्रुतमेव । **सर्वत्र स्मा इत्यत्रेति** । अत्रापि सर्वशब्दार्थस्येत्युक्तिरर्थक्रमात् । तथापि तद्द्वारा शब्दे पर्यवस्यति । तन्मुख्यार्थविषयकेत्यपि सर्वशब्दमुख्यार्थसर्वशब्दविषयकेति योज्यम् । सर्वेषां नामानि सर्वनामानीति महासंज्ञाकरणात् अशेषार्थाभिधानाभावे गौणत्वं शब्दस्य । उपसर्जनस्थाने च प्रधानार्थ-संसर्गेणास्यार्थवाचकत्वाभावे तदर्थोऽपि गौण एवेति ज्ञेयम् । **गौणत्वेनेति** । प्रधानार्थसंसर्गेण उपसर्जनार्थस्य गौणत्वमिति भावः । **तन्मुख्यार्थेति** । सर्वशब्दमुख्यार्थेत्यर्थः । सर्वनामसंज्ञायाः अप्राप्त्येति नञः प्रश्लेषेण योज्यम् । 'सर्वादीनि सर्वनामानी'ति सूत्रे हि 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वार्तिकार्थं व्याकुर्वद्भिः न चेत् गौणोऽथवाभिधा इत्युक्तत्वात् सर्वशब्दस्य गौणत्वे स्वार्थवाचकत्वाभावेन अत्रत्यसर्वशब्दार्थस्योपसर्जनत्वे तद्वाचकसर्वशब्दस्य सर्वनामसंज्ञा नास्तीति फलितोऽर्थः । संज्ञाभावेऽपि किं इत्यत आह **स्मायादेशश्चेति** । सर्वनामसंज्ञा कार्येति शेषः । **अतिसर्वायेति** । उपसर्जनस्थले सर्वो नाम कश्चित् तस्मै सर्वायेत्यादि संज्ञास्थले च तदभावदर्शनादिति भावः । **अत एवेति** । अस इत्यादौ त्यदादिकार्यायोगप्रसङ्गादेवेत्यर्थः । तत्पुरुषसमासस्य उत्तरपदार्थप्रधानत्वं न केवलं युक्तिसिद्धं अपि तु सूत्रकारीयज्ञापकसिद्धमित्याह **अत्र चेति** । कथमस्य लिङ्गत्वमित्यत आह **अन्यथेति । अर्थद्वारेणेति** । एतत्तदोरिति त्यदादित्वं न प्राप्नोति । सौत्रत्वात् इत्यादिकं शेष्यादौ । अयमाशयः । एतत्तदोऽर्थः सु एतस्य लोपः इत्युक्ते एतत्तदोर्विहित इति विधानरूपसम्बन्धाङ्गीकारे पारमसः ददाति परमैषः ददाति इत्यादौ सोरेतत्तद्भ्यां विधानाभावेन तत्र सोर्लोपो न स्यात् । तत्र परमतत् परम एतच्छब्दाभ्यामेव सोर्विधानात् । अतः एतत्तदोः सम्बन्धीयः सुरिति सम्बन्धे षष्ठी । अर्थद्वारकश्च सम्बन्धः । एतत्तदर्थगतसङ्ख्याद्यभिधायी यः सुः तस्येति । तथा चैतत् अर्थगतसङ्ख्याद्यभिधायित्वेन तदुभयार्थसम्बन्धि-सुब्लोपविधानं सिद्ध्यतीति । विधीयमानोऽनैषो ददानीति पाठः । मञ्जर्यादौ सत्त्वाद्युक्तत्वाच्च । अन्यादृशो लेखकागतः । **अनेष इत्यादि** । अयमर्थः । अर्थद्वारेण एतत्तच्छब्दसम्बन्धिसुरेव लोपार्हः इति स्थिते अनैषः इत्यादौ तल्लोपः प्राप्नुयात् । यदि एतत्तच्छब्दार्थगतसङ्ख्याभिधायिसु स्यात् तदभिधायित्वं च तदा भवेत् । यदि





तदुभयार्थप्राधान्यं स्यात् । तच्च तत्पुरुषस्योत्तरपदार्थप्राधान्यं अपेक्षत इति तदभान एषदः इत्यादौ एतच्छब्दार्थप्राधान्याभावात् तत्तद्गतसङ्ख्याद्यभिधायकत्वं सोर्नास्तीति तल्लोपप्रसङ्गस्यैवाभाव इति । तत्पुरुषस्योत्तरपदप्राधान्ये तु एतत्तच्छब्दार्थगतसङ्ख्याभिधायिनः सोर्लोपप्रसङ्गे तद्वारणायानञ्समासग्रहणं अर्थवत्, अन्यथा तद्ग्रहणवैयर्थ्यमिति निष्कृष्टाशयः । अत्र नञ्विशिष्टोत्तरपदस्याभावे लक्षणेतिपक्षे कर्मनिर्णयऐतरीयभाष्योक्तवाचकत्वविरोध इति चेत् न । एतद्ग्रन्थस्य व्याकरणरीत्या प्रवर्तनेनादोषात् । अधिकं अदृश्यत्वनये अस्माभिरुपपादितमस्ति । तत एव प्रतिपत्तव्यम् । उपपदार्थप्राधान्याङ्गीकारेऽपि पूर्वपदार्थप्राधान्यस्यानपायात् अव्ययीभावापत्त्या अविरोधमिति प्रसङ्गः स्यादिति शङ्कते **नन्वेवमपीति** । **उक्तं अग्रहणमितीति** । ................ शेषः । रमानुसारेणाह **तत् चिन्त्यम्** । तत्पुरुषस्येवाव्ययीभावस्यापि प्राप्तावपि नात्र नपुंसकप्रसङ्गः । नञ्समासस्याव्ययीभावत्वेन वैकल्पिकत्वेन दोषाभावादित्यभिप्रेत्य सिद्धान्तकौमुद्युक्तरीत्या समाधत्ते **अत्र ब्रूम इति** । रक्षो हीति भाष्यवाक्यं प्रथमभागे । अद्रुतायामित्येतत् वार्तिकं तु .................सूत्रे । असन्देहो हि सन्देहाभावः । अतोऽसन्देहपदे नञ्समासाश्रयणात् तत्पदस्य पुलिङ्गता । असंहितमित्यत्र संहिताया एव अभावः इत्यर्थाभावे अव्ययीभावाश्रयणात् नपुंसकत्वमिति विवेकः । अत एवेत्युदाहृतेषु आद्यं द्वितीयं च नञ्समासोदाहरणम् । एतदुदाहरणासाधुत्वार्थमेवोक्तविकल्पाश्रयणम् । अविघ्नमित्येतत्तु तृतीयमव्ययीभावोदाहरणं इति विवेकः । अविघ्नमित्यत्र हि विघ्नानामभावो अविघ्नमिति विग्रहः । तत्र परत्वात् तत्पुरुष एव स्यात् । निर्मक्षिकं इत्यत्र अव्ययीभावस्य सावकाशत्वात् । ततो नपुंसकत्वार्थं विकल्पो आवश्यकः । यद्यपि च विद्यमाना विघ्नाः यस्मिन् इत्यादि बहुव्रीहिणा अविघ्नं कर्म इत्यादि प्रयोगाः सिद्ध्यन्ति तथापि 'उत्तरे कर्मणि अविघ्नमस्तु' इत्यादि प्रयोगाः अव्ययीभावं विना स्वरसतो न सिद्ध्यन्ति इति भावः । **शृङ्गिग्राहकतयेति** । यथा शृङ्गे करणे वा गां गृहीत्वा अयं गौः इति दर्शयति तथेत्यर्थः । **अत्रेतिपदस्येति** । पूर्वमाद्याध्यायार्थस्योपजीव्यत्वसमर्पणार्थम् अत्रेत्यस्यावृत्तिः आश्रिता । अधुना विपरीतकार्यकारणाभावाश्रयणात् नावृत्त्यपेक्षा । किन्तु समन्वयः उक्तः । अत्राविरोधः साध्यते इत्येतावन्मात्रेणोक्तार्थदृढीकरणार्थं इति सिद्ध्यत्येव । यद्यपि पूर्वमपि आवृत्त्यभावेऽपि कथञ्चित् योजना सम्भवति तथापि कारणत्वस्पष्टीकरणार्थं आवृत्तिराश्रिता । **न चैवं प्रकृतेऽस्ति** । तदनावृत्तावपि कारणत्वस्य सुबोधत्वादिति भावः । **तावत् यावदिति** मूले तावत्पर्यन्तं यावत्पर्यन्तमित्यर्थः । तथा च अत्राध्याये यावत्पर्यन्तं प्रतीतविरोधाभावो न साध्यते तावत्पर्यन्तं श्रोतॄणां दृढनिरूढो न भवतीति योजना । योग्यतया उक्तार्थे प्रतीतेति लाभादिति ज्ञेयम् । **न्यायसूत्रेति** । गौतमसूत्रेत्यर्थः । पक्षप्रतिपक्षाभ्यां विमृश्य इत्यनेन पक्षप्रतिपक्षको अन्यस्य विमर्श इति प्रतीयते । तथा च पक्षप्रतिपक्षयोः विमर्शो न लभ्यते । तस्यैव च वक्ष्यमाणसम्भवासम्भवपर्यवसन्नस्यार्थावधारणहेतुतया तल्लाभस्यैव आवश्यकता इत्यतः तदर्थलाभो यथा स्यात् तथा योजयति **अत्र पक्षप्रतिपक्षेति** । सम्भवासम्भवौ इति अत्रापि लक्ष्येते इत्यस्यानुवृत्त्या सम्बन्धः । **न च परपक्षसाधनेति** । अत्र स्वपरशब्दयोः पक्षशब्देन कर्मधारये स्वपक्षपरपक्षेति लाभे साधनेत्यादेरुभयत्र सम्बन्धात् स्वपक्षसाधनेत्यादि परपक्षसाधनेत्यादि च फलति । आद्ये स्वपक्षसाधनसम्भवः तदुपलम्भासम्भवश्च योग्यतयार्थौ योग्यताबलात् ज्ञेयौ । उक्तप्रकारचतुष्टयस्यैव निर्णयहेतुत्वात् । चतुर्भिः प्रकारैश्च सिद्धान्तप्रतिष्ठा





भवति इत्युपाधिखण्डनटीकायां उक्तत्वादिति ज्ञेयम् । अथवा स्थापना साधनं प्रतिषेध उपालम्भः तौ च साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तौ अनुबन्धेन प्रवृत्तमानौ पक्षप्रतिपक्षौ इत्युच्येते इति वात्स्यायन-भाष्यम् । अत्र पक्षप्रतिपक्षयोः कर्मतया न निर्णयसाधनत्वम् इत्यनुपपत्त्या साधनोपालम्भौ वादसूत्रगतौ लक्षणीयौ इति तावेव तावत् भाष्यकृत् विभजते इत्यादि वार्तिके तद्व्याख्यानरूपवाचस्पतिग्रन्थं मनसि निधाय पक्षप्रतिपक्षशब्दौ व्याचष्टे **अत्र पक्षेति** । एकस्य सम्भवो अन्यस्यासम्भवः । तावेतौ सम्भवासम्भवौ सह विमर्शं निवर्तयतः इत्यादि भाष्यादिकं अभिप्रेत्याह **विमर्शशब्देनेत्यादिना** । अत्र वादिनः साधनस्य सम्भवः प्रति-वादिनः उपालम्भस्यासम्भवः । एवं प्रतिवादिनः साधनस्य सम्भवः वादिनः उपालम्भस्यासम्भवः इति वाचस्पतिग्रन्थानुसारेण सम्भवासम्भवयोः स्वपक्षसाधनोपालम्भाभ्यां परपक्षसाधनोपालम्भाभ्यां च क्रमेणैव अन्वयः । अस्य स्वपक्षनिर्णयपरपक्षनिर्णययोः मेलनेन तदुभयलक्षणतया स्वपक्षसाधनसम्भवतदुपलम्भा-सम्भवयोः स्वपक्षनिर्णयहेतुत्वेन ग्रहणवत् परपक्षसाधनग्रहणसम्भवे तदुपलम्भासम्भवयोः एव परपक्षनिर्णय-हेतुतया ग्राह्यत्वात् । एवं मेलनाभिप्रायेणैव स्वपरपक्षेत्यादिना टीकायां तात्पर्यमुक्तम् । न तु परपक्ष-साधनोपालम्भयोः । सम्भवासम्भवावपि स्वपक्षनिर्णयहेतू इत्याशयेन इति न प्रवृत्तासङ्गतिः । यत्र स्वपक्षनिर्णयो वा परपक्षनिर्णय एव वा भवति । तत्र तदुभयसाधनयोः प्रत्येकमेव विद्यमानयोः सूत्रे मेलनेन लक्षणकथनात् तदनुसारेण इहापि अनुवादादिति ज्ञेयम् । ईक्षत्यधिकरणीयटीकास्थ एतल्लक्षणविचारोऽपि एवमभिप्रायेणेति ज्ञेयम् । न चायं निर्णये नियमः इत्यादि भाष्यं तर्कविषये नियमः नान्यत्र इत्यादि वार्तिकं च मनसि निधायोक्तं **तर्कविषयेति** । न निर्णयमात्रलक्षणमिदम् अपि तु निर्णयविशेषस्येति भावः । अत्र प्रत्यक्षादि-साधारणनिर्णयस्य तु अर्थावधारणमात्रलक्षणम् इत्यपि उपलक्षणया ज्ञेयम् । ईक्षत्यधिकरणटीकानुसारात् । प्रत्यक्षेण जायमाने निर्णये आगमजन्ये ज्योतिष्टोमादेः स्वर्गसाधनतादिनिर्णयो निश्चयवत् वादिप्रतिवादिभ्यां क्रियमाणाभ्यां वादिकथायां च विमर्शाभावात् विमर्शघटितलक्षणस्य तत्राव्याप्तिप्रसङ्गात् अर्थावधारणमात्रनिर्णय इति साधारणलक्षणं कार्यं इति तदाशयः ।

**स०व्र०— विमर्शशब्देन सन्देहो गृह्यते** । **विमृश्य** सन्देहं सम्पाद्य । अत्र पक्षप्रतिपक्षशब्दौ स्वपक्षसाधनपरपक्षोपालम्भनपरौ । तथा च सन्देहपूर्वं स्वपक्षसाधनपरपक्षोपालम्भाभ्यां जायमानमर्थावधारणं निर्णय इत्यर्थः । परार्थनिर्णयलक्षणत्वात् स्वपक्षादिसाधनेन विना जायमाने करस्थितामलकनिर्णये नाव्याप्तिरिति ध्येयम् । यद्वा विमर्शशब्दो विचारार्थकः । तथा च विचारपूर्वकमित्यर्थः । **प्रवक्ष्यतीति** । 'विरोधस्सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्रतत्रगाः' इत्यादिना एतत्पादे प्रवक्ष्यतीत्यर्थः ।

**विठ्ठल०—** कार्यकारणभावमेव जगत्कारणे विष्णौ मुख्यया वृत्त्या 'निखिलवेदानामित्यादिना' सन्न्यायरत्नावल्यामुक्तानुसारेण तावद्विशदयति **सकलेति** । 'विरोधहीनस्य स्यात्समन्वयता यत' इत्यादि तृतीयाध्यायीयानुव्याख्यानानुसारेणापि विवृणोति **अथवेति** । **यथोक्तमिति** । तार्किकैरित्यर्थः । **विमृश्येति** ।





अत्र विमृशशब्देन सन्देहो विवक्षितः । तथा च विमृश्य सन्देहपूर्वकं पक्षप्रतिपक्षाभ्यां स्वपक्षसाधनपरपक्षोपालम्भाभ्यां जायमानमर्थावधारणं निर्णय इत्यर्थः । **तत्र तत्रैवेति** । 'विकारशब्दान्नेति च' इत्यादिभिः तत्र-तत्राधिकरणे विहित इत्यर्थः । **प्रतिवक्ष्यतीति** । 'विरोधः सर्ववैशिष्ये यो द्वितीये निरस्यत' इत्यत्र ब्रह्मणः सकलजगज्जन्मादिकारणत्वादि वैशिष्ट्ये यो विरोधः स एव द्वितीये निरस्यते । तदन्ये ये शास्त्रसमन्वयविषयः ते तत्रतत्रैव विकारशब्दादित्यादिना परिगृहीता इति प्रतिवक्ष्यतीत्यर्थः ।

**चषकः**— प्रकृते नञः पर्युदासार्थकत्वस्यानुपयुक्ततया प्रसज्यप्रतिषेधार्थकत्वमाश्रित्य व्याचष्टे **अविरोधो विरोधाभाव इति** । अथात्र 'नाव्ययीभावात्' इत्यामादेशेनाविरोधमितिरूपापत्त्या अव्ययीभावस्य राजपुरुष इत्यादाविव समासघटकोत्तरपदार्थविशेष्यकशाब्दधीजनकत्वरूपोत्तरपदार्थप्राधान्यात्मकतत्पुरुषलक्षण-लक्षितत्वाभावेन तत्पुरुषस्य, समासान्तरस्य च असामर्थ्येन दुरुपपादतया असामञ्जस्यमिति चेदत्र व्याच-क्षाणाः । अतिमालादौ तत्पुरुषेऽभावेन उत्तरपदार्थप्रधानस्तत्पुरुष इति प्राचां प्रवादः प्रायोऽभिप्राय इति पाणिनीया अभ्यधुरिति तद्राहित्येऽपि तत्पुरुषत्वस्य सूपगमत्वात् । न च तत्पुरुषत्वावच्छेदेनोत्तरपदार्थ-प्राधान्यस्य दुरुपगमत्वेऽपि नञ्तत्पुरुषत्वावच्छेदेन तदवश्योपेतव्यमेव । संज्ञोपसर्जनीभूतानां सर्वनामगणकार्यं भाष्यकारः प्रत्याचख्यौ इत्युत्तरपदार्थप्राधान्यानुपगतावस इत्यत्र त्यदादीनाम् इति त्यदाद्यत्वम्, असर्वस्मा इत्यत्र स्मायादेशश्च कथं स्यातामेवमेतत्तदोरिति सूत्रेऽर्थद्वारेणैतत्तदोः सम्बन्धिनः सोर्लोपो विधीयमानः कथं अनेषो ददात्यसो ददातीत्यत्र प्राप्नुयादिति तद्व्युदासफलकमनञ्समासग्रहणं मन्दप्रयोजनतामापद्येतेति वाच्यम् । 'न बहुव्रीहावि'ति सूत्रे बहुव्रीहावेव सर्वनामकार्यं प्रतिव्यधात्सूत्रकारो नोपसर्जनसामान्य इति भाष्यकारीयायाः गौणमात्रे तत्प्रतिविहितेः प्रायिकत्वस्यैव तादृशानञ्समासग्रहणेन ज्ञापिततया तदनुरोधेन नञ्तत्पुरुषत्वाव-च्छेदेन तदवश्यम्भावासिद्धेः । दर्शितनञ्तत्पुरुषप्रदेशेषु तत्तदर्थानां नञ्समभिव्याहृतोत्तरपदलक्ष्यतामुपेत्योत्तर-पदार्थप्राधान्योपपादनभङ्ग्याश्च क्लिष्टत्वात् एतदभिसन्धायैवाभिधास्यति विरोधः समासे गुणभूत इति समादधुः । वस्तुतस्तु । अर्थाभावे अव्ययीभावेन सहायं विकल्प्यते । रक्षोहागमलघ्वसन्देहाः प्रयोजनम् अद्रुतायामसंहित-मिति भाष्यवार्तिकप्रयोगात्तेनानुपलब्धिरविवादोऽविघ्नमित्यादिसिद्धमित्याकरदृशां निरूढः पन्थाः । **अनेन** प्रथमा-ध्यायोक्तार्थधर्मिकविरोधाभावसमर्थनं प्रकृताध्यायेन क्रियत इति वचनेन । **अस्याध्यायस्य** प्रकृताध्यायनिष्ठाम् । **अतीताध्यायेन** पूर्वाध्यायनिरूपिताम् । कार्यकारणभावलक्षणामेव सङ्गतिं सङ्घटयति **सकलेति** । **तत्र विरोधः** तदधिकरणको विरोधः । **स्फूर्ताविवेति** । प्रतियोगिज्ञानस्याभावधीहेतुत्वादिति भावः । **अत इति** । प्रकृता-ध्यायोत्पत्स्यमाना या अभावधीस्तद्धेतुभूतप्रतियोगिप्रतिपत्तौ धर्मिज्ञानविधयोपपादकसमन्वयोपस्थितिजनकतया पूर्वाध्यायस्य तादृशाध्यायनिरूपिततदुत्पादितधर्म्युपस्थितिप्रयोज्यप्रतियोगिप्रतिपत्तिनियन्त्रिताभावधीहेतुत्वरूपा प्रकृताध्यायाधिकरणिका सङ्गतिरनर्गलाऽसैत्सीदिति भावः । मौलसप्तम्यन्तपदस्य तन्त्रावृत्त्याद्याश्रयणेनोक्तार्थ व्याचिख्यासितशास्त्रोभयप्रत्यायकोपगतिमन्तरेणापि भूताधिकारीयकर्मसाधननिष्ठान्तपदसमभिव्याहारमहिम्नैव वृत्ताध्यायनिरूपितैतदध्यायवृत्तिसङ्गतेः सुप्रतिपादतायां तादृशदिशा तदुपपादनेऽरुचिं मन्वानः कल्पान्तरमाश्रयते





**अथवेति** । अत्र न्यायसूत्रं प्रमाणयति **यथोक्तमिति** । **विमृश्य** सन्दिह्य **पक्षप्रतिपक्षाभ्यां** स्वपक्षसमर्थनपरपक्षप्रत्याख्यानाभ्याम् । जायमानार्थावधारणं निर्णय इति सूत्रार्थोऽवसेयः । प्रकृतसमर्थनीयतद्विरहरूपकोटिद्वयावगाहिसन्देहोत्तरकालीनं यत्सिषाधयिषितार्थव्याप्यवत्तापरामर्शरूपं विपक्षबाधकतर्कानुसन्धानरूपं च ज्ञानं तदुभयाधीनानुमितिरूपज्ञानं निर्णय इति समुदिताशयः । **अतो विपरीतेति** । वृत्ताध्यायार्थज्ञानस्य कार्यत्वं वर्तिष्यमाणाध्यायार्थज्ञानस्य कारणत्वमिति विपरीतेत्यर्थः । न चेयमन्योन्याश्रयप्रसङ्गेन दुर्निरूपेति वाच्यम् । प्रथमाध्यायीयप्रधानयोगश्रवणाव्यवहितोत्तरक्षणावच्छेदेन तत्तदुत्पादितज्ञानं धर्मिज्ञानमुद्रया प्रकृताध्यायोत्पत्स्यमानाभावधीहेतुभूतप्रतियोगिज्ञानजनकमित्यभिहितमधस्तात् । सम्प्रति तु तादृशधर्मिज्ञानधर्मिकपरीक्षानिबन्धनप्रामाण्योपरक्तप्रतिसंहित्युत्तरकालीनवृत्ताध्यायार्थगोचरावधारणात्मकज्ञानान्तरस्यैव प्रकृताध्यायार्थधीकार्यताभिधीयत इत्युक्तक्षत्यनवकाशात् । **तत्रतत्रैवेति** । सर्वनाम्नां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोपस्थापकतया सप्तमीप्रकृत्यंशेनानन्दमयनयत्वाद्यवच्छिन्नाः परामृश्यन्ते । सप्तमीप्रत्यापिता घटकता उपस्कृतविकारशब्दादित्यादिनेत्यनेनान्वेति । **प्रतिवक्ष्यतीति** । प्रत्युपसृष्टादनुदात्ताद्वचेः लृटि स्यप्रत्यये निष्पन्नोऽयम् । 'विरोधः सर्ववैशिष्ट्ये यो द्वितीये निरस्यते । नारायणस्य त्वध्याये तदन्ये तत्रतत्रगाः' इति मौलप्रतीकव्याख्यानावसरे द्वये विरोधाः परिहरणीयाः भवन्ति । द्वितीयसूत्रसिद्धसर्ववैशिष्ट्यविषयाः शास्त्रसमन्वयविषयाश्च । तत्र द्वितीयाः विकारशब्दादित्यादिना परिहृताः । न तु सर्ववैशिष्ट्यविषया इति तत्परिहारार्थमध्यायारम्भ इति प्रतिवचनं करिष्यतीत्यर्थः ।

**॥ इति तत्सङ्गतत्वेन द्वितीयाध्यायार्थोक्तिः ॥**

**॥ इति प्रथमाध्यायार्थसङ्गतत्वेन द्वितीयाध्यायार्थकथनम् ॥**

* * *

**॥ अथ द्वितीयाध्यायगतपादभेदः,**
**प्रथमपादप्राथम्ये निमित्तश्च ॥**

४ **सु०— नन्वेवमध्यायस्याविरोधलक्षणैकार्थत्वेनैकवाक्यत्वे सति पादभेदः किन्निबन्धनः । तत्राप्यस्य पादस्य प्राथम्यं किन्निबन्धनमित्यपेक्षायामाह चतुर्विधस्येति ।**

## अनु०— चतुर्विधस्य तस्यादौ यौक्तः

**तस्य** अविरोधस्य । निर्धारणे षष्ठी । **आदौ** प्रथमपादे । **अविरोधः** साध्यत इत्यनुवर्तते । 'चतुर्विधस्य तस्य' इत्यनुवादात् 'स चतुर्विध' इति लभ्यते ।





**तदयमर्थः । यद्यप्युक्तेऽर्थे विरोधाभाव इत्येकोऽर्थः, तथाऽपि युक्तिसमयश्रुति-न्यायोपेतश्रुतिविरोधाभावरूपावान्तरभेदेन स चतुर्विधो भवति, तत्प्रतिपादनेन चतुर्णां पादानां भेदो युज्यते । तस्य चतुर्विधस्यापि विरोधाभावस्य मध्ये, युक्तिविरोधाभावः प्रथमपादे साध्यते; सर्वेषामपि विरोधानां युक्त्युपजीवित्वेन तद्विरोधस्य प्रबलतया तद-भावसाधनस्य प्राथम्योपपत्तेः, युक्तिपुरस्कारेण प्रवर्तना(मानत्वा)च्च विचारशास्त्रस्येति ।**

**ननु कथमभावस्य चातुर्विध्यम् ।**

**उच्यते । चतुर्विधा हि विरोधिनो(न्यो) युक्त्यादयः, तदुपधानात् विरोधोऽपि चतुर्विधोऽभिधीयते, ततस्तत्प्रतियोगिकोऽभावोऽपि तथोच्यते । अत एव यौक्त इत्युप-पन्नम्, अभावस्यापि परम्परया युक्तिसम्बन्धित्वात् ।**

**अथवाऽविरोधपदसन्निधापितो विरोधस्तस्येति परामृश्यते । तथा च विरोधस्य युक्त्याद्युपधानेन चतुर्विधत्वात् तदभावसाधनेन पादभेदो युज्यते । चतुर्विधस्य तस्य विरोधस्य मध्ये यौक्तः विरोधः आदौ, उक्तप्रकारेण प्रबलो यतस्तस्मात् तदभावोऽत्रादौ साध्यत इति योजनीयम् ।**

**यद्वा तस्य इति विरोधिपरामर्शोऽयम्, तस्याप्यविरोधपदेन बुद्धिसन्निहितत्वात् । अविरोधो हि विरोध(निरूपण)ाधीननिरूपणः । विरोधश्च विरोधिना विना नोपपद्यते । ततश्च विरोधिनो युक्त्यादिभेदेन चतुर्विधत्वा(त्त)द्विरोधाभावसाधनेन पादभेदोपपत्तिः । चतुर्विधस्य अपि तस्य विरोधिनो मध्ये, युक्तेः प्रबलत्वात्, आदौ यौक्तो युक्तिसम्बन्धी विरोधाभावः, साध्यत इति योज्यम् ।**

**परि०— निर्धारणे षष्ठीति** । गुणक्रियाजातिभिः यतः पृथक्करणं तत्र 'यतश्च निर्धारणं' इति सूत्रेण षष्ठीत्यर्थः । अस्मिन्पक्षे यौक्त इत्यस्य घटनामाह **चतुर्विधस्येति** । युक्तेः प्राधान्ये हेत्वन्तरं **युक्तिपुरस्कारेणेति** । **ननु कथमिति** । अभावस्य स्वतो विधाऽसम्भवादिति भावः ।

**यादु०— निर्धारण इति** । गुणक्रियाजातिभिर्यतः पृथक्करणं तत्र 'यतश्च निर्धारणमि'त्यनेन षष्ठी-त्यर्थः । **सर्वेषामपि विरोधानामिति** । विरोधिनां युक्त्यादीनां प्राबल्याभावे तद्विरोधशङ्काया एवासम्भवेन तत्प्राबल्योपपादिका युक्तयः सर्वविरोधानामुपजीव्या इत्यर्थः । युक्तेः प्राधान्ये हेत्वन्तरमाह **युक्तिपुरस्कारेणेति** । एवं च महामल्लभङ्गन्यायेन युक्तिविरोधपरिहारस्य प्राथम्यमिति मन्तव्यम् । समयादिविरोधपरिहाराणां क्रमेणा-





नन्तर्ये प्रयोजनं तु टीकाकार एवाग्रे प्रदर्शयिष्यति । **ननु कथमभावस्येति** । प्रतियोगिनो विरोधस्यैकत्वादिति भावः । यौक्त इत्यत्र परम्परासम्बन्धेन व्याख्यानं न स्वरसमत आह **अथवेति** । विरोधे चतुर्विधत्वमुक्तपक्षद्वये न स्वाभाविकं किन्तूपहितमेवेत्यरुच्या 'तस्याश्चतुःस्वरूपत्वादि'त्यग्रे विरोधिनामेव चातुर्विध्यस्य स्पष्टमुक्तत्वेन च पक्षान्तरमाह **यद्वेति** । अत्र चतुर्विधत्वस्य स्वरसत्वेऽपि 'यौक्त' इत्येतन्न स्वरसमतः पूर्वव्याख्यानमिति मन्तव्यम् ।

**वं०प०— निर्धारण इति** । अविरोधस्य मध्य इत्यर्थः । **एकार्थ इति** । तथा च चातुर्विध्यं यद्यप्यनुपपन्नमित्यर्थः । **सः** विरोधाभावः । **तत्प्रतिपादनेनेति** । चतुर्विधविरोधाभावप्रतिपादनेनेत्यर्थः । प्राथम्ये हेत्वन्तरमाह **युक्तीति** । उपपन्नमित्युक्तमेव दर्शयति **अभावस्यापीति** । आदावित्यस्यावृत्त्या व्याख्यानं करोति **आदावित्यादिना** । आदावित्यनूद्य प्रबल इति व्याख्यानम् । यथाऽस्मिन्ग्रामेऽयमेव सर्वापेक्षयाऽऽदावित्युक्तेऽतीव प्रबल इति लभ्यते तद्वत् प्राबल्योपपादकम् । **उक्तप्रकारेणेति** । सर्वेषामपि विरोधानामित्याद्युक्तप्रकारेणेत्यर्थः । अपवादो भवन्नपीत्युत्तरग्रन्थस्वारस्यात् ।

**कं०रा०— युक्तिपुरस्कारेणेति** । अस्य विचारशास्त्रस्य युक्तिपुरस्कारेण प्रवर्तनाच्च युक्तिविरोधाभाव-साधनस्य प्राथम्योपपत्तिरित्यर्थः । अतःशब्दपरामृष्टां हेतुमाह **अभावस्यापीति** । विरोधाभावस्यापि स्वनिरूपक विरोधद्वारा विरोधनिरूपकयुक्तिसम्बन्धित्वादित्यर्थः । **अविरोधपदेति** । अविरोधोऽत्र साध्य इत्यविरोधपदेन प्रतियोगितयोपस्थापितो योऽयं विरोधः स तस्येत्यनेन परामृश्यत इत्यर्थः । **विरोधिपरामर्श इति** । युक्त्यादि-रूपविरोधिनः परामर्श इत्यर्थः । विरोधिनोऽसन्निहितत्वात् कथं तस्येत्यनेन परामर्श इत्यत आह **तस्यापीति** । अविरोधपदेन विरोधिनो बुद्धिसन्निहितत्वं दर्शयति **अविरोधो हीति** ।

**श्रीनिधि०—** आन्तरो विरोधस्तत्र तत्र परिहृतः । ब्रह्मस्त्वत्रेति ज्ञेयम् । **स चतुर्विध इति लभ्यत इति** । स चतुर्विधो भवतीति विधिरध्याहर्तव्य इत्यर्थः ।

**शे०वा०—** नन्वविरोधचातुर्विध्यकथनं तत्रापि यौक्तस्याविरोधस्य प्राबल्यकथनं चानर्थकमित्यतः पादभेदसमर्थनार्थत्वात् चातुर्विध्यकथनस्य प्राथमिकत्वसमर्थनार्थत्वात् प्राबल्यकथनस्य च नानर्थक्यमित्याशयेन तद्वाक्यं तथा योजयितुं तद्व्यावर्त्यशङ्काद्वयमुत्थापयति **नन्विति** । ननु सम्बन्धे षष्ठ्या विधानादत्राविरोधसम्बन्धी यौक्तो विरोध इति लभ्यते । तथा च सम्बन्धस्य भेदव्याप्तत्वाद्यौक्तस्यातिरिक्तत्वापत्त्या चातुर्विध्यभङ्गापत्ति-रित्यतो गुणक्रियाजातिभिर्यतः पृथक्करणं तत्र 'यतश्च निर्धारणमि'त्यनेन विहितैवेयं षष्ठी न त्वपरेति नानुप-पत्तिरिति भावेनाह **निर्धारण इति** । नन्वविरोधचातुर्विध्यस्य पूर्वमनुक्तत्वात्कथं चतुर्विधस्य तस्येति तच्चातु-र्विध्यानुवाद इत्यतश्चातुर्विध्यानुवादसामर्थ्यादिवाविरोधोऽत्र साध्यत इत्येतदनन्तरं स चाविरोधश्चतुर्विध इति लाभान्नानुपपत्तिरित्याह **चतुर्विधस्येति** । ननु विरोधाभावस्यैकत्वान्न चातुर्विध्यं सम्भवति तत्कथं तन्निबन्धनः पादभेदः स्यात्कथं च यौक्तस्याविरोधस्यादिशब्दसूचितं प्राबल्यं येन तस्यैव प्रथमनिरूपणीयत्वमित्यत आह **तदयमर्थ इति** । अलौकिकार्थगोचरबहुजनपरिगृहीतवाक्यसन्दर्भः समयः । यद्यपि तृतीयेऽपि क्वचिद्विरोधिन्यः





श्रुतयो न्यायोपेतास्तथाऽपि न चतुर्थ इव श्रुत्याद्युक्तन्यायोपेता इति ततो भेद इत्यवधेयम् । नन्वत्र महामल्लभङ्गन्यायेनातिप्रयत्नसाध्यस्य प्राथम्ये, युक्तिविरोधपरिहारस्य प्राथम्यानुपपत्तिः । न्यायोपेतश्रुतिविरोधपरिहारस्यैव तदापत्तिश्च । सोपानारोहणन्यायेनानतिप्रयत्नसाध्यस्य प्राथम्ये तु समयानामनादिकालतोऽविच्छेदेन बहुजनपरिग्रहेण च वेदतुल्यत्वेऽपि वेदवन्निर्मूलत्वाभावादत्यन्तभ्रमहेतुतया, तत्त्वज्ञानस्यातिविरोधित्वाच्च, श्रुतिविरोधात्समयविरोधस्य प्रबलत्वेन, द्वितीये श्रुतिविरोधपरिहारस्य, तृतीये च समयविरोधपरिहारस्य कर्तव्यत्वप्रसङ्गेन समयश्रुतिविरोधपरिहारयोः पौर्वापर्यानुपपत्तिरिति युक्तिविरोधपरिहारस्य पूर्वनिरूपणम्, अनन्तरं समयविरोधपरिहारस्य, अनन्तरं श्रुतिविरोधपरिहारस्य, तथा न्यायोपेतश्रुतिविरोधपरिहारस्येति क्रमस्य सर्वथाऽप्यनुपपत्तिरित्यतः चतुर्थपादव्युत्पाद्यश्रुतियुक्तिविरोधपरिहारस्यातिप्रबलत्वेऽपि मुमुक्षुणाऽन्ते जिज्ञास्याध्यात्मविषयत्वेन प्राथम्यानौचित्यात् तस्य चतुर्थे निवेशः । इतरविरोधत्रयपरिहारस्य चानतिप्रयत्नसाध्यतया तदपेक्षया दौर्बल्यात्सोपानारोहणन्यायेन तत्पूर्वं निवेशः । इतरविरोधत्रयपरिहारस्य च महामल्लभङ्गन्यायेन पौर्वापर्यमिति भावेन युक्तिविरोधस्य समयादिविरोधापेक्षया प्राबल्यमुपपादयति **सर्वेषामपीति** । विरोधपदमविरोधस्योपलक्षणम् । ततश्च विरोधाविरोधादेर्युक्त्यधीनत्वेन युक्तेः प्राबल्यमित्यर्थः । तस्याः प्राधान्ये हेत्वन्तरं चाह **युक्तीति** । उपलक्षणमेतत् । वेदोऽप्रमाणमाप्ताप्रणीतत्वादिति साक्षात्कृत्स्नवेदाप्रामाण्यसाधकत्वात् । एकस्य समयिनः समयान्तर इव युक्तावनादराभावाच्चेत्यपि द्रष्टव्यम् । समयविरोधस्य श्रुतिविरोधापेक्षया प्राबल्यं तु समूलत्वाद्युक्तयुक्तिसिद्धम् । वक्ष्यति चैतद् ग्रन्थकारः स्वयमेव 'इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वादि'त्यादिना । अनादिकालानुवृत्तत्वादेर्वेदतुल्यत्वेन तदपेक्षया प्राबल्यानापादकत्वेनोक्तयुक्तावेव तद्ग्रन्थस्य तात्पर्यात् । अत एवोत्तरग्रन्थतात्पर्यमित्थमेव तात्पर्यचन्द्रिकायां वर्णितमित्यवधेयम् । **कथमिति** । न तावत् स्वतोऽभावस्य चातुर्विध्यं तस्यैकत्वात् । नापि तत्प्रतियोगिविरोधभेदोपाधिकम् । तत्प्रतियोगिनो विरोधस्याप्येकत्वेन चातुर्विध्याभावादिति भावः । विरोधस्य स्वतश्चातुर्विध्याभावेऽप्यौपाधिकं तदस्त्येवेति युक्तमविरोधचातुर्विध्योपधानत्वमित्याशयेन सिद्धान्तयति **उच्यत इति** । ननु तथाऽपि तस्येति नाविरोधपरामर्शो युक्तस्तथा सति तस्य युक्तिसम्बन्धित्वाभावेन यौक्त इत्यस्यानुपपत्तिप्रसङ्गादित्यतो न साक्षाद्युक्तिसम्बन्धित्वमेव यौक्तत्वं किन्तु युक्तिसम्बन्धित्वमात्रम् । तच्च साक्षात्परम्परासम्बन्धसाधारणम् । तथा चाविरोधस्य साक्षाद्युक्त्यसम्बन्धेऽपि विरोधद्वारा अस्त्येव सम्बन्ध इति नोक्तानुपपत्तिरिति भावेनाह **अत एवेति** । तत्परामृष्टमेव दर्शयति **अभावस्यापीति** । युक्त्यादिचातुर्विध्येन विरोधस्य, तच्चातुर्विध्येन च अभावचातुर्विध्यस्याश्रयणे उपधानद्वयकल्पनं परम्परया युक्तिसम्बन्धकल्पनं च भवतीति चतुर्विधस्य यौक्त इति पदद्वयस्याप्यस्वारस्यमिति पूर्वत्रापरितोषात्पक्षान्तरमारचयति **अथवेति** । नन्वस्मिन्नपि पक्षे प्रकृतपरामर्शकतच्छब्दानुपपत्तिरित्यतो गौरवेण स्वप्राधान्येन प्रकृतत्वस्य परामृष्टव्यतायामप्रयोजकत्वाद्यथाकथञ्चित्प्रकृततायाश्च विरोधेऽपि सत्त्वान्न तच्छब्देन परामर्शानुपपत्तिरिति भावेनोक्तम् **अविरोधपदसन्निधापित इति** । अत्रापि युक्त्यादिचातुर्विध्येन तन्निरूपितविरोधचातुर्विध्यकल्पनादुपधानकल्पनमवर्जनीयमेवेति चतुर्विधस्येत्यस्यास्वारस्यमित्यपरितोषादाह **यद्वेति** ।





**अविरोधो हीति** । विरोधितावच्छेदकप्रकारकविरोधिज्ञानसाध्यत्वादविरोधिज्ञानस्येति भावः । **विरोधश्चेति** । ससम्बन्धिकपदार्थज्ञाने सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानस्य कारणत्वात्सम्बन्धिभूतयुक्त्यादिनिरूपणं विना विरोधो न निरूपयितुं शक्यत इत्यर्थः । **ततश्चेति** । ततश्चास्मिन्पक्षे उपधानस्यैवाभावाच्चतुर्विधस्येत्यस्याति-स्वारस्यमिति भावः । यद्यप्यत्रापि तच्छब्दस्य यथाकथञ्चिदविरोधपदोपस्थापितविरोधयुक्त्यादिपरामर्शकत्वाङ्गी-कारात् तच्छब्दस्यास्वारस्यमविशिष्टं तथाऽपि 'तत्रापि च स्मृतेः । तस्याश्चतुःस्वरूपत्वादि'ति विरोधिपरोत्तर-ग्रन्थस्वारस्यानुरोधेनैव व्याख्यातमिति द्रष्टव्यम् ।

**वा०र०— अविरोधसम्बन्धीति** । तस्य इत्यत्र तच्छब्दार्थः अविरोधः । **उक्तोऽस्तीति** ? । तस्येति षष्ठ्यपि अविरोधस्य इत्येव पर्यवसन्नेति भावेन अविरोधसम्बन्धीति प्रयुक्तम् । **अतिरिक्तत्वेति** । चतुर्धा विरोधसम्बन्धिनः । यौक्तिकाविरोधस्य चतुर्विधादविरोधात् अतिरिक्तत्वे पाञ्चविध्यम् अविरोधस्य प्राप्तमिति उत्तरमूलोक्तरीत्या चतुर्विधस्येति अनुवादमुखेनोक्तं न चातुर्विध्यभङ्ग इत्यर्थः । यद्यपि उक्तानुवादेन अविरोध-चातुर्विध्यस्येव तत्सम्बन्धियौक्ताविरोधस्य पञ्चमस्य षष्ठीबलात् प्राप्तस्याङ्गीकारेऽपि न चातुर्विध्यस्य भङ्गः । चतुर्विधसम्बन्धिनोऽन्यस्य पञ्चमत्वेऽपि सम्बन्धनिरूपकाविरोधानां चातुर्विध्ये बाधकाभावात् । एवं च उक्त-रीत्या पाञ्चविध्यप्राप्तिनिराकरणाय निर्धारणषष्ठ्याश्रयणं न कर्तव्यमित्याभाति । तथापि वस्तुगत्या चतुर्विधत्व-मेवाविरोधस्य यौक्तिको विरोधोऽपि तदन्तर्गत एव न तु अन्तर्गत इति सिद्धान्तानुसारेणैव वाक्यव्याख्येयत्वात् पञ्चमाविरोधाङ्गीकारेण कथञ्चित् वाक्यार्थोपपत्तिस्वीकारायोगः इत्यत्र तात्पर्यात् न दोष इति ज्ञेयम् । **विहितैवेयमिति** । तत्सूत्रस्य षष्ठीसप्तमी चेत्युभयविधायकत्वेऽपि प्रकृताभिप्रायेण षष्ठीमात्रग्रहणम् । 'नृणां नृषु द्विजो श्रेष्ठः' इत्यादाविवेति शेषः । विरोधाभावस्य मध्ये इत्युत्तरमूलोक्तेः । **आदिशब्दसूचितमिति** । **अथवेति** मूले यौक्तिकाविरोध आदौ उक्तप्रकारेण प्रबल इति वक्ष्यमाणं मनसि कृत्वा एतदुक्तम् । **अलौकिकार्थेति** । चन्द्रिकानुसारेणाक्षिप्य समाधत्ते **नन्वत्र महामल्लभङ्गेत्यादिना** । उपयुक्तं तत्र तत्र किञ्चित् व्याख्येयमस्ति । **विरोधे भेदोपाधिकमिति** । विरोधे यो भेद इति बुद्ध्या विवेकेन सम्बन्धः । **चातुर्विध्योपधानत्वमिति** । चातुर्विध्यं प्रति निमित्तत्वमित्यर्थः । युक्त्यादिचातुर्विध्येन विरोधचातुर्विध्यस्य तेन च अभावचातुर्विध्यस्येति पाठः स्वरसः । विरोधस्येति पाठेऽपि अभावस्येति वा यत्र पाठः तत्रापि चातुर्विध्याश्रयणम् इति स्वरसम् । चातुर्विध्यस्येति पाठेऽपि व्यधिकरणषष्ठ्याश्रयणे स्वारस्यमिति । मूले आदावित्यनूद्य उक्तप्रकारेण प्रबल इति व्याख्यानम् । **विरोधस्याप्राधान्यमिति** । **नन्विति** । समासशास्त्रानुसार्युपसर्जनत्वेन तत्र पूर्वनिपातेऽपि तदर्थ एव प्रधानमिति भावः ।

**स०व्र०— निर्धारणे षष्ठीति** । गुणक्रियाजातिभिः यतः पृथक्करणं तत्र 'यतश्च निर्धारणमि'त्यनेन षष्ठीत्यर्थः । 'आदौ उक्तप्रकारेण प्रबलो यतः' इत्यनेनादिशब्दः प्राबल्यार्थ इत्युक्तं भवति ।

**विट्ठल०—** न तु चतुर्विधस्येत्यनेन पादभेदे निमित्तं न प्रतीयते । यौक्त इत्येतच्च कथमेतत्पादस्य प्राथम्योपपादकमित्यतस्तद्दर्शयितुमाह **तदयमर्थ इति** । तस्य चतुर्विधस्येति मूलस्यायमर्थ इत्यर्थः । **युक्त्युप-**





**जीवित्वेनेति** । सर्वत्रापि युक्तेरेव विरोधसम्पादकत्वात् तदुपजीवित्वमिति द्रष्टव्यम् । युक्तेः प्राधान्ये हेत्वन्तरमाह **युक्तिपुरस्कारेणेति** । **कथमभावस्येति** । अभावे रचनाविभागासम्भवात् द्रव्यादिषु पृथिवीत्वादिवद् अवान्तर-विभागोपाधेरप्यभावादिति भावः । ननु युक्तेर्विरोधाभावस्य च सम्बन्धाभावात्कथं यौक्तो विरोधाभाव इत्यत आह **अत एवेति** । अत इत्युक्तमुपपादयति **अभावस्यापीति** । ननु तर्हि यौक्तयुक्तिविरोधः साध्य इत्यन्वयः प्रतीयते । सर्वथानुपपन्न इत्यतः विवक्षिताध्याहारेण मूलयोजनामाह **चतुर्विधस्येति** । बुद्धिसन्निधापितत्वमेव उपपादयति **अविरोधो हीति** ।

**चषकः— निर्धारण इति** । नेयं शैषिकी षष्ठी, किं तु 'यतश्च निर्धारणमि'ति योगविहितेत्यर्थः । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणनिर्धारणं यतः, ततः षष्ठीसप्तम्यौ स्तः । नृणां नृषु वा ब्राह्मणः श्रेष्ठः । गवां गोषु वा कृष्णा सम्पन्नक्षीरा । अध्वगानामध्वगेषु वा रथिकाः शीघ्रतराः । छात्राणां छात्रेषु वा मैत्रः पटुरिति तत्प्रदेशा अवसेयाः । इत्थं चेयं षष्ठी शैषिकी नेति न चातुर्विध्यभङ्गापत्तिरिति भावः । **युक्तिपुरस्कारेणेति** । इत्थं च महामल्लभङ्गन्यायेन युक्तिविरोधपरिहारस्य प्राथम्यमिति भावः । इतरविरोधत्रये अनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वादित्यादिना क्रमेणानन्तर्यबीजं ग्रन्थकृदेवाभिधास्यतीति ध्येयम् । **तदुपधानात्** । स्वनिरूपितविषयितात्वावच्छिन्नव्यापकतावच्छेदकतद्विषयितात्वकत्वरूपतद्घटितत्वात् । **तथो-च्यत इति** । प्रतियोगितावच्छेदकभेदनिबन्धनोऽभावभेदः सूपपाद इति भावः । **इत्युपपन्नमिति** । तथा च तस्येदमिति सूत्रानुशिष्टयुक्तिपदप्रकृतिकाणप्रत्ययेन प्रकृत्यर्थाश्रितविरोधप्रतियोगिताकलक्षणः संसर्गो बोध्यत इत्युपेयत इति भावः । दर्शिततद्धितप्रत्ययस्योक्तपरम्परासम्बन्धबोधकत्वोपगतिर्न श्रेयसीति मन्वानः कल्पान्तर-मारचयति **अथवेति** । गुणाश्रयो द्रव्यं, स च द्रव्यसमवायिकारणक इत्यादौ प्रक्रान्तोपसर्जनपरामर्शकत्वस्यापि सर्वनाम्नो दर्शनेन प्रकृतेऽपि पूर्वोच्चरितपदजनितोपस्थितिविशेष्यीभूताभावनिरूपितप्रतियोगितासंसर्गावच्छिन्न-प्रकारतापन्नस्यापि विरोधस्य सर्वनाम्ना परामर्शोपगमे न क्षतिरित्यभिप्रेत्याह **परामृश्यत इति** । **यौक्तो विरोध इति** । तादृशप्रत्ययेनाश्रयाश्रयिभाव एव प्रत्याप्यत इति भावः । तस्याश्चतुःस्वरूपत्वादिति नैसर्गिक-चातुर्विध्यस्यैवानुव्याख्यास्यमानतया नैसर्गिकतद्विशेषितयुक्त्याद्याश्रितविरोधप्रतियोगिकत्वनिबन्धनचातुर्विध्यस्य नैसर्गिकतद्विशेषितयुक्त्याश्रितत्वनियन्त्रितस्य वा तस्य कल्पद्वयदिशा व्याकृतिर्मूलकृत्यर्थमतिशेत इति प्रति-सन्दधानः कल्पान्तरमनुधावति **यद्वेति** । एतत्कल्पे युक्तिपदप्रकृतिकोक्तप्रत्ययस्य द्वितीयकल्प इव सामञ्जस्यस्य दुःसम्पादतया आद्यकल्पीयभङ्गीमेवाशिश्रिय इति मन्तव्यम् । **अविरोधो हीति** । विरोधनिरूपणाधीननिरूपणः इति बहुव्रीहिः । प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावधीहेतुत्वादिति भावः । विरोधितावच्छेदक-प्रकारकविरोधिज्ञानसाध्यत्वादविरोधज्ञानस्येति भाव इत्यप्याशयं प्रकाशयन्ति । **विरोधश्चेति** । निरूप्याधिगते-र्निरूपकतावच्छेदकोपरागेण निरूपकाधिगतिमन्तरेणानुदयादिति भावः ।

**॥ इति द्वितीयाध्यायगतपादभेदः, प्रथमपादप्राथम्ये निमित्तञ्च ॥**

* * *





**॥ अथ द्वितीयाध्यायीयप्रथमपादेऽपि प्रथमाधिकरणप्राथम्ये विशेषः ॥**

५ **सु०— प्रथमाधिकरणे विशेषमाह तत्रापीति ।**

**अनु०— तत्रापि च स्मृतेः ॥**

**अपिपदम् आदावित्यस्यानुकर्षणार्थम्, 'तत्र युक्तिविरोधाभावप्रतिपादके अपि पाद' इति अनौचित्यशङ्कासूचनार्थं वा । चशब्देन 'अविरोधः साध्यत' इत्येतदनुकृष्यते । स्मृतेः पाशुपतादिकायाः । यद्यपि स्मृतेरित्यस्य न नञर्थेन सम्बन्धो घटते, विरोधश्च समासे गुणभूतः, तथाऽपि बुद्ध्या विविक्तेन तेन सम्बन्धः सम्भवति ।**

**परि०— इत्यनौचित्यशङ्कासूचनार्थं वेति** । तत्सूचने सत्येव 'तस्याश्चतुःस्वरूपत्वादि'ति परिहारो युक्तः स्यादिति भावः । **न घटत इति** । तस्याः विरोधकत्वेनाविरोधोपपादकत्वाभावादिति भावः । अत एव 'न सङ्ख्योपसङ्ग्रहादि'ति सूत्रे पूर्वस्मादविरोधपदाकर्षे सति सङ्ख्योपसङ्ग्रहादपीति पञ्चम्या अविरोधपदेनान्वयास्वारस्यात् । पूर्वस्मात् बुद्ध्या विभागेन विरोधपदमात्रमाकृष्यत इति भावेन पृथक् नञुपात्त इति भावः । ननु स्मृतेरित्यस्य नञर्थेन सम्बन्धाभावेऽपि विरोध इत्यनेन सम्बन्धो भविष्यतीत्यत आह **विरोधश्चेति** । **समासे** नञ्समासे । **गुणभूतः** क्रियासापेक्षत्वेनेति शेषः । **तेन** विरोध इत्यनेन ।

**यादु०— अनौचित्यशङ्केति** । तथा च युक्तिविरोधाभावप्रतिपादकेऽस्मिन्पादे यद्यपि स्मृत्यविरोध-साधनमनुचितं तथाऽपि वक्ष्यमाणरीत्याऽनुसन्धाने उचितमेवेति योजनीयमिति भावः । **नञर्थेनेति** । अविरोधपदान्तर्गतनञर्थेनेत्यर्थः । स्मृतेरभाव इत्यर्थप्राप्त्याऽसङ्गत्यापत्तेरिति भावः । **समास इति** । अविरोध इति नञ्तत्पुरुष इत्यर्थः । इदं च पूर्वमेव व्याख्यातम् ।

**वं०प०— सूचनार्थं वेति** । अपिपदमिति वर्तते । **विरोधश्चेति** । यद्यपि नञर्थ एव समासे गुणभूतो न विरोधः तथाऽप्यविरोधपदस्य विरोधाभाव इति व्याख्याततत्वात् समासे गुणभूत इत्यर्थः । **तेन** विरोधपदेन ।

**कं०रा०— यद्यपीति** । अविरोध इत्यत्रत्यनञर्थेन विरोधाभावेन स्मृतेरित्यस्य सम्बन्धो न घटते विरोधाभावस्य स्मृतिनिरूपितत्वाभावेन तत्सम्बन्धायोग्यत्वात् अविरोधः इति समासान्तर्वर्तिविरोधपदोप-स्थापितविरोधस्तु गुणभूत इति न तेनापि सम्बन्धो घटते अतः स्मृतेरविरोधः प्रथमाधिकरणे साध्यत इति । **निर्देशोऽनुपपन्न इति** । यद्यपि तथाप्यविरोध इत्यत्र बुद्ध्याविविक्तेन विरोधपदेन स्मृतेरित्यस्य सम्बन्धो घटत एवेति तथा निर्देशो नानुपपन्न इति भावः ।





**शे०वा०— अनौचित्येति** । युक्तिविरोधपरिहारकेऽस्मिन्पादे स्मृत्यविरोधसाधनस्यासङ्गतत्वेनाकर्तव्यत्वेत्यर्थः । पाशुपतादिकाया इत्यादिपदेन साङ्ख्यबौद्धार्हतादिस्मृतिपरिग्रहः । **नञर्थेनेति** । अविरोधपदार्थान्तर्गतनञर्थेनेत्यर्थः । तथा सति स्मृतेरभाव इत्यर्थप्राप्त्याऽसङ्गत्यापत्तेरिति भावः । **समास इति** । अविरोध इति नञ्तत्पुरुष इत्यर्थः । **गुणभूत इति** । नञ्तत्पुरुषस्योक्तरीत्योत्तरपदार्थप्राधान्यात् नञ्विशिष्टविरोधपदलक्षितस्याभावविशेषस्य प्राधान्येऽपि, वाच्यस्य विरोधस्याप्राधान्यमभिप्रेत्येदमुक्तमित्यवधेयम् । **बुद्ध्या विविक्तेनेति** । स्मृतेर्यो विरोधः स नेत्येवं बुद्ध्या विविक्तेन विरोधेनान्वय इत्यर्थः ।

**स०व्र०**— ननु स्मृतेरित्यस्य नञर्थेन सम्बन्धासम्भवेऽपि विरोध इत्यनेन सम्बन्धो भविष्यतीत्यत आह **विरोधश्चेति** । **समासे** नञ्समासे । **गुणभूतः** क्रियासापेक्षत्वेनेति शेषः । **तेन** विरोध इत्यनेन ।

**विठ्ठल०**— शङ्कते **यद्यपीति** । यद्यप्यविरोध इत्यत्र नञर्थेनाभावेन स्मृतेरित्यस्य सम्बन्धो न घटते । अभावस्य स्मृतिनिरूपितत्वाभावेन तत्सम्बन्धायोग्यत्वात् नापि विरोधसम्बन्धः । **समास इति** । नञ्तत्पुरुषसमासे गुणभूतत्वात् । अतः स्मृतेरविरोध इति निर्देशोऽनुपपन्न इत्यर्थः । परिहरति **तथापीति** ।

**चषकः— अनौचित्येति** । युक्तिविरोधाभावव्युत्पादकप्रकृतचरणे स्मृत्यविरोधव्युत्पादनानौचितीशङ्काऽभिधास्यमानभङ्गीमननुसन्दधतामेवेति भावः । पाशुपतादिकाया इत्यादिपदं साङ्ख्यबौद्धार्हतादिस्मृतिपरिग्राहकम् । **नञर्थेनेति** । अविरोधपदघटकनञुपस्थाप्याभावेनेत्यर्थः । तथा सति स्मृतेः स्वनिरूपितानुयोगितासंसर्गेण तादृशाभावेऽन्वयप्राप्त्याऽसाङ्गत्यापत्तेरिति भावः । **समास इति** । नञित्यनेन नञः सुपा समस्ततया नञ्तत्पुरुष इत्यर्थः । **गुणभूत इति** । भूप्राप्तावात्मनेपदीति व्याख्यानात् भवतिरयं प्राप्त्यर्थः । **निष्ठाप्रत्ययश्च** कर्तृसाधनः 'गत्यर्थाकर्मक...' इति स्मृतेः (पा. सू.) । गुणशब्दश्च भावप्रधानः तथा च अविरोधपदाधीनान्वयबोधीयाभावनिष्ठविशेष्यतानिरूपितप्रकारतापन्न इत्यर्थः । **बुद्ध्या विविक्तेनेति** । स्मृतेर्यो विरोधः स नेत्येवं बुद्ध्या विविक्तेन विरोधपदेनान्वय इत्यर्थः ।

**॥ इति द्वितीयाध्यायीयप्रथमपादेऽपि प्रथमाधिकरणप्राथम्ये विशेषः ॥**
**॥ इति पूर्वापरसङ्गतिप्रदर्शने विशेषसङ्गतिप्रदर्शनम् ॥**

* * *

**॥ अथ पूर्वापरसङ्गतिप्रदर्शने सामान्यसङ्गतिप्रदर्शनम् ॥**
**॥ अथ स्मृत्यधिकरणस्य पादचतुष्टयसङ्गतत्वम्, प्राथम्ये निमित्तञ्च ॥**

६ सु०— युक्तिविरोधपरिहारलक्षणेऽत्र पादे स्मृतिविरोधपरिहारो न कर्तव्योऽसङ्गतत्वात्, कर्तव्यतायां वा प्राथम्यं कुतः; इत्यत आह **तस्या इति** ।





## अनु०— तस्याश्चतुस्स्वरूपत्वात्

**तस्याः पाशुपतादिस्मृतेर्युक्तिसमयादिविरोधिचतुस्स्वरूपत्वात् ।**

**एतदुक्तं भवति । पाशुपतादिस्मृतयो हि स्वयमाप्ताभिमतवाक्यतया समयरूपा अपि स्वाभिमतार्थे युक्तीः श्रुतीश्च संवादयन्त्यो युक्तिसमयादिविरोधिचतुष्टयरूपाः । ततश्चोक्तेऽर्थे तद्विरोधपरिहारोऽध्यायेऽन्तर्भवत्येव; किन्तु पादचतुष्टयार्थसङ्गतोऽ(प्य)यं न निष्कृष्यैकत्रैव पादेऽन्तर्भवति, ततोऽध्यायादौ तदन्ते वा वक्तव्यः, प्रथमातिक्रमे च कारणं न किञ्चिदस्तीति आद्याधिकरणे निरूप्यत इति ।**

**एवञ्च 'तत्रापि च स्मृतेः' इत्ययमुक्तस्यापवादो भवन्नपि न सर्वथेत्युक्तं भवति; समयादिविरोधस्यापि परिहारेण निष्कृष्टपादार्थाभावात्, युक्तिविरोधपरिहारस्यापि भावेन अन्तर्भावसम्भवाच्च ।**

**परि०—** तावता कथमसङ्गतिनिरास इत्यत आह **एतदुक्तं भवतीति** । अपवादत्वं सर्वथैवापवादत्वं नेत्येतत् द्वयमपि व्यनक्ति **समयादीति** ।

**गु०दी०— प्रथमातिक्रमे न किञ्चित्कारणमित्युपलक्षणम्** । एकैकविरोधपरिहारादपि चतुरात्मकविरोधस्य प्रबलतयाऽपि तस्यादौ निराकरणमिति द्रष्टव्यम् । **न सर्वथा** इत्यत्र देवताधिकरणवत्पादार्थस्पर्शं विनैवेत्यर्थः । तद्वत्प्रसङ्गसङ्गतिमात्रेण कथितं नेति भावः । **निष्कृष्टपादार्थाभावात्** इत्यत्र **निष्कृष्टपादार्थो** युक्तिमात्रविरोधपरिहाराख्य इत्यर्थः ।

**यादु०— विरोधिचतुष्टयरूपा इति** । इदं च पाशुपतसाङ्ख्यादिस्मृतीरभिप्रेत्य न तु बौद्धार्हतादिस्मृतीः । तत्र श्रुतिसंवादासम्भवेन चतुष्टयरूपत्वासम्भवादित्यवधेयम् । **निष्कृष्येति** । असाधारणो भूत्वेत्यर्थः । एवमग्रेऽपि निष्कृष्यपदमसाधारणपरम् ।

**वं०प०—** अनौचित्यशङ्केत्युक्तं विशदयन्नेवोत्तरवाक्यमवतारयति **युक्तिविरोधेत्यादिना** । **उक्तस्य** 'आदौ यौक्तः' इत्युक्तस्य । तदेव विशदयति **समयादीत्यादिना** ।

**कं०रा०— एवं चेति** । स्मृतीनां युक्तिसमन्वयादिविरोधिचतुष्टयरूपत्वेन तद्विरोधपरिहारस्य पादचतुष्टयार्थसङ्गतत्वे सति तत्रापि च स्मृतेरित्ययं ग्रन्थः यौक्तविरोधोऽत्र पादे साध्यत इति प्रागुक्तस्यापवादो





भवन्नपि न सर्वथापवाद इत्युक्तं भवतीत्यर्थः । तत्कुत इत्यत उक्तस्यापवाद इत्यंशमुपपादयति **समयादि-विरोधस्येति** ।

**श्रीनिधि०**— अपवादत्वं सर्वथापवादत्वाभावं चोपपादयति **समयादिविरोधस्यापि परिहारेणेति** । 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः । अथवा पञ्चमूर्तिः स प्रोक्तोऽधिकरणं प्रती'त्यादिनोक्तमित्यर्थः । अधिकविवक्षयेति भावः । न केवलमित्यारभ्य किन्त्वेतच्छास्त्रगतमत्यन्तं पूर्वोक्तानुवादः ।

**शे०वा०**— स्मृतेः चतुःस्वरूपत्वव्युत्पादनानर्थक्यमाशङ्क्य तत्प्रयोजनप्रदर्शनेन परिहरति **युक्तीति** । कथं पाशुपतादिस्मृतेर्युक्त्यादिचतुःस्वरूपत्वं तथात्वेऽपि वा कुतः स्मृतिविरोधपरिहारस्य प्राथम्यमित्यत आह **एतदुक्तं भवतीति** । **आप्ताभिमतवाक्यतयेति** । अत्रालौकिकार्थविषयत्वस्यापि विशेषणतयाऽभिप्रेतत्वान्नाति-प्रसङ्ग इति ध्येयम् । अत्र पाशुपतादीत्यादिपदेन साङ्ख्यादिस्मृतिरेवाभिमता न तु बौद्धार्हतादिस्मृतिरपि । तत्र श्रुतिसंवादाभावेन चतुष्टयरूपत्वासम्भवादिति ध्येयम् । अध्यायान्तर्भावेऽपि कुतः प्राथम्यमिति शङ्कते **किन्त्विति** । परिहरति **पादचतुष्टयेति** । **निष्कृष्येति** । असाधारणो भूत्वेत्यर्थः । एकैकाविरोधमात्रप्रति-पादकत्वात्पादविशेषाणां न तत्रास्यान्तर्भाव इत्यर्थः । प्रथमातिक्रमे च न किञ्चित्कारणमस्तीत्युपलक्षणम् । चतुरात्मकत्वेन प्रबलतया प्रथमं निरसनीयत्वाच्चेत्यपि द्रष्टव्यम् । अभ्युपेत्य चेदमुदितम् । वस्तुतस्तु चतुः-स्वरूपत्वादस्य चतुर्ष्वपि पादेष्वन्तर्भावसम्भवादुक्तहेतुभ्यां प्रबलत्वाच्चाद्यपादस्यादावस्य निवेशः । अत एवोत्तरत्र वक्ष्यति 'युक्तिविरोधपरिहारस्यापि भावेनान्तर्भावसम्भवाच्चे'तीत्यवधेयम् । अपवादो भवन्नित्यंशमुपपादयति **समयादीति** । न सर्वथेत्यंशमुपपादयति **युक्तिविरोधेति** ।

**विठ्ठल०**— तावता कथमसङ्गतिनिरास इत्यत आह **एतदुक्तं भवतीति** । **निष्कृष्येति** । असाधा-रण्येनेत्यर्थः । **समयादिविरोधस्यापीति** । नित्यत्वनिराकरणेन समवायविरोधस्य उक्तस्यापवादकत्वम् । तथापि न सर्वथा अपवादत्वमित्येतद्व्यनक्ति 'मृदब्रवीदि'ति श्रुतिविरोधपरिहारेण 'मृन्न वक्ति जडत्वादि'ति युक्ति-सहितपूर्वश्रुतिविरोधपरिहारेणेत्यर्थः ।

**चषकः**— अत एव 'न सङ्ख्योपसङ्ग्रहादि'ति सूत्रे कल्पनोपदेशादिति सूत्रादविरोधपदानुषङ्गे सति सङ्ख्योपसङ्ग्रहादिति पञ्चम्यादिरूपत्वे स्मृतिविरोधपरिहृतेः प्राथम्ये च बीजं प्रकाशयति **एतदुक्तं भवतीति** । **पाशुपतादिस्मृतय इति** । अत्रत्यादिपदं साङ्ख्यादिस्मृतिसङ्ग्राहकमेव । न बौद्धार्हतादिस्मृतिपरिग्राहकम् । तासां श्रुतिसंवादवैधुर्येण विरोधिचतुष्टयरूपत्वायोगादित्यवधेयम् । **आप्ताभिमतवाक्यतया** अलौकिकार्थविषयकाप्ति-मत्त्वोपरक्ताभिमतिविषयीभूतकर्तृकप्रणयनक्रियाकर्मीभूतवाक्यतया । चरणचतुष्टयार्थनिरूपितसङ्गतिविशेषित-तयैतस्यासाधारण्येन प्राथम्येन निवेशनं निर्बीजमित्याशङ्कते **किं त्विति** । **निष्कृष्य** । असाधारणो भूत्वा । **एकत्रैवेति** । चरणविशेषाणां चरणविशेषान्तरप्रतिपाद्यतावच्छेदकधर्मासमानाधिकरणधर्मावच्छिन्नप्रतिपादकतया चरणचतुष्टयीप्रतिपाद्यतावच्छेदकधर्मचतुष्टयीविशेषितस्यैतस्य तत्रान्तर्भाव इत्यर्थः । **न किञ्चिदिति** । उक्त-





धर्मचतुष्टयीविशेषितत्वनियन्त्रितप्राबल्येन प्राथम्येन व्युदसनीयत्वाच्चेत्यपि बोध्यम् । अपवादो भवन्नित्यंशं विवृणोति **समयादीति** । थालन्तेनाभिप्रेतं विशदयति **युक्तिविरोधेति** ।

**॥ इति स्मृत्यधिकरणस्य पादचतुष्टयसङ्गतत्वम्,**
**प्राथम्ये निमित्तश्च ॥**

* * *

**॥ अथ तत्र प्रत्यध्यायस्य चतुरध्यायात्मकत्वं, प्रतिपादस्य च पादचतुष्टयात्मकत्वं,**
**विवक्षाभेदेनाध्यायादिभेदोपपत्तिश्च ॥**

७ **सु०—** एकस्यैवाधिकरणस्य पादचतुष्टयार्थसम्बन्धेन चतुरस्वरूपत्वकथन(नेन)-प्रसङ्गाच्छिष्याणां शास्त्रे बहुमानोत्पादनायान्यदपि चातुर्विध्यं वक्ति **प्रत्येकमिति** ।

**अनु०—** प्रत्येकं चतुरात्मकाः ।
पादाः सर्वे तदंशाश्च

चत्वारोऽपि **पादाः प्रत्येकं चतुरात्मकाः** पादचतुष्टयार्थवन्तो द्रष्टव्याः । तद्यथा । युक्तिविरोधपरिहारलक्षणोऽप्ययं पादः समयादित्रयविरोधपरिहारात्मकोऽपि भवति, तथा समयविरोधपरिहारलक्षणोऽपि द्वितीयो युक्त्यादित्रयविरोधपरिहारात्मकोऽपि भवतीत्यादि । **पादा** इत्येवोक्ते सन्निहितत्वादेतदध्यायगता एवेति ज्ञायते, तदर्थं **सर्वे** इत्युक्तम्, सर्वाध्यायसम्बन्धिनोऽपीत्यर्थः । यो यदध्यायगतः पादः स तदध्याय(गत)पादचतुष्टयार्थ-वानवधे(से)यः ।

न केवलमेवं पादाः, किन्तु **तदंशाश्च** ते पादा अंशा येषां ते तदंशा अध्याया इत्यर्थः, प्रथमाध्यायः समन्वयस्येव अविरोधादित्रयस्यापि प्रतिपादको भवतीत्यादि । पादानां चतुरात्मकत्वेऽधिकरणानां तथात्वं सिद्धमेव ।

न च एवम् अध्यायादिभेदानुपपत्तिः पौनरुक्त्यदोषश्चेति वाच्यम्, विवक्षाभेदेन सामञ्जस्यात् । यदा प्रथमः समन्वयार्थो विवक्ष्यते न तदा तदर्थतेतरेषामित्यादि ।

**परि०—** विवक्षाभेदेन सामञ्जस्यादित्येतद्व्यनक्ति **यदा प्रथम इति** ।





**गु०दी०**— साक्षाद्बौद्धजैनोक्तपरमाणुपुञ्जसप्तभङ्गिवादयोर्निराकरणाभावेऽपि तदभिमतवेदाप्रामाण्यनिराकरणेन समयविरोधस्यापि सत्त्वात् । 'मृदब्रवीदि'त्यादि श्रुतिविरोधपरिहारेण तृतीयचतुर्थपादार्थयोरपि सत्त्वात् । 'मृन्न वक्ति जडत्वादि'त्यादि युक्तिविरोधस्तु स्फुट एव । एवं श्रुतिनित्यत्वसाधनेऽपि तदनङ्गीकारिणस्तार्किकस्याप्यस्ति कथञ्चित्समयविरोधः । 'ऋचः सामानि जज्ञिरे' इति श्रुतिविरोधः । वेदः पौरुषेयो वाक्यत्वादिति युक्तिविरोधश्च । प्रागभावजीवादिकर्तृत्वस्यापि विष्णुपक्षविरोधित्वेन सर्वदुर्वादिनामस्त्येवाङ्गीकारः । समयस्यापि स्वानुकूलयुक्तिश्रुत्यादिपुरस्कारेण प्रवर्तनादस्त्येव चतुरात्मता । तृतीयचतुर्थपादयोरपि श्रुतिपुरस्कारो गगनजीवेन्द्रियनित्यत्वादि वादिनां तार्किकादिसमयिनां प्रागभावाप्रतियोगित्वादियुक्तीनां पुरस्कारश्चास्त्येव । अतः सर्वेऽपि पादाः चतुरात्मका इति भावेन आह **युक्तिविरोधपरिहारलक्षणोऽप्ययं पाद** इति । पादभेदस्तु युक्तिसमयादीनां प्राधान्येन द्रष्टव्यः । नामसमन्वयस्यापि योगाश्रयणेनान्तर्गतलिङ्गात्मकत्वस्यापि सत्त्वात् । लोकतोऽन्यत्र प्रसिद्धेरलोकतो भगवति प्रसिद्धेश्च सत्त्वेन कथञ्चिदुभयत्र प्रसिद्धेश्च सत्त्वात् । निरीश्वरवादिनां मीमांसकानामन्यत्रैव प्रसिद्धेश्च सत्त्वात् । तृतीयचतुर्थपादार्थयोरपि प्रत्येकं नामलिङ्गसमन्वयरूपत्वाच्च अस्त्येव विवक्षाभेदेनैकैकस्यापि पादस्य चतुष्पादात्मकता । प्रथमाध्यायस्याऽऽन्तरविरोधपरिहाररूपतया प्रत्यधिकरणं हरेरन्येषां कोशादीनां निराकरणेन तत्र वैराग्यहेतुतया हरावेव समन्वयसमर्थनेन च तद्विषयभक्त्यादिजनकत्वेन 'अस्मिन्नस्य च तद्योगं शास्ति', 'मुक्तोपसृप्यव्यपदेशादि'त्यादिना तत्र तत्र फलाध्यायार्थस्यापि कथनात् । सर्वस्याप्यध्यायस्य फलमुद्दिश्य प्रवर्तनाच्च चतुरध्यायार्थत्वं द्रष्टव्यम् । द्वितीयाध्यायस्यापि हरौ सकलशब्दसमन्वयस्यैव तात्पर्यविषयत्वेन दुर्मतेषु वैराग्यजनकत्वेन हरावेव निष्कण्टकभक्त्याद्युपयोगित्वेन स्वविरोधिदुर्जननिराकरणसम्भ्रमसन्तुष्टहरिप्रसादान्मुक्तेरप्यन्तरङ्गसाधनतया च चतुरध्यायार्थत्वम् । एवं वैराग्यपादे मध्ये मध्ये हरौ भक्तेः भक्तिपादे च हर्युपास्त्यादेश्च निरूपणादेकैकपादस्य चतुष्पादात्मकत्वम् । नरकदायकत्व-स्वप्नादिहेतुत्व-ध्येयत्व-ज्ञेयत्वाद्यर्थकनामसमन्वयस्य प्रतिसूत्रं विरोधपरिहारस्य साक्षात्स्वोक्तसाधनसाध्यतया फलस्य निरूपणाच्चतुरध्यायार्थत्वम् । फलाध्यायस्य च मुक्तप्राप्यत्वभोगहेतुत्वादिनाम्नां मीमांसात्मकत्वादेव प्रतिसूत्रं विरोधपरिहारस्य भगवत्प्राप्तिसाधनार्चिरादिमार्गस्य क्रमिकसुखसाधनसारूप्यादिसाधनस्य 'मोक्ष-श्चतुर्विधः प्रोक्त' इति वचनात् सर्वत्रापि फलप्रतिपादनस्यापि सत्त्वेन चतुरध्यायार्थत्वम् । अर्चिरादिमार्गेऽपि तत्तल्लोकस्थितभगवत्प्राप्तेस्साधनप्राप्यभगवद्दर्शननिमित्तसुखस्य च सामीप्यसालोक्यादिस्थानप्राप्तेर्भोगविशेषाणां प्राप्त्याख्यमौक्तपरमोद्देश्यभोगानां च प्रतिपादनात् प्रत्येकं पादानां चतुष्पादात्मकत्वं च द्रष्टव्यमिति सर्वज्ञस्य भाष्यकृतोऽभिसन्धिः ।

**वं०प०**— **तथात्वं** चतुरात्मकत्वम् । पादान्तर्गतत्वादिति भावः । विवक्षाभेदमेव दर्शयति **यदेति** । **प्रथमः** अध्यायः ।

**कं०रा०**— न सर्वथापवाद इत्यंशमुपपादयति **इत्यादीति** । आदिपदेन श्रुतिविरोधपरिहारलक्षणोऽपि तृतीयो युक्त्यादित्रयविरोधपरिहारात्मकोऽपि भवति । तथा युक्तिकश्रुतिविरोधपरिहारलक्षणोऽपि चतुर्थो युक्त्यादि-





त्रयविरोधपरिहारकोऽपि भवतीत्येतद्गृह्यते । **भवतीत्यादीति** आदिपदेन द्वितीयाध्यायोऽविरोधस्येव समन्वयादित्रयस्यापि प्रतिपादको भवति । तथा तृतीयाध्यायः साधनस्येव समन्वयादित्रयस्यापि प्रतिपादको भवति । एवं चतुर्थाध्यायः फलस्येव समन्वयादित्रयस्यापि प्रतिपादको भवतीत्येतद्गृह्यते । विवक्षाभेदमेव दर्शयति **यदा हीति** ।

**शे०वा०— तथेति** । अत्रादिपदेन श्रुतिविरोधपरिहारलक्षणस्तृतीयो युक्त्यादिविरोधत्रयपरिहारात्मको भवतीत्यादेः सङ्ग्रहः । ननु सर्व इत्युक्तावप्येतदध्यायगता एव सर्व इति भविष्यतीति कथमुक्तशङ्कापरिहार इत्यत आह **सर्वाध्यायेति** । 'अविरोधत्रयस्यापि प्रतिपादको भवतीत्यादी'त्यादिपदेन द्वितीयाध्यायोऽविरोधस्येव समन्वयादित्रयस्यापि प्रतिपादको भवतीत्यादेः सङ्ग्रहः । ननु तदंशा इत्यस्य बहुव्रीहिमाश्रित्याध्यायपरत्ववत्तेषामंशा इति तत्पुरुषमाश्रित्याधिकरणपरत्वमप्यवश्यमाश्रयणीयमन्यथाऽधिकरणानां चातुरात्म्यानुक्तिप्रसङ्गात् तत्कथं बहुव्रीहिमात्रमाश्रित्याध्यायपरत्वाश्रयणमित्यत आह **पादानामिति** । **सिद्धमेवेति** । अतस्तदंशा इत्यस्याधिकरणपरत्वे सिद्धार्थप्रतिपादकत्वेन वैयर्थ्यप्रसङ्गाद्बहुव्रीहिमात्राश्रयणेनाध्यायपरत्वमेव तस्याश्रयणीयमिति भावः । एवं प्रथमाध्यायादेः, समन्वयादिप्रतिपादकत्ववदविरोधादित्रयप्रतिपादकत्वे तदध्यायगततत्तत्पादानां तदध्यायगतपादचतुष्टयार्थवत्त्वे चेत्यर्थः । सर्वेषां सर्वार्थप्रतिपादकत्वेनाध्यायादिभेदकस्यार्थभेदस्याभावादिति भावः । विवक्षाभेदमेव दर्शयति **यदेति** । आदिपदेन, यद्वा द्वितीयाध्यायोऽविरोधार्थो विवक्ष्यते न तदा तदर्थतेतरेषामित्यादेः यदा च प्रथमाद्यपादो नामसमन्वयलक्षणो विवक्ष्यते न तदा तदर्थत्वं तदध्यायगतेतरपादत्रयस्येत्यादेश्च परिग्रहः ।

**चषकः—** विवक्षाभेदमेवोपपादयति **यदा हीति** ।

**॥ इति तत्र प्रत्यध्यायस्य चतुरध्यायात्मकत्वं, प्रतिपादस्य च पादचतुष्टयात्मकत्वं, विवक्षाभेदेनाध्यायादिभेदोपपत्तिश्च ॥**

* * *

**॥ अथ च तत्र प्रतिवर्णं, प्रत्यक्षरं इत्यादिसमस्तशास्त्रस्य चतुर्मूर्तिप्रतिपादकत्वम् ॥**

८ **सु०—** अन्यदपि चातुर्विध्यं शास्त्रस्य दर्शयति **मूर्तीनामिति** ।

**अनु०—** मूर्तीनां वर्णमागमात् ॥

चतसृणां वासुदेवादिमूर्तीनां प्रतिपादकत्वेनापि चतुरात्मकत्वं ज्ञातव्यमिति योजना ।





**नन्वेतदुक्तमेव, पुनः कस्मादुच्यत इत्यत आह वर्णमिति ।**

**अत्र आगमात् इत्याङ्द्वयस्योपश्लेषो द्रष्टव्यः । तत्राद्यस्यारभ्येत्यर्थः, द्वितीयोऽभिविधौ । आगम इति चतुरध्यायिशास्त्रमुच्यते ।**

**ततश्चायमर्थः । न केवलं प्रत्यक्षरं प्रतिपदं प्रतिसूत्रं प्रत्यधिकरणं किन्त्वेतच्छास्त्रगतमेकं वर्णमारभ्य आ सर्वशास्त्रात्, प्रत्यधिकरणं प्रतिपादं प्रत्यध्यायं समस्तेन शास्त्रेण च, चतस्रो मूर्तयः प्रतिपाद्यन्त इत्यर्थः ।**

**कुत एतदवगन्तव्यमित्यत आह आगमादिति । बृहत्तन्त्रादेरित्यर्थः ।**

**परि०— उक्तमेवेति** । प्रथमपादान्ते । 'वर्णमागमादि'त्यत्र आ आगमादिति पदच्छेदभ्रान्तिं निराचष्टे **अत्रागमादित्याङ्द्वयस्येति** । तथा च आ आ आगमादिति पदविभागः कार्य इति भावः । आगमादित्यनेनाभिविध्यर्थकाङ्सम्बन्धमकृत्वा आगमादीति बृहत्तन्त्रादेरिति व्याख्यातमिति ध्येयम् । (प्रथम)प्रथमपादान्तोक्तमनुवदति **न केवलमिति** । **बृहत्तन्त्रादेरिति** । तथैव प्रागुक्तेरिति भावः ।

**गु०दी०— अत्र आगमादित्याङ्द्वयस्य** इत्यत्र वर्णमा आ आगमादिति आङ्द्वयस्य 'ऊकालोऽज्ह्रस्वदीर्घप्लुत' इत्यत्र उ-ऊ-ऊ३ इति ह्रस्वदीर्घप्लुताख्यस्योकारत्रयस्य 'अकः सवर्णे दीर्घ' इति द्विवारं दीर्घे कृते यथा भवति तथाऽत्रापि सङ्ग्रह इत्यर्थः । यद्यपि वर्णादिसर्वशास्त्रस्य सङ्ग्रहो जातः तथापि प्रकरणपादादिभेदेन पुनर्ग्रहणम् । यथा गोर्गोत्वपशुत्ववस्तुत्वादिना सङ्गृहीतया एव पुनर्दोग्धृत्वसवत्सत्वसास्नादिमत्त्वादिना ग्रहणेऽपि न पौनरुक्त्यम् । तथेहापीति भावेनाह **न केवलम्** इत्यादिना । सर्वज्ञो भगवान् भाष्यकारः आप्ततेत्यादिना स्वेनैवैकयोक्त्या सङ्गृहीतानां पूर्वपक्षसिद्धान्तयुक्तीनां मध्येऽनुवादव्याजेन पूर्वपक्षयुक्तीस्सूचयन् ता एव युक्तीः सिद्धान्ते प्रत्यधिकरणं सविस्तरं प्रतिपादयति न्यायविवरणे (तत्र प्रथमाधिकरणगतेयं युक्तिः) **रुद्रादीनां सकाशाद्विष्णवादीनामेवाप्तता** इत्यादिना असन्मतानां साक्षात्कथनं मम त्वच्छिन्नभक्तस्य नोचितमिति बाल-बोधायैव तत्सूचनमिति भावः । एकादशाधिकरणपूर्वपक्षसिद्धान्तयुक्तीः सपादश्लोकमात्रेण सङ्गृह्णतो मध्वमुनेरग्रे न कस्यापि वादिनः प्रत्यवस्थानमिति बुद्धिमता बोध्यम् । 'रुद्रादीनामपि सकाशाद्विष्णवादीनामेवाप्तते'त्यनेन पाशुपतागमकर्तुः पशुपतेरेवाप्तताऽस्ति न त्वपौरुषेयश्रुतेरिति पूर्वपक्षिणो हृदयं सूचितम् । उत्पत्तावेव स्थानसम्पदादिरागेण 'तेनोपसृष्टस्सन्त्रस्तः पराधावन् स वेपथुरि'ति भागवतवचनात् स्वहननायोद्यतहस्तभस्मासुरस्य शमनोपायाज्ञानेन 'रुद्रस्य त्वेव धनुरार्त्निः शिर उत्पिपेषे'ति श्रुतेः स्वहननायोद्यतवम्रिरूपन्द्रस्य कापट्याज्ञानेन स्वेनैव स्थिरायुर्भवेति दत्तवरस्य रावणादेर्हननोद्योगकरणेन विप्रलिप्सायाः





पारिजातहरणादौ हरिमपि जेष्यामीत्युद्योगकरणेन भ्रमस्य च सर्वजनसम्प्रतिपन्नत्वात् पशुपतेर्नाप्तता । किन्तु 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारये'ति हर्यनुज्ञयाऽसुरजनमोहनाय प्राप्ततारूपैवाप्तताऽस्ति । एवं चोक्तविधया रागेण आप्तताऽज्ञानेन आप्तताभ्रमेण आप्तताविप्रलिप्सया च आप्ततैवास्ति । त्वदभिलषिता त्वाप्तता दूरापास्तैव । सा च तवेष्टस्य बाधिकैव न साधिका । किं च वैदिकैर्न तावद्रुद्रस्याप्तताऽङ्गीक्रियते । तेषामनन्तवेदविभजनेनाष्टादशपुराणभारतब्रह्मसूत्राणां करणेन च सर्वज्ञं नारायणावतारं व्यासमेवाप्तीकृत्य तत्कृतब्रह्मसूत्रादावेव सदा निरतत्वात् । रुद्रस्याङ्गीकारे च कथं पाशुपतोक्तमार्गेण लिङ्गधारणादिकमपि न कुर्युः । अन्ततो मायावादिनाऽपि 'तयोः कार्यत्वेन निखिलजगत्सर्जनसंहरणसामर्थ्याभावादि'ति स्वग्रन्थे विधिरुद्रयोः स्पष्टमसमर्थत्वप्रतिपादनात् । नापि साङ्ख्यादिभिराप्तताऽङ्गीक्रियते । तैर्बुद्धऋषभकपिलादीनामेवाप्तत्वेनाङ्गीकरणात् । अतः केवलवैदिकैः शैवैरेवाङ्गीकृतं रुद्रस्य आप्तत्वं मूलप्रमाणाभावाद्दुराग्रहमूलमेव । किञ्च 'नारीसङ्गमत्तोऽसौ यस्मान्मामवमन्यते । योनिलिङ्गस्वरूपं हि तस्मादस्य भविष्यती'ति 'भृगुशापान्महेशस्य योनिलिङ्गस्वरूपते'ति पाद्मवचनात् 'योनिलिङ्गस्वरूपो भवे'ति भृगुणा शापे दत्ते मुनिशापाख्यासिना तत्क्षणादेवापगतकरचरणशिरआद्यवयवस्य भवतां रुद्रस्य उर्वरितलिङ्गमात्रेण योन्याकारपाणिपीठे स्थितेर्भवद्भिरस्माभिश्चाङ्गीकारेणासामर्थ्यस्य स्पष्टमुपलम्भाद्रागकलुषितहृदयस्य कथमाप्तता । अत एव हि 'घ्नन्शिश्नदेवाभिवर्पसाभूदि'ति श्रुतिर्गृहे गृहे बहुमूर्तिभिः शिवस्य शिश्नरूपतामाह । एतत्सर्वमभिप्रेत्योक्तं 'रुद्रादीनां सकाशाद्विष्णवादीनामेव आप्तत्वमि'ति । आदिपदेन मन्वादयो गृह्यन्ते । नन्वस्ति प्रसिद्धरुद्रादन्यः परशिवो नाम शिवः तस्य चाप्तत्वे नोक्तबाधकं बाधकमिति चेन्न । कैलासाधिपतिना रुद्रेण कृतपाशुपतागमप्रामाण्ये कथं त्वदुक्तपरशिवाप्ततायाः उपयोगः । न हि काकस्य कार्ष्ण्यात् प्रासादो धवलो भवति । तच्छिष्योऽयं रुद्र इति चेत्तर्हि कैलासाधिपतेः स्वस्यैव सर्वोत्तमत्वप्रतिपादकत्वदीयपाशुपतागमस्याप्रामाण्यप्रसङ्गः । किञ्च कस्मात्प्रमाणादयं परशिवः सिद्धः । न तावत् पाशुपतागमात् तत्रप्रसिद्धरुद्रस्यैव सर्वोत्तमत्वप्रतिपादनात् । तदितरस्य रुद्रस्याप्रसञ्जनाच्च नापि वेदात् । तत्रापि 'अम्बिकापतये उमापतये' इति प्रसिद्धरुद्रस्यैव प्रतिपादनात् 'एको रुद्रो न द्वितीयाय तस्थ' इति इतोऽतिरिक्तरुद्रनिषेधात् । 'माता रुद्राणामि'ति सकलरुद्राणामपि मातृश्रवणेन रुद्रत्वजात्याक्रान्तस्य यस्यकस्यचित्परशिवत्वे श्रौतयुक्तिविरोधाच्च । विष्णुब्रह्मशिवानामपि मूलीभूतं किञ्चिदस्तीति क्वाचित्कवचनं तु त्रयाणामपि मूलीभूतं किञ्चिद्वस्तु कल्पयतु । तस्य परशिवतां तु कुतः कल्पयेत् । तस्मिन्वाक्ये तद्वाचकपदाभावात् । अपि च विष्ण्वाख्यवामनावतारस्यादिभूते पद्मनाभाख्यमूलरूपेऽस्य वाक्यस्य सावकाशत्वाच्च न ततोऽतिरिक्तपरशिवकल्पकम् । किन्तु तस्यैव परशिवत्वकल्पकम् । 'धर्मिकल्पनातो धर्मकल्पनं वरमि'ति न्यायविदः । नापि पुराणात् । षण्णां वैष्णवत्वात् । षण्णां ब्राह्मत्वात् । षट्सु गौरीपतेरेव सर्वोत्तमत्वप्रतिपादनात् । अतोऽप्रामाणिकत्वात् तेषां तेषामेव सर्वोत्तमत्वप्रतिपादकाष्टादशपुराणविरुद्धत्वाच्च न ततोऽतिरिक्तः परशिवो-ऽङ्गीकर्तुमुचितः । ईशो महेश इतिवदेकस्यैव शिवः परशिवः इति नामद्वयसम्भवाच्च । अन्यथा महेशोऽप्यन्यः स्यात् । कैलासाधिपती रुद्रः । सत्यलोकाधिपतिर्ब्रह्मा । वैकुण्ठनिवासो विष्णु-





रितिवदमुकस्थाने परशिव इति स्थानविशेषानुक्तेश्च नासौ कल्प्यः । अन्यथाऽदृष्टस्थानविशेषं शशशृङ्गमपि कल्प्यं स्यात् । किं चासौ सशरीरश्चेदुत्पत्त्यादिदोषकलुषितत्वेन न परशिवः । अशरीरत्वे पञ्चमुखत्वव्यञ्जकव्यङ्ग्य-रुद्रत्वजात्यभावेन तन्निमित्तप्रवृत्तिकशिवशब्दप्रयोगायोगात् । 'शिवः शूली महेश्वर' इति ह्यभिधानम् । 'परः शिवः परो ध्येयः परं ज्ञानं परा गतिरि'ति वासुदेवसहस्रनामसु रुद्रोक्तविष्णवाख्यपरशिवस्यैव परशिवत्वे तस्य चाप्तत्वे अस्माकमेवेष्टसिद्धेः । ततोऽन्यपरशिवाङ्गीकारस्तु न शिवे परमादरवतां प्रेक्षावतामुचितः । न हि त्रिलोचनाविदितं पन्थानं द्विलोचनः कोऽपि पुरुषः पश्येत् । किन्तु शिवोक्तविष्णवाख्यपरशिवपरित्यागेन परशिवान्तराङ्गीकारे शिवद्रोहाख्यदोषोऽप्यधिकः पाशुपतोक्तलिङ्गधारणशिवार्चनादीनां च दत्तजलाञ्जलिता च स्यात् । मायावादिनां च शैवसमाचाराणां शिवोक्तपरशिवत्यागेन परशिवान्तराङ्गीकारे रुद्रद्रोहः । उक्तस्वमूलग्रन्थविरोधः । 'त्रिष्वधीशेषु को महानि'त्यादिभागवतोक्ताधीशत्रित्वविरोधः । 'ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटिसङ्घट्टिताङ्घ्रिकमलामलकान्तिकान्त । लक्ष्मीलसत्कुचसरोरुहराजहंस लक्ष्मीनृसिंह मम देहि करावलम्बमि'ति स्वाचार्योक्तिविरोधाच्च । अतो यत्किञ्चि-देतत् । किञ्च चिन्मात्रातिरिक्तपरशिवाख्यतत्त्वाङ्गीकारे सदद्वैतभङ्गप्रसङ्गः । तस्यैव तत्त्वे नामरूपरहिते तस्मिन् विशिष्य परशिवोक्तिवैयर्थ्यम् । लक्षणायां विशिष्यैकपदलक्षणा वैयर्थ्यमेव । तथा सति परशिवाख्यमुख्यतत्त्व-स्यान्यत्वेन प्रागुक्तदोषानुषङ्गाच्च । अतत्वतायां च न (?)परपरशिवत्वमित्यादयो दोषा द्रष्टव्याः । किञ्च 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती'ति श्रुतेस्सर्वनाम्नां विष्णुपरत्वाच्च न परशिवोऽन्यः सिद्ध्येत् । न च वाच्यं हरिवंशे कैलासयात्रायां 'त्वन्नामान्येव मन्नामानी'ति रुद्रेण कथनात् तस्यापि सर्वनामत्वमिति । श्रुतितः स्मृतेर्दुर्बलत्वेन स्वार्थासाधकत्वात् । 'ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरमि'ति स्कान्दपुराणवचनात्सर्वाणि मन्नामानि त्वन्नामानीति रुद्रस्य विष्णुदत्तकतिपयनाम-वत्त्वेऽपि स्मृतेस्सावकाशत्वात् । कैलासाधिपतेः सर्वनामवत्त्वेऽपि परशिवस्य किमागतम् । अतोऽसङ्गतिश्च । 'इन्द्रं मित्रं वरुणमग्निमाहुरि'ति वामनसूक्ते वामनस्य सर्वनामवत्त्वं स्पष्टमुक्त्वा 'यो देवानां नामधा एक एवे'ति सावधारणश्रुत्या सर्वदेवनामवतः एकत्वश्रवणाच्च न विष्णोरन्यस्य सर्वनामतादि स्मृतिशतेनापि सिद्ध्येत् । किन्तूक्तप्रबलश्रुत्यनुसारेण सैव स्मृतिः रुद्रान्तर्गतरुद्रनामकविष्णोरेव सर्वनामवत्त्वसाधिकैव भवेत् । श्रुतिश्च हरावेव प्रसिद्धविष्णुवामनादिनामवती नान्यत्र नेतुं शक्या । श्रुतेः रुद्रपरत्व एव हि श्रौतविष्णुपदवाच्यता तस्य स्यात् । हरौ विष्णुपदस्यानुशासने प्रसिद्धिविच्छिवे तदभावेन श्रुतिं विना नेतुमशक्यत्वात् । विष्णुनाम्नश्च शिववाचकत्वे एतच्छ्रुतिबलादेव सिद्धे प्रसिद्धिविरोधाभावात् श्रुतिस्तत्र नेयेत्यन्योन्याश्रयाच्च । हरौ तु विष्णुपदस्य लोक-प्रसिद्धत्वाद्विष्णुपदमहिम्नैव श्रुतिस्तत्र नीयते । रुद्र इव विष्णुपदवाच्यतायामपि श्रुतिनिरपेक्ष्यते । तस्माद्विष्णुविषये न कश्चित्क्षुद्रोपद्रवः । जलशायिना नारायणेन स्वनाभिकमलात्सर्वाग्रेसरं ब्रह्माणं सृष्ट्वा पुत्राय तस्मै पित्रा नारायणेनोपदिष्टे पञ्चरात्रशास्त्रेऽनाप्तिमूलतायाः प्रेक्षावता शङ्कितुमशक्यत्वात् कथं न आप्तिमूलता । वक्तु-र्जगत्कर्तृतया सर्वज्ञत्वेन अज्ञानाभावात् । यथा पूर्वं कर्तृत्वेन भ्रमाभावात् । 'आप्तकामस्य का स्पृहे'ति श्रुतेः प्रयोजननिरपेक्षत्वेन स्वसमीपस्थलक्ष्मीमुपेक्ष्य स्वोदरपद्मादेव पुत्रप्रसवितृत्वेन च रागाभावात् । पुत्रस्य च





विप्रलम्भायोग्यत्वेन विप्रलिप्साभावादपौरुषेयतया दोषामूलवेदमूलत्वेन च शङ्कास्पदप्रत्यक्षमूलग्रन्थान्तरवत् दुर्बल-मूलत्वाभावाच्च । किञ्च शैवमतस्य बाणजरासन्धरावणादयस्तामसा एवाधिकारिणः । पञ्चरात्रे तु ब्रह्मनारद-सनकादयः सात्त्विका एवाधिकारिणः । अतोऽपि पञ्चरात्रस्यैव प्रामाण्यमुचितम् । तद्वक्तुराप्तत्वं च कथं न सिद्ध्येत् । तस्मादाप्तत्वमस्माकमेव साधकं न परस्येति भावः ॥ १ ॥ **न श्रुतेः** इत्यत्र श्रुतेरपौरुषेयत्वेन प्रामाण्यम् । स्मृतेराप्तिमूलत्वेन प्रामाण्यम् । अतः साम्यमिति परस्य दुराशयः । रुद्रादीनां सकाशा-द्विष्णवादीनामेव आप्तत्वमिति वदतो गूढाभिसन्धेर्भाष्यकारस्य भावमजानानस्य रुद्रादीनामपीषदाप्तत्वमस्तीति मन्यमानस्येयं शङ्का । स्मृतेः पौरुषेयत्वेन पुरुषाणां च दोषशङ्कास्कन्दनान्नियतप्रामाण्यसाक्षिसाम्यं श्रुतेरेव । अतस्त्वदाशङ्किता समताऽपि ममैवार्थसाधिकेति भावः ॥ २ ॥ **अपि तु वचनादिशक्तायाः** इत्यत्र अपौरुषेयत्वेन प्रामाण्यस्य निश्चितत्वान्मृदादीनां वचनादृष्टिरेव तदन्तर्गतवचनशक्तदेवतायाः कल्पिकैव । अतोऽदृष्टिरपि ममैवार्थसाधिकेति भावः ॥ ३ ॥ **ईश्वरस्य सृष्टित्ववत्** इत्यत्र 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुत्या 'असद्वा इदमग्र आसीदि'ति श्रुतेः साम्यमिति परस्याशयः । जडस्य प्रागभावस्य कारणत्वमात्रसम्भवेऽपि बुद्धिपूर्वककारणत्वरूपकर्तृत्वासम्भवाददृश्यत्वाद्यर्थमादाय असच्छ्रुतिरपि ब्रह्मश्रुतेरेव समा । अतः श्रुतिसाम्यमपि ममैवेति भावः ॥ ४ ॥ **कर्माणि विज्ञानमयश्च** इत्यत्र 'एकीभवन्ती'ति श्रुतिबलाजीवस्योच्चब्रह्मत्वमपि भवतीति शङ्काबलोद्भवः 'परमं साम्यमुपैती'त्यादि निरवकाशवाक्यबलाद्ब्रह्मण एवोच्चत्वेन भव इति ममापि बलोद्भव एव साधक इति भावः ॥ ५ ॥ **न लौकिककार्यानुसारेण** इत्यत्र कृषीवलः करोति क्षेत्राधिपतेरेव धनधान्यादिक-मधीनं न कर्तुः कृषीवलस्य । गौर्दोग्ध्री दुग्धं तु गोपालाधीनम् । कोशरक्षकः कोशं रक्षति धनं तु राजाधीन-मित्यादिलौकिककार्यानुसारेण अकर्तृतन्त्रत्वं कर्त्रन्यतन्त्रत्वं जगत इति शङ्का । किन्तु तद्वैलक्षण्येन असमर्थत्वेन अल्पाल्पकार्येषु व्यापृतलौकिककर्तृवैलक्षण्येन सर्वकर्तृत्वेन निमित्तेन सर्वं जगत् भगवतैव कृतम् । सर्वकर्तृत्वा-देव तत्पालनसंहारादेरपि भगवतैव कर्तव्यत्वात् कथं न जगद्भगवदधीनम् । लोके तु कर्ताऽन्यः स्वाम्यन्यः । जगति तु 'एष सर्वेश्वर' इति श्रुतेः भगवतोऽन्यस्य सर्वस्वामिनोऽभावात् । अतस्सयुक्तिकसकलश्रुतिस्मृतिरूप-सर्वप्रमाणानुसारो ममैव साधकः । 'तत्सृष्ट्वा तदेवानुप्राविशदि'ति श्रुतिः ॥ ६ ॥ **श्रुतिसिद्धत्वेन** इत्यत्र अश्रुत-जीवकर्तृत्वस्याङ्गीकारात् श्रुतब्रह्मकर्तृत्वस्य त्यागायोगादन्ततस्तवैवोभयकल्पनया कल्पनागौरवम् । अस्माकं तु हरेरेकस्यैव कर्तृत्वाङ्गीकाराल्लाघवमेवेति लघुताऽप्यस्माकमेव साधिका ॥ ७ ॥ **विशेषाणामदर्शनं जीव** इत्यत्र जीवे विशेषाणामदर्शनेऽपि भगवतः किमायातमिति चेत्सत्यम् । चेतनत्वाविशेषात् तस्यापि न स्यादिति शङ्कितुर्हृदयम् । जीवाद्विशेषाणां ब्रह्मण्यदर्शनं जीवेष्वविद्यमानादृश्यत्वादिमहिमसाधकमेव न बाधकम् । 'तदव्यक्तमाह हि', 'न चक्षुषा पश्यति कश्चिदेनं' इत्यादिविशेषश्रुतेरेवेति भावः । अतो विशेषा-दर्शनमप्यस्माकमेव साधकम् ॥ ८ ॥ **फलापेक्षिणस्त्वपूर्णत्वात्** इत्यत्र फलापेक्षी यावति फलेऽपेक्षाऽस्ति तावदेव कुर्यात् न सर्वम् । फलानपेक्षी तु पूर्णत्वात् पूर्णानन्दत्वात् पूर्णशक्तित्वाच्च सर्वमपि कार्यं लीलया कुर्यादेव । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'ति हि श्रुतिः । अतः फलाभावोऽपि





सर्वकर्तृत्वसाधकः ॥ ९ ॥ **श्रुतेरप्रामाण्यम्** इत्यत्र श्रुतेः 'पुण्येन पुण्यं लोकं नयती'त्यादिश्रुतेः कर्मसापेक्षत्वादिष्टस्य पूर्णत्वस्यासिद्धिरिति पूर्वपक्षिणः आशयः । अनुकूलस्वाधीनमन्त्रिसापेक्षनृपतेरिव स्वाधीनकर्मापेक्षया फलदानानङ्गीकारे इष्टस्य 'पुण्येन पुण्यं लोकं नयती'त्यादिश्रुतिप्रामाण्यस्य तवैवासिद्धिः । अतोऽस्मदुक्तप्रमेयानङ्गीकारे तवैवेष्टासिद्धिः स्यादितीष्टासिद्धिरप्यस्माकमेवानुकूला ॥ १० ॥ **स्वतन्त्रस्य पूर्णगुणत्वनियमात्** इत्यत्र सर्वापेक्षितज्ञानादिशोभनगुणानां स्वतन्त्रत्वेन स्वाधीनत्वे कमपि गुणं न मुञ्चेदिति नियमोऽस्माकमेव सर्वगुणत्वसाधकः ॥ ११ ॥

**यादु०— नन्वेतदुक्तमेवेति** । 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः' इत्यत्रेति शेषः ।

**वं०प०— नन्वेतदिति** । वासुदेवादिमूर्तिचतुष्टयप्रतिपादकत्वमित्यर्थः । **उक्तमेव** प्रथमपादान्त इत्यर्थः । **आङ्द्वयस्येति** । तथा च वर्णं आ, आ आगमादिति पदच्छेदो द्रष्टव्यः । **न केवलमिति** । प्रथमाध्याय एवेति शेषः । प्रत्यधिकरणमित्यनन्तरं वासुदेवादिमूर्तिचतुष्टयप्रतिपादकत्वमिति शेषः । तथा च पूर्वं प्रथमाध्यायगतपदानामेव वासुदेवादिमूर्तिचतुष्टयप्रतिपादकत्वं 'सर्वश' इत्यनेनोक्तम्, इदानीं तु चतुरध्यायगतसर्वपदादिप्रतिपाद्यत्वमुच्यत इति न पुनरुक्तिरिति भावः ।

**कं०रा०— नन्वेतरदुक्तमेवेति** । शास्त्रस्य वासुदेवादिमूर्तिप्रतिपादकत्वम् । 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः । अथवा पञ्चमूर्तिः सः प्रोक्तोऽधिकरणं प्रति ॥ प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा । तैस्तैर्युक्तिश्रुतिन्यायविशेषैर्योग्यता यथे'ति प्रागुक्तमेव कस्मादुच्यत इत्यत आहेत्यर्थः । **एकं वर्णमिति** । तथा च वर्णस्याविशिष्टव्यञ्जनरूपाक्षराद्भिन्नत्वेन प्रत्यक्षरमित्यादिनोक्तस्यैवेदानीमनुक्तेर्न पुनरुक्तिरिति भावः ।

**शे०वा०— अन्यदपीति** । शिष्याणां शास्त्रबहुमानोत्पादनायेति शेषः । **उक्तमेवेति** । 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वश' इत्यादिनेति शेषः । विवक्षितार्थस्य भाष्यारूढतासिद्ध्यर्थमाह **अत्रागमादित्यादि** । आगमादित्यत्राङ् 'आङ् मर्यादावचन' इति कर्मप्रवचनीयः । वचनग्रहणादभिविधावपि । 'पञ्चम्यपाङ्परिभिरि'ति पञ्चमीति द्रष्टव्यम् । **चतुरध्यायिशास्त्रमुच्यत इति** । आगमशब्दस्य निर्दोषवाक्यमात्रपरत्वेऽपि पादाध्यायादिपदसमभिव्याहारात्सामान्यपरस्याप्यागमशब्दस्य चतुरध्यायिशास्त्रपरत्वमिति भावः । तावताऽपि 'उक्तमेव' इति न शङ्कापरिहारः, इत्यतोऽधिकविधानार्थमुक्तानुवादोऽयमित्यभिप्रेत्याह **ततश्चेति** । ततश्चेत्यस्य इत्यर्थ इति वक्ष्यमाणेनान्वयः । **अयमर्थ इति** । वासुदेवादिरूपेण चतुर्मूर्तिलक्षणोऽर्थ इत्यर्थः । 'बृहत्तन्त्रप्रमाणेने'ति नामपादीयानुव्याख्यानं मनसि निधायागमपदं तद्विशेषपरत्वेन व्याचष्टे **बृहत्तन्त्रादेरिति** । यद्यप्यत्र तदनुसारेण बृहत्तन्त्रादित्येव वक्तुमुचितम् । तथाऽपि तदुपलक्षणमिति भावेन बृहत्तन्त्रादेरित्युक्तमिति ध्येयम् ।

**वा०र०—** वर्णमागमादित्यत्र प्रविष्टाङ्द्वयमध्ये आद्यस्य वर्णमारभ्येति व्याख्यानेन आ वर्णमिति सम्बन्धः । आङ्मर्यादायां इति सूचितं भवति । द्वितीयस्य आङः आगमादिति सम्बन्धः । तत्र चाङ्योगे





पञ्चमीति सिद्धं कृत्वा तद्विधायके पञ्चम्यपाङ्परिभिः इति सूत्रे कर्मप्रवचनीयाङा योगे पञ्चमी विहिता । आङ् मर्यादावचने इति मर्यादार्थस्यैव आङः कर्मप्रवचनसंज्ञायाः विधानम् । तत् कथमत्र कर्मप्रवचनीयत्वं इत्याशङ्क्याह **आगमादित्यत्राङिति** । अत्रागमादित्यत्राङ् 'आङ् मर्यादावचने' इति कर्मप्रवचनीय इति पाठः । एक आङ् त्यागयुक्तस्तु लेखकदोषे निमित्तः । तथा चाङ् मर्यादावचने इति सूत्रे मर्यादार्थस्याङः इत्यर्थस्य आङ् मर्यादायाम् इत्युक्त्यैव लाभेन वचनग्रहणवैयर्थ्ये प्राप्ते तत्सान्निध्यात् अभिवृद्ध्यर्थस्यापि आङः कर्मप्रवचनीयत्वस्य लाभेन तद्योगे युक्ता पञ्चमीत्यर्थः । आगमादित्यत्र यः आङ् सः आङ् मर्यादावचने इति सूत्रेणार्थात् आरोपेऽर्थे कर्मप्रवचनीयो भवन् वचनग्रहणादभिविधावपि कर्मप्रवचनीयो भवति । ततश्च पञ्चम्यपाङ् परिभिरिति पञ्चमीति योजना । ततश्च आ सकलात् ब्रह्मेत्यादाविवाभिव्याप्त्यर्थत्वमत्रत्याङः इति भावेन मूले समस्तशास्त्रादिति व्याख्याय प्रत्यक्षमित्यादि प्रवचनं कृतमिति ध्येयम् । तथा च न तद्विरोधेनोक्तार्थस्यायुक्तत्वशङ्का । चकार इति पाठः । द्वितीयो नञ् लेखकदोषात् । मूलकोशे च एकस्यैव सत्त्वात् । अप्रामाण्यापादनं इष्टत्वादयुक्तं इत्युक्तमित्यनन्तरं अधने शेषः । तद्युक्तपाठस्तु स्वरस एव । अनेन पूर्वोत्तरग्रन्थविरोधः परिहृतः । साम्यापादनमात्रेऽपीति इत्येव प्रतीकोपादानपाठः ।

**स०व्र०— नन्वेतदुक्तमेवेति** । 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः । अथवा पञ्चमूर्तिस्स प्रोक्तोऽधिकरणं प्रति । प्रतिसूत्रं प्रतिपदं प्रत्यक्षरमथापि वा' इत्यनेनेति शेषः । वर्णमागमादित्यत्र आगमादिति पदभ्रान्तिं वारयितुमाह **अत्राङ्द्वयस्येति** । **आगमादिति** । अनेनाभिविध्यर्थकाङ्सम्बन्धमकृत्वा आगमात् बृहत्तन्त्रादेरिति व्याख्यानमित्युक्तं भवति ।

**विठ्ठल०— नन्वेतदुक्तमेवेति** । वासुदेवादिरूपेणेत्यादिना युक्तमित्यर्थः । **आगमादित्याङ्द्वयस्येति** । अत्र **आगमादिति** आङ्द्वयस्योपश्लेषः सम्बन्धो द्रष्टव्य इत्यर्थः । **न केवलं प्रत्यक्षरमिति** । तथा च पूर्वत्र अधिकरणपादाध्यायानां न सङ्ग्रहः । अत्र तु तत्सङ्ग्रह इति विशेषो द्रष्टव्यः ।

**चषकः— नन्वेतदुक्तमिति** । 'वासुदेवादिरूपेण चतुर्मूर्तिश्च सर्वशः' इत्यादिनेति पूरणीयम् । अत्राभिधित्सितार्थस्य मौलाक्षरानुपूर्वीमहिम्नैवाधिगततां दर्शयति **अत्रागमादित्यादि** । **आङ्द्वयस्येति** । आरम्भार्थकस्याभिविध्यर्थकस्य चाङः खटवाटकमित्यादिवत्सवर्णदीर्घे पश्चादुपसर्गसंज्ञकाङः सवर्णदीर्घे आगमादित्यत्र पाणिनीयप्रक्रियाधिगतिमतामाकारत्रयानुसंहितिर्भविष्यति । तत्रोपसर्गांशः पञ्चम्यन्तपदावयवः । संहितैकपदे नित्या नित्या धातूपसर्गयोरि'ति वचनात् । दर्शितार्थकौ द्वावाङौ तु तद्बहिर्भूतावसमस्तौ । आतृणादाविरिञ्चादीशनियमनमित्यादिवत् । आङ्मर्यादाऽभिविध्योरित्यनेन तु प्रकृतेन समासः । समासविधेर्विभाषाधिकारीयत्वात् । तत्रारम्भार्थकेनाङा द्वितीयान्तमभिविध्यर्थकेन तेन पञ्चम्यन्तमन्वेति । तत्रावृत्त्याद्याश्रयणेन पञ्चम्यन्तं बृहत्तन्त्रत्वाद्यवच्छिन्नप्रमाणलक्षकं सत् अध्याहृतेनावगन्तव्यमित्यनेनान्वेति । तत्र चाङ्मर्यादावचन इति योगानुशिष्टकर्मप्रवचनीयसंज्ञो मर्यादार्थकाङ् तत्र वचनग्रहणबलाधीनतत्संज्ञकश्चाभिविध्यर्थकः । 'पञ्चम्यपाङ्परिभिरे'तैः कर्मवचनीयैर्योगे पञ्चमी भवतीत्यागमपदस्य पञ्चम्यन्तता अवसेया । **चतुरध्यायिशास्त्रमिति** ।





द्विगोरिति ङीप् । नन्वागमपदस्य चतुर्लक्षणीशास्त्रपरत्वोपगत्या न पौनरुक्त्यशङ्का अपहस्तितेत्याशङ्काया-मधिकविधानफलकोऽयं प्रथमपादान्तोक्तानुवाद इत्यभिप्रेयिवानभिधत्ते **ततश्चेति** । आगामिना 'इत्यर्थ' इत्यनेनान्वेति । इत्थं चात्र नामपादान्तोक्तां प्रत्यक्षरं प्रतिपदं प्रतिसूत्रं प्रत्यधिकरणं भगवन्मूर्तीनां प्रति-पाद्यतामनूद्य प्रकृते कृत्स्नशास्त्रप्रतिपाद्यतालक्षणाधिकार्थो विधीयत इति नोक्तक्षत्यवकाश इति भावः । न च सुधायां प्रथमपादान्ते कथनादस्मिन्नेव पाद इति भाति तन्निरासायोक्तं **सर्वशः** । 'सर्वेषु पादेष्वि'ति व्याख्याततया सर्वपादात्मकृत्स्नशास्त्रप्रतिपाद्यतापि तत्राभिहितैवेति नायमधिकांश इति वाच्यम् । एकदेशप्रतिपाद्यतातः समुदायप्रतिपाद्यताया अनतिरेके, प्रत्यक्षरं प्रतिपदमित्येतावतैव पूर्तौ शेषोदाहरणासाङ्गत्यप्रसङ्गात् । पङ्कज-पाचकादिपदेष्वेकदेशप्रतिपाद्यताकूटादपि समुदायप्रतिपाद्यतायाः पृथक् दर्शनाच्च । प्रकृतेऽपि तत्तद्व्यक्तित्वा-वच्छिन्नतत्तत्पादव्यक्तिवृत्तिनिरूपकताकप्रतिपाद्यताकूटात्पादचतुष्टयपर्याप्तव्यासज्यवृत्त्यध्यायत्वावच्छिन्ननिरूपक-ताकप्रतिपाद्यतायाः भेदसम्भवात् । व्याचक्षाणा अपि अधिकविधानार्थमुक्तानुवादोऽयमित्यभिप्रेत्याह ततश्चेतीति व्याकुशासिषुः । प्रथमपादोक्तमनुवदति **न केवलमिति** । इत्यप्यवतारयन्निति मन्तव्यम् । अत्र चन्द्रिकायां '' 'पदात्यादिषु भग्नेषु गजाश्वादिप्रवृत्तिवत् । युक्त्यादिषु निरस्तेषु समयादिप्रवृत्तितः ।' अनुमानमात्रस्य काम-चारत्वेनातिदुर्बलत्वात्, समयानां च वेदवदकामचारित्वेऽपि अतिदार्ढ्येन बहुजनपरिगृहीतत्वेऽपि पौरुषेयतया शङ्कितदोषत्वेन दुर्बलत्वात्, श्रुतिमात्रस्य समयाद्बलवत्त्वेऽपि सोपपत्तिकश्रुतिवत् बलवत्वाभावात्, पदात्यादि-भङ्गानन्तरमेवाश्वादिवत्, अनुमानादिनिरासानन्तरमेव विरोधिसमयादेः प्रवृत्तेः पादक्रमः । 'यद्वा बहिरङ्गैर्विरोधो हि झटित्येव प्रतीयते । अन्तरङ्गैः स्वगोत्रैस्तु विलम्बेन प्रतीयते ।' अनुमानस्याशब्दत्वेन विजातीयतयाऽति-बहिरङ्गत्वं, समयानां शब्दत्वेऽपि श्रुतित्वाभावात् बहिरङ्गत्वम् । श्रुतेः सिद्धान्त्यभिमतसयुक्तिकश्रुत्यन्तरङ्गत्वम् । सयुक्तिकश्रुतेस्तु तथात्यन्तान्तरङ्गत्वम्, लोके चातिबहिरङ्गादिविरोधज्ञानानन्तरमेव बहिरङ्गादिविरोधधीरिति निरस-नीयविरोधधीक्रमात् पादक्रमः । यद्वा विरोधादेर्युक्त्यधीनत्वात्, तथा मीमांसाया युक्तिपुरस्कारेण प्रवृत्तेः तथा समयानामपि युक्तिमूलत्वात्, तथा वेदोऽप्रमाणं आप्तप्रणीतत्वादिति, साक्षात्कृत्स्नवेदाप्रामाण्यसाधकत्वात्, एकस्य समयिनः समयान्तर इव युक्तावनादराभावाच्च युक्तिविरोधः समयविरोधादपि प्रबलः । समयानां तु अनादिकालतोऽविच्छेदेन बहुजनपरिग्रहेण वेदतुल्यत्वेऽपि वेदवन्निर्मूलत्वाभावात् अत्यन्तभ्रमहेतुतया तत्त्व-ज्ञानस्यातिविरोधित्वात्, श्रुतिविरोधवत् समयविरोधस्य प्रातीतिकमात्रत्वाभावाच्च श्रुतिविरोधात् समयविरोधः प्रबलः । एवं च महामल्लभङ्गन्यायेन पादक्रमः । इममेव च क्रममभिप्रेत्य टीकायां 'तत्र सर्वविरोधानां युक्तिमूलत्वेने'त्यादि, द्वितीयपादे च 'इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वादित्युक्तम् । अयं च महामल्लभङ्गन्यायः पादत्रय एवाभिप्रेतः । चतुर्थपादस्य तु युक्तिश्रुत्युभयविरोधप्रपञ्चनपरत्वाद्वा मुमुक्षुणा अन्ते जिज्ञास्याध्यात्मविषयत्वाद्वा अन्त्यतेति द्रष्टव्यम् । यद्वा उक्तरीत्या युक्तेः प्रबलत्वादादौ तदविरोधः । अथ 'इतरेषां चानुपलब्धेरि'ति आद्यपादोक्तहेतुप्रपञ्चनरूपत्वात् समयाविरोधः । अनन्तरं, यदि 'विप्रतिषेधाच्चे'ति द्वितीयान्त्यन्यायेन श्रुतिविरोधात्परस्परविरोधाच्च मतान्तराप्रामाण्यम् तर्हि तत एव परस्परविरोधात् श्रुतीना-मप्रामाण्यमिति शङ्कोदयाच्छ्रुत्यविरोधः । पश्चाद्यदि 'यावद्विकारं तु विभागो लोकवदि'ति युक्त्यनुगृहीतया





आकाशादेरुत्पत्तिश्रुत्या अनुत्पत्तिश्रुतिर्गौणी तर्ह्युपादानाभावादियुक्तिसहितया प्राणानामनुत्पत्तिश्रुत्या तदनित्यत्वादिश्रुतिर्गौणीति शङ्कोदयात् सयुक्तिकश्रुत्यविरोध इति पादक्रमः'' इति स्थितम् ।

**॥ इति च तत्र प्रतिवर्णं, प्रत्यक्षरं इत्यादिसमस्तशास्त्रस्य चतुर्मूर्तिप्रतिपादकत्वम् ॥**

**॥ इति पूर्वापरसङ्गतिप्रदर्शने सामान्यसङ्गतिप्रदर्शनम् ॥**

**॥ इति पूर्वापरसङ्गतिप्रदर्शनम् ॥**

* * *

**॥ अथ एतत्पादाधिकरणपूर्वपक्षसिद्धान्तयुक्तोनां सङ्क्षेपेणोक्तिः ॥**

९ **सु०**— एतत्पादाधिकरणपूर्वपक्षसिद्धान्तयुक्तीः सङ्क्षेपेणाह **आप्ततेत्यादिना ।**

**अनु०**— आप्तता समताऽदृष्टिश्रुतिसाम्यबलोद्भवाः ।
सर्वानुसारो लघुता विशेषादर्शनाफले ॥
इष्टासिद्धिश्च नियमः पूर्वपक्षेषु युक्तयः ।
एता एव त्वतिबलाः सिद्धान्तस्य नियामिकाः ॥

**परि०**— **आप्ततेत्यादिनेति** । आप्ततेत्यादियुक्तिमालाया न्यायविवरण एव विवृतत्वादत्राव्याख्यानमिति पूर्वाध्याय एव व्यक्तम् । आद्यनये **आप्तता** ॥ १ ॥ न विलक्षणत्वादित्यत्र **समता** ॥ २ ॥ अभिमानीत्यत्र **अदृष्टिः** ॥ ३ ॥ असदिति चेदित्यत्र **श्रुतिसाम्यम्** ॥ ४ ॥ भोक्त्रापत्तेरित्यत्र **बलोद्भवः** ॥ ५ ॥ तदनन्यत्वनये **सर्वानुसारः** ॥ ६ ॥ इतरव्यपदेशादित्यत्र **लघुता** ॥ ७ ॥ अधिकं त्वित्यत्र **विशेषादर्शनम्** ॥ ८ ॥ न प्रयोजनेत्यत्र **अफलम्** ॥ ९ ॥ वैषम्येत्यत्र **इष्टासिद्धिः** ॥ १० ॥ सर्वधर्मेत्यत्र **नियम** इति विवेकः ॥ ११ ॥

**स०व्र०**— **आप्ततेत्यादिनेति** । अस्यार्थः न्यायविवरणादवगन्तव्यः ।

**॥ इति एतत्पादाधिकरणपूर्वपक्षसिद्धान्तयुक्तोनां सङ्क्षेपेणोक्तिः ॥**

* * *





॥ अथ 'स्मृत्यनवकाशे'त्याद्याद्यसूत्रार्थप्रदर्शनम् ॥
॥ अथ पूर्वपक्षसूत्राभिप्रायः ॥
॥ अथ आप्तोक्तं वारयितुं श्रुतिर्न समर्था ॥

१० सु०— उक्तार्थं स्मृतिविरोधेनाक्षिप्य समादधत्सूत्रम्—

**ब्र०सू०—ॐ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्य-स्मृत्यनवकाशदोषप्रसङ्गात् ॐ ॥**

अस्यार्थः । यदुक्तं परस्य ब्रह्मणो विष्णोः सकलजगज्जन्मादिकारणत्वं सार्वज्ञ्यादि-सकलगुणपूर्णत्वं समस्तदोषदूरत्वं च तदयुक्तम्, पाशुपतसाङ्ख्यबौद्धार्हतादिस्मृति-विरुद्धत्वात् । ता हि शिवप्रभृतीनामेव जगज्जन्मादिकारणत्वादिकं प्रतिपादयन्ति । न च तासामन्योऽवकाशोऽस्ति येन प्रतीतेऽप्यर्थे तात्पर्याभावं प्रतीमः, अन्यथा तासां स्मृतीनामनवकाशेनाप्रामाण्यलक्षणदोषप्रसङ्ग इति । तन्न, पुरुषोत्तमस्यैव पञ्चरात्रादि-स्मृतिभिरखिलजगत्कारणत्वादेरुक्तत्वात्, अपर(न्य)था तासां पाशुपतादि(स्मृति)भ्यो-ऽन्यासां पञ्चरात्रादिस्मृतीनामवकाशान्तराभावेन अप्रामाण्यदोषप्रसङ्गादिति ।

''तत्राक्षेपस्तावदयमयुक्तः, श्रुतिसमन्वयेनास्यार्थस्य साधितत्वात्, श्रुतिविरुद्धानां (च) स्मृतीनामप्रामाण्यस्येष्टत्वात्, श्रुतिसमन्वयन्यायेन पाशुपतादिस्मृतीनामपि परब्रह्मणि समन्वयेन शिवार्चनादिपरत्वेन वा सावकाशत्वाच्च ।

समाधानमपीदमयुक्तम्, सकलशास्त्रप्रमाणकत्वमुक्तार्थस्याभिधाय इदानीं स्मृति-मात्रोपादाने कारणाभावात् । पराभिधित्सितं दोषमवबुध्य श्रुतिपरित्यागस्त्वयुक्तः, किन्तु स परिहर्तव्यः, अन्यथा प्रागपि श्रुतिः अनादेया स्यात् ।

किञ्च पञ्चरात्रादिस्मृतीनामप्रामाण्यं परस्येष्टमेव, वासुदेवार्चनादिपरतया सावकाश-ताऽपि तेन सम्भाव्येत, साम्यापादनमात्रेऽपि परस्यैव जयो निश्चयप्रतिबन्धकत्वात्'' इत्यतो निर्दलं पूर्वपक्षं तावदुज्जीवयति **आप्तैरिति** ।

**अनु०— आप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थं कथं श्रुतिः ।**
**पिपीलिकालिपिनिभा वारयेत्सर्वगा हि ते ॥**





**अयमिहाभिसन्धिः पूर्वपक्षिणः । श्रुतिविरोधेन स्मृतीनाम् अप्रामाण्यमभिलषता प्रबलदुर्बलत्वे सर्वथा समर्थनीये, अन्यथाऽतिप्रसङ्गात् ।**

**न तावत् प्रामाण्यकारणभावाभावाभ्यां प्राबल्यदौर्बल्ये, प्रामाण्यस्य स्वतस्त्वेन अङ्गीकृतत्वात्, वैपरीत्याच्च । वाक्यप्रामाण्ये हि कारणं वक्तुराप्तत्वम् । वक्तारश्च स्मृतीनामाप्ताः, न श्रुतेः, अपौरुषेयत्वेनाङ्गीकृतत्वात् ।**

**अत एव न समूलत्वनिर्मूलत्वाभ्याम्, स्मृतीनामाप्तमूलत्वात्, श्रुतेस्तदभावात् ।**

**नापि कृत्रिमत्वाकृत्रिमत्वाभ्याम्, स्वरूपतोऽप्रयोजकत्वात्, उक्तरीत्या वैपरीत्याच्च ।**

**तदिदमुक्तम् आप्तैः रुद्रकपिलकमलासनादिभिः, उक्तमर्थं शिवादीनां जगत्कारणत्वादिकं, पिपीलिकालिपिनिभा बुद्धिपूर्वप्रणयहीना, श्रुतिः, कथं वारयेत् न कथमपीति ।**

**परि०—** आप्तैरित्यादिभाष्यमवतारयितुमुपोद्घातमाह **उक्तार्थमित्यादि** । पूर्वाध्यायोक्तार्थमित्यर्थः । एवमग्रेऽपि ज्ञेयम् । तद्विवृण्वन् सूत्रार्थमाह **यदुक्तमित्यादिना** । भाष्याद्युक्तादयमन्योऽर्थ इति ध्येयम् । कथं श्रुतिर्वारयेदित्येतद्व्यावर्त्यमाह **श्रुतीति** । **अस्यार्थस्येति** । 'यदुक्तं परस्ये'-त्यादिनोक्तार्थस्येत्यर्थः । 'प्रत्यक्षतो दृष्ट्वे'त्येतद्व्यावर्त्यमाह **श्रुतिविरुद्धानां चेति** । प्रोक्तमित्यत्र प्रशब्दव्यावर्त्यमाह **श्रुतिसमन्वयन्यायेनेति** । सममित्यस्य मया सहितमित्यर्थमुपेत्य तद्व्यावर्त्यमाह **पराभिधित्सितमिति** । परस्याभिधातुमिष्टमित्यर्थः । अवबुद्ध्येत्यनन्तरं कृत इति योज्यम् । तेन ल्यबन्तोपपत्तिः । 'हरिपूर्वकाः । किं नाशेषविदः' इत्येतद्व्यावर्त्यमाह **किञ्च पञ्चरात्रादीति** । प्रामाण्यस्य गुणजन्यत्वमुपेत्याह **वैपरीत्याच्चेति** । तदेव व्यनक्ति **वाक्येति** ।

**यादु०—** बौद्धार्हतादीत्यत्रादिपदेन कणादादिग्रहणम् । **श्रुतिसमन्वयन्यायेनेति** । 'नामानि सर्वाणि यमाविशन्ती'ति श्रुत्यवष्टम्भेन 'ज्ञात्वा शिवं शान्तिमत्यन्तमेती'त्यादिश्रौतशिवादिशब्दानां विष्णुपरत्वमेवेति न्यायेनेत्यर्थः । **सकलशास्त्रेति** । श्रुत्यादिसकलशास्त्रेत्यर्थः । **पराभिधित्सितमिति** । पिपीलिकालिपिनिभत्वरूपमित्यर्थः । ननु सूत्रे सिद्धान्तांशस्य न पञ्चरात्रादिस्मृत्यप्रामाण्यापादने तात्पर्यं येनेष्टापादनं स्यात्किन्तु पाशुपतादिस्मृतिवत् पञ्चरात्रादिस्मृतीनामप्याप्तप्रणीतत्वेनान्यत्रानवकाशात् पाशुपतादिस्मृतिसाम्यमेव तासां स्यात् । ततश्च न पूर्वपक्षनिर्णय इति साम्यापादनमात्र इत्यत आह **साम्यापादनमात्र इति** । पूर्वपक्षिणो





वैतण्डिकत्वादिति भावः । अपौरुषेयत्वेनाङ्गीकृतत्वादित्यत्र साङ्ख्यपाशुपतादयः पूर्वपक्षिणश्चेदुभाभ्यामिति शेषः । तेषां मते वेदस्यापौरुषेयत्वात् । कणादादयश्चेत्सिद्धान्तिनेति शेषः । तेन कणादादिमते वेदस्य पौरुषेयत्वादेते प्रामाण्यकारणाभावनिर्मूलत्वादयः पूर्वपक्षहेतवोऽसिद्धा इति शङ्काऽनवकाश इति ध्येयम् । **कृत्रिमत्वाकृत्रिमत्वाभ्यामिति** । 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति परिभाषया कृत्रिमत्वमेव प्राबल्ये प्रयोजकमकृत्रिमत्वं तु दौर्बल्ये । अन्यथा 'आणनद्याः' इत्यादौ 'यूस्त्र्याख्यौ नदी'ति परिभाषिता स्थालीत्यादिका नदीशब्देन ग्राह्या न स्यात् । किन्तु गङ्गाद्याः सरित एव ग्राह्याः स्युरिति भावः । **स्वरूपत इति** । साक्षादेवेत्यर्थः । अप्रयोजकत्वादतिप्रसङ्गाच्चेति भावः । अथ कृत्रिमत्वादिकं न स्वरूपेण प्राबल्यादिप्रयोजकं किन्त्वाप्तिमूलकत्वादिसम्भावकं सदित्यत आह **उक्तरीत्येति** ।

**वं०प०— अवकाश**ः अन्यस्मिन्नर्थे घटनेत्यर्थः । **अन्यथेति** । प्रतीतेऽप्यर्थे तात्पर्यं न चेदित्यर्थः । **स**ः दोषः । **अन्यथा** पिपीलिकालिपिनिभत्वेन प्रामाण्यं श्रुतेरिति प्रबलं परोक्तं दोषं ज्ञात्वा तमपरिहृत्य श्रुतित्यागेन स्मृतिमात्रस्यैवोपादानं यदि क्रियत इत्यर्थः । **स्यात्** समन्वेतव्यतया । ननु नास्माभिः पञ्चरात्रादिस्मृत्येतरस्मृतीनां बाध उच्यते किन्तु सत्प्रतिपक्षत्वेन साम्यमिति साम्यापादनमात्र एव तात्पर्यमिति चेत् तत्राह **साम्येति** । **निश्चयेति** । सिद्धान्तिनां विष्णोः कारणत्वनिश्चयेत्यर्थः । **स्वतस्त्वेनेति** । गुणरूपकारणापेक्षाऽभावादिति भावः । **वैपरीत्याच्चेति** । प्रत्युत स्मृतावेव प्रामाण्यकारणभावात्प्राबल्यं, तदभावात् श्रुतीनामेव दौर्बल्यमित्यर्थः । एतदेव विशदयति **वाक्येत्यादिना** ।

ननु कृत्रिमत्वादिकं न स्वरूपेण प्राबल्याद्युपपादकं किं नाम कृत्रिमत्वे आप्तिमूलकत्वं प्राप्तम् अकृत्रिमत्वे च तदभावः । तथा चाप्तिमूलकत्वसम्भावकत्वादिना प्राबल्याद्युपपादकं भविष्यतीत्यत आह **उक्तरीत्येति** । 'वाक्यप्रामाण्ये ही'त्युक्तरीत्या प्राबल्यप्रयोजकं आप्तिमूलकत्वसम्भावकं कृत्रिमत्वं स्मृतावेव अस्तीत्यर्थः ।

**कं०रा०— सकलशास्त्रेति** । विष्णोर्जगज्जन्मादिकारणत्वादिरूपार्थस्य सकलश्रुतिस्मृत्यादिप्रमाणकत्वमभिधाय इदानीं श्रुतिपरित्यागेन स्मृतिमात्र ग्रहणे कारणाभावादित्यर्थः । नन्वाप्तिमूलकत्वरहितायाः श्रुतेः प्रामाण्यमेव न सम्भवतीति यो दोषः परेणाभिधित्सितस्तद्भयाच्छ्रुतिपरित्यागः कृत इत्यत आह **पराभिधित्सितमिति** । **अन्यथेति** । पराभिधित्सितदोषभयादिदानीं श्रुतिपरित्याग इत्यर्थः । **वैपरीत्यादिति** । प्राबल्यप्रयोजकस्य प्रामाण्यकारणभावस्य स्मृतिष्वेव सत्त्वादिति भावः । तदेव दर्शयति **वाक्यप्रामाण्ये हीति** । **समूलत्वनिर्मूलत्वाभ्यामिति** । प्राबल्यदौर्बल्ये इत्यनुवर्तते । अतः शब्दपरामृष्टं स्मृतीनामाप्तिमूलत्वेन समूलतया वैपरीत्यादिति हेतुं दर्शयति **स्मृतीनामिति** । कृत्रिमत्वेन स्मृतीनां दौर्बल्यमकृत्रिमत्वेन श्रुतेः प्राबल्यमित्यपि नेत्यर्थः । **स्वरूपत इति** । कृत्रिमत्वाकृत्रिमत्वयोः स्वरूपेण दौर्बल्यप्राबल्ये प्रत्यप्रयोजकत्वान्न हि कृत्रिममित्येतावन्मात्रेण दुर्बलं भवति नाप्यकृत्रिममित्येतावन्मात्रेण प्रबलमिति भावः । प्रत्युत कृत्रिमस्याप्तिमूलकत्वसम्भवेन कृत्रिमत्वं प्राबल्यप्रयोजकमिति वैपरीत्यमेवोचितमित्याह **उक्तरीत्येति** ।





**श्रीनिधि०— शिवार्चनपरतया सावकाशत्वादिति** । पाशुपतादिस्मृतीनां शिवादिजगत्कारणतायां न तात्पर्यम्, किन्तु शिवस्यार्चनं कर्तव्यमिति तात्पर्यमित्यर्थः । **पराभिधित्सितं दोषमबुद्ध्वेति** । विष्णोर्जगत्कारणताप्रतिपादकश्रुतिप्रामाण्ये पाशुपतादिस्मृतिविरोधलक्षणो दोष इत्यर्थः । **किन्तु स परिहर्तव्य इति** । श्रुतिमुपादेयेति शेषः । पूर्वपक्षिणः स्मृतीनां श्रुतिविरोधेनाप्रामाण्यमभिलषता सिद्धान्तिनेति योज्यम् । अत एव न समूलत्वनिर्मूलत्वाभ्यामिति प्रामाण्यकारणमाप्तिः । मूलं तु नाप्तिमात्रं किन्तूपजीव्यं प्रमाणान्तरमपि भवतीति न पुनरुक्तिः । **कृत्रिमत्वं** कृतत्वं तदभावोऽकृत्रिमत्वम् ।

**शे०वा०—** नन्वाप्तैरित्याद्युत्तरभाष्यमनर्थकम् । न च पूर्वपक्षाद्युज्जीवनार्थं तदिति वाच्यम् । सूत्रभाष्यस्थितपूर्वपक्षादिस्वरूपेऽनुपपत्त्यप्रतिभासेन तदुज्जीवनानपेक्षणादित्यतस्तत्रानुपपत्तेर्विद्यमानत्वात् तदुज्जीवनमर्थवदित्याशयेन पूर्वपक्षादिस्वरूपेऽनुपपत्तिं दर्शयितुं तस्याः पूर्वपक्षादिस्वरूपज्ञानसाध्यत्वात् सूत्रप्रयोजनदर्शनपूर्वकं सूत्रमुपन्यस्य पूर्वपक्षादिस्वरूपं च प्रदर्श्य तत्रानुपपत्तिमप्युपदर्श्य तत्परिहारकतयोत्तरभाष्यं योजयितुं सूत्रप्रयोजनं तावद्दर्शयति **उक्तार्थमिति** । **पाशुपतसाङ्ख्यबौद्धार्हतादीति** । अत्र पाशुपतसाङ्ख्यमते वेदस्यापौरुषेयत्वप्रामाण्ययोः सत्त्वात् तन्मते स्मृत्यनुसारेण श्रुतिर्नेयेति श्रुतिप्रामाण्येनैव पूर्वपक्षस्य, बौद्धादिमते त्वाप्तप्रणीतबौद्धागमविरोधादाप्ताप्रणीतो वेदो न प्रमाणमिति तदप्रामाण्येनैव पूर्वपक्षस्य सम्भवात् पाशुपतादीनां बौद्धादीनां च इह पूर्वपक्षत्वमिति दर्शयितुम् इह टीकायां पाशुपतसाङ्ख्येति बौद्धार्हतादीति च विशिष्य तत्तद्ग्रहणमिति द्रष्टव्यम् । काणादादिभिस्तु वेदस्य पौरुषेयत्वप्रामाण्ययोरङ्गीकारेण सर्वज्ञेशप्रणीता श्रुतिः काणादादिस्मृत्यनुसारेण नेयेत्यत्र बीजाभावेनोक्तरीत्या पूर्वपक्षासम्भवान्न त इह पूर्वपक्षिण इति दर्शयितुं काणादादीनामग्रहणम् । बौद्धार्हतादीत्यादिशब्दस्तु शाक्तेयादिपर इति द्रष्टव्यम् । यद्वा काणादादिस्मृतेः स्पष्टार्थतया सयुक्तिकत्वेन च सर्वज्ञेशप्रणीतश्रुत्यपेक्षया प्रबलत्वात् तदनुसारेण सर्वज्ञेशप्रणीताऽपि श्रुतिर्नेयेति पूर्वपक्षसम्भवेन काणादादीनामप्यत्र पूर्वपक्षित्वमेव । अत्र च पक्षे टीकास्थ आदिशब्द एव तत्पर इति न तदग्रहणमिति ध्येयम् । 'तस्याश्चतुःस्वरूपत्वादि'ति विरोधिस्मृतीनां चतुरात्मकत्ववचनं च पाशुपतसाङ्ख्यादिस्मृत्यभिप्रायमेव । न तु विरोधिसकलस्मृत्यभिप्रायम् । तेन पाशुपतादिस्मृतिविरोधपरिहारस्य चतुर्विधविरोधपरिहारात्मकत्वादत्र सङ्गतत्वेऽपि बौद्धादिस्मृतीनामनेवंविधत्वेन तद्विरोधपरिहारस्याप्यनेवंरूपत्वान्न अत्र कर्तव्यता युक्तेति शङ्काऽनवकाश इति द्रष्टव्यम् । **विरुद्धत्वादिति** । न तावत् षोडशीग्रहणाग्रहणवद्व्यवस्थितविकल्पस्य वा व्रीहियववदव्यवस्थितविकल्पस्य वाऽत्राश्रयणादविरोधः । पुंस्तन्त्रेऽनुष्ठेये विकल्पसम्भवेऽपि तदतन्त्रे सिद्धे वस्तुनि तदयोगात् । न हीदमेवमनेवं वा कर्तव्यमितिवदिदमेवमनेवं वा भवतीति सम्भवति । नापि समुच्चयाश्रयणेनाविरोधः । सापेक्षयोरेव समुच्चयावगमात् । प्रकृते च श्रुतौ स्मृतौ च निरपेक्षस्यैव विष्णोः शिवस्यैव च हेतुत्वोक्त्या तदभावात् । नापि देशकालकार्यभेदादविरोधः । श्रुतौ स्मृतौ च विष्णोः शिवस्य च सदा सर्वत्र सर्वकार्यहेतुत्वोक्त्या तदसम्भवादिति भावः । **उक्तत्वादिति** । शास्त्रयोनिसूत्र इति शेषः । **अस्यार्थस्येति** । विष्णोः सकलजगज्जन्मादिकारणत्वादेरित्यर्थः । **इष्टत्वादिति** । तथा च न तद्विरोधेनोक्तार्थस्यायुक्तत्वाशङ्कावकाश इति ।





अप्रामाण्यापादनमिष्टत्वादयुक्तमित्युक्तम् । कथं च तदापादनं तत्प्रयोजकस्यानवकाशत्वस्याभावादित्याह **श्रुतिसमन्वयन्यायेनेति** । 'नामानि सर्वाणी'त्यादिश्रुत्यवष्टम्भेन श्रौतशिवादिशब्दानामिव स्मार्तशिवादिशब्दानामपि विष्णुवाचित्वसिद्ध्या, तत एव शिवादेर्जगत्कारणत्वादिप्रतिपादकश्रुतीनामिव तत्कारणत्वाद्यभिधायकपाशुपतादिस्मृतीनामपि विष्णुपरत्वेन, न तासां विषयान्तराभाव इति भावः । **शिवार्चनादीति** । तथा च शिवादेर्जगत्कारणत्वाद्यभिधायकवाक्यानां शिवार्चनादिविध्युपयोग्यर्थवादत्वेन तद्विध्येकवाक्यतया शिवार्चनादावेव तात्पर्येण शिवादिकारणत्वे तात्पर्याभावान्न तद्विरोधो नाप्यनवकाशत्वदोष इति भावः । **सकलशास्त्रेति** । श्रुत्यादिरूपसकलसच्छास्त्रेत्यर्थः । **दोषमिति** । पिपीलिकालिपिनिभत्वलक्षणमित्यर्थः । **प्रागिति** । शास्त्रयोनिसूत्र इत्यर्थः । ननु सूत्रे सिद्धान्तांशस्य न पञ्चरात्रादिस्मृत्यप्रामाण्यापादने तात्पर्यं येन परस्येष्टापादनं स्यात् । किन्तु पाशुपतादिस्मृतिवत् पञ्चरात्रादिस्मृतीनामप्याप्तप्रणीतत्वेन अन्यत्रानवकाशात् पाशुपतादिस्मृतिसाम्यमेव तासां स्यादिति साम्यापादनमात्र इत्यत आह **साम्यापादनमात्रेऽपीति** । **परस्यैवेति** । पूर्वपक्षिण इत्यर्थः । **निश्चयेति** । सिद्धान्तीयनिश्चयेत्यर्थः । पूर्वपक्षिणस्तु वैतण्डिकत्वान्न स्वपक्षनिर्णयापेक्षेति भावः । सिद्धान्तस्यापि 'यद्यशेषज्ञाः' इत्यादिनोज्जीवनात् तावदित्युक्तम् । **अयमिहाभिसन्धिरिति** । पूर्वपक्षसूत्रभागस्यानुभाष्यकारैरभिधीयमान इत्यर्थः । परतस्त्वपक्षमभ्युपेत्याप्याह **वैपरीत्याच्चेति** । तदेव स्पष्टयति **वाक्येति** । **अङ्गीकृतत्वादिति** । पाशुपतादीनां पूर्वपक्षत्वे वादिप्रतिवादिभ्यामिति शेषः । काणादादीनां तत्त्वे तु सिद्धान्तिनेति शेषः । पाशुपतादिमते वेदस्यापौरुषेयत्वेऽपि काणादादिमते पौरुषेयत्वादिति द्रष्टव्यम् । अत एवेत्युक्तमेव दर्शयति **स्मृतीनामिति** । **तदभावादिति** । अपौरुषेयत्वेनाङ्गीकृतत्वादिति भावः । **स्वरूपत इति** । कृत्रिमत्वाकृत्रिमत्वविशेषस्य स्वरूपतः साक्षात्प्राबल्याप्राबल्यप्रयोजकत्वं नास्तीत्यर्थः । माऽस्तु कृत्रिमत्वादेः स्वरूपेण प्राबल्यादिप्रयोजकत्वं प्रामाण्यादिप्रयोजकाप्तिमूलकत्वादिसम्पादकतया तु भविष्यतीत्यत आह **उक्तरीत्येति** । वक्तारश्च स्मृतीनामाप्ता न श्रुतेः अपौरुषेयत्वाङ्गीकारादित्युक्तरीत्येत्यर्थः । कृतं व्युत्पादनमुद्भाष्यत्वशङ्कानिरासाय भाष्यरूढं करोति **तदिदमुक्तमिति** ।

**वा०र०— पूर्वपक्षे सूत्रभागस्येति** । अनेन पूर्वपक्षसूत्राभिप्राय इति वक्ष्यमाणमूलवाक्यगतं सूत्रपदं तद्भागाभिप्रायमिति व्याख्यातं भवति । अयं च सूत्रार्थः । शास्त्रदीपिकाचिरन्तनटीकानुसारेण । विरोधे त्वनपेक्षमित्यपि क्वचित् पाठः । इमं पाठमवलम्ब्य सोमनाथदीक्षितः सूत्रमार्थीथपत् । विरोधे श्रुतिस्मृत्योः अनपेक्षं यन्मानान्तरानपेक्षं श्रुतिवाक्यं तदेव प्रमाणं भवेत् हि यस्मात् असति विरोधे मूलं श्रुत्यनुमानमुक्तमिति । विरोधे त्वनपेक्ष्यमिति सूत्रपाठव्याख्यानादि लेख्यमस्ति । न तु स हीति पाठः । अत्रापि लिखितं बोध्यम् ।

**स०व्र०— उक्तार्थं** पूर्वाध्यायोक्तार्थम् । **अन्यथेति** । प्रतीतार्थतात्पर्यानङ्गीकारे । अनवकाशेन अर्थान्तर इति शेषः । **अपरथेति** । तत्कारणत्वादौ तात्पर्यानङ्गीकारे । **पाशुपतादिस्मृतिभ्योऽन्यासामिति** । सूत्रकारेण 'अन्यस्मृत्यनवकाशे'ति अन्यशब्दस्योपात्तत्वात् प्रथमस्मृतिशब्दः न सर्वस्मृतिपरः, अपि तु स्मृतिविशेषपरः इत्याशयः । अन्यथा अन्यशब्दवैयर्थ्यापत्तेः । स च स्मृतिविशेषः पाशुपतादिरेवेति सूत्राभिप्रायः





इत्याशयः । **अस्यार्थस्य** सकलजगज्जन्मादिकारणत्वादेः । ननु श्रुत्यपेक्षया पाशुपतादिस्मृतीनां विस्पष्टवादित्वात् तद्विरोधेन कथमप्रामाण्यमित्यत आह **श्रुतिसमन्वयन्यायेनेति** । अस्तु वा प्रामाण्यं, तथापि सावकाशत्वेन प्राबल्याभावात् न तद्विरोधेनाप्रामाण्यं श्रुतेरिति प्रतिज्ञाभागो द्रष्टव्यः । **श्रुतिसमन्वयन्यायेनेति** । 'नामानि सर्वाणि यमाविशन्ती'ति विष्णोरेव सर्वशब्दमुख्यवाच्यत्वात् तत्तल्लिङ्गानां तत्तदन्तर्यामिपरत्वात् सर्वा अपि श्रुतयः तत्परा एवेति योऽयं पूर्वोक्तन्यायः तेनेत्यर्थः । **सकलशास्त्रप्रमाणकत्वमिति** । शास्त्रयोन्यधिकरण इति शेषः । ननु श्रुतिविरोधस्य परेणाज्ञातत्वात् स्मृतिविरोधस्यैव ज्ञातत्वेन तदभिधाने स एव परिह्रियते इत्यत आह **पराभिधित्सितमिति** । **सः** श्रुतिविरोधः । **अन्यथेति** । श्रुतिविरोधापरिहार इत्यर्थः । **प्रागपि** शास्त्रयोन्यधिकरणेऽपि । ननु वेदसंवादित्वात् पञ्चरात्रादीनामप्रामाण्यं कथं परस्येष्टमित्यत आह **वासुदेवार्चनादिपरतयेति** । अस्तु वा प्रामाण्यं तथाऽपीति शेषः । ननु अस्मदिष्टस्यैव पाशुपतादिस्मृत्यप्रामाण्यस्य अस्मान्प्रत्यापादनात् अस्माभिरपि परं प्रति इष्टमेव पञ्चरात्रादिस्मृत्यप्रामाण्यमापाद्यत इत्यत आह **साम्यापादनमात्रेऽपीति** । भवदभिप्रेतो यो विष्णोरेव जगत्कारणत्वादिकमिति निश्चयः तत्प्रतिबन्धकत्वादित्यर्थः ।

**नापि कृत्रिमत्वाकृत्रिमत्वाभ्यामिति** । नात्र 'प्राबल्यदौर्बल्ये' इत्यनुवर्तमानस्य यथाक्रमं सम्बन्धः किं तु योग्यतयेति द्रष्टव्यम् । **स्वरूपत इति** । अन्यानाधानेनेत्यर्थः । **उक्तरीत्येति** । वेदस्यापौरुषेयत्वेन अकृत्रिमत्वेऽपि तस्य च स्वरूपतोऽप्रयोजकत्वात् तदाहितस्य कस्यचिद्धर्मस्याभावेन प्रत्युताप्तोक्तत्वलक्षणगुणाभावेन अप्रामाण्यमेव प्राप्नोति । स्मृतीनां च कृत्रिमत्वेऽपि तस्य च स्वरूपतोऽप्रयोजकत्वात् तदाहितस्य चाप्तोक्तत्वलक्षणगुणस्याप्रामाण्यं प्रत्यप्रयोजकत्वात् प्रत्युत प्रामाण्यं प्रत्येव प्रयोजकत्वेन प्रामाण्यमेव प्राप्नोतीति वैपरीत्याच्चेत्यर्थः । यदा तु कृत्रिमाकृत्रिमयोः कृत्रिमं बलीयः इति न्यायार्थः तदा स्पष्ट एव योजनाविरोध इति ।

**विठ्ठल०— अस्यार्थ इति** । अयं चार्थो भाष्योक्तादर्थादन्य इति ज्ञेयम् । **अन्यावकाश इति** । अर्थान्तरे सावकाश इत्यर्थः । **अपरथेति** । पञ्चरात्रादीनां प्रतीते पुरुषोत्तमजगत्कारणत्वाद्यर्थे तात्पर्याभाव इत्यर्थः । **अस्यार्थस्येति** । ब्रह्मसकलजगज्जन्मादिकारणमित्यादिरूपार्थस्येत्यर्थः । अनवकाशत्वं चासिद्धमित्यर्थः । **समन्वयन्यायेनेति** । नामानि सर्वाणीत्यादि श्रुत्युपष्टम्भेनान्यपराणामपि श्रुतीनां भगवत्परत्वमेवेति न्यायेनेत्यर्थः । **शिवार्चनादीति** । शिवपूजाकरणेऽर्थवादकरणपरत्वेनेत्यर्थः । **सकलशास्त्रेति** । श्रुत्यादिसकलशास्त्रेत्यर्थः । पिपीलिकालिपिनिभेति यो दोषोऽभिधित्सितः तद्भयाच्छ्रुतिपरित्यागः क्रियत इत्यत आह **पराभिधित्सितमिति** । **अयमिहेति** । इह सूत्रे पूर्वपक्षिणः अयं वक्ष्यमाणत्वेन बुद्धिसन्निहितोऽभिप्राय इत्यर्थः । **अभिलषितेति** । सिद्धान्तिनेत्यर्थः । **प्रबलदुर्बलत्व इति** । श्रुतीनां प्रबलत्वं स्मृतीनां दुर्बलत्वमित्यर्थः । **अन्यथेति** । प्राबल्यदौर्बल्याभावेऽपि बाध्यबाधकाभावाङ्गीकार इत्यर्थः । **प्रामाण्यस्य स्वतस्त्वेनेति** । तथा च प्रामाण्यकारणमेव नास्तीति भावः । कारणाङ्गीकारेऽपि दूषणमाह **वैपरीत्याच्चेति** । अभये वेति वैपरीत्यादेवेत्यर्थः । **समूलेति** । मूलप्रत्यक्षादिसाहित्यभावाभावाभ्यामित्यर्थः । वैपरीत्यमेव व्यनक्ति **स्मृतीनामिति** । **आप्तीति** । विवक्षितार्थतत्त्वज्ञानस्य प्रत्यक्षादिजन्यत्वेन प्रत्यक्षादिमूलत्वादित्यर्थः । **नापि कृत्रिमत्वेति** ।





कृत्रिमत्वेन स्मृतीनां दौर्बल्यं अकृत्रिमत्वेन श्रुतीनां प्राबल्यमित्यपि नेत्यर्थः । **स्वरूपत इति** । कृत्रिमा-कृत्रिमत्वयोः स्वरूपेण प्राबल्यदौर्बल्यं प्रत्यप्रयोजकत्वादित्यर्थः । **उक्तरीत्येति** । कृत्रिमे वाक्यप्रामाण्यकारणा-सत्वसद्भावादकृत्रिमे तत एव तदभावाच्चेत्यर्थः ।

**चषकः— पाशुपतेत्यादि** । आदिपदं कणादादिस्मृतिसङ्ग्राहकम् । अत्र पाशुपताः साङ्ख्याश्च वेदस्य अपौरुषेयत्वप्रामाण्येऽभ्युपगच्छन्तीति तन्मते स्मृत्यनुरु(स)न्धानैव श्रुतिरिति तत्प्रामाण्योपगत्यैव पूर्वमतस्य प्रवृत्तिः । बौद्धादयस्त्वाप्तप्रणीतस्वागमविरुद्धश्रुतेरपौरुषेयत्वप्रामाण्ये नाभ्युपयन्तीति तदप्रामाण्योरीकारेणेव तन्मते तत्प्रवृत्तिरिति ध्येयम् । अत्र व्याचक्षाणाः । काणादादिभिस्तु वेदस्य पौरुषेयत्वप्रामाण्ययोरङ्गीकारेण सर्वज्ञेश-प्रणीता श्रुतिः काणादादिस्मृत्यनुसारेण नेयेत्यत्र बीजाभावेनोक्तरीत्या पूर्वपक्षासम्भवान्न त इह पूर्वपक्षिण इति दर्शयितुं काणादादीनामग्रहणम् । बौद्धार्हतादीत्यादिशब्दस्तु शाक्तेयादिपर इति द्रष्टव्यम् । यद्वा कणादादिस्मृतेः स्पष्टार्थताया सयुक्तिकत्वेन च सर्वज्ञेशप्रणीतश्रुत्यपेक्षया प्रबलत्वात् तदनुसारेण सर्वज्ञेशप्रणीतापि श्रुतिर्नेयेति पूर्वपक्षसम्भवेन काणादादीनामप्यत्र पूर्वपक्षित्वमेवेति टीकास्थ आदिशब्द एव तत्पर इति व्याचक्षते । **विरुद्ध-त्वादिति** । श्रुतौ स्मृतौ च इतरेतरसाचिव्यविनिर्मोकेणैव अखिलदेशकालावच्छेदेनोत्पद्यमाननिखिलकार्यजनक-ताया एव विष्णुशिवयोरभिहित्या समुच्चयः देशकालकार्यभेदानां, पुंस्तन्त्रानुष्ठेयत्वाननुष्ठेयत्वाभ्यां षोडशिग्रहण-व्रीहियवद्रव्यवद्व्यवस्थिताव्यवस्थितविकल्पाश्रयणयोश्च विरोधभञ्जकता न सङ्गच्छत इति भावः । **उक्तत्वा-दिति** । शास्त्रयोनियोग इत्यादिः । **श्रुतिसमन्वयेन** । वैदिकपदानां ब्रह्मण्युपक्रमादिप्रमाणकशक्तितात्पर्यलक्षण-सम्बन्धव्युत्पादनेन । **अस्यार्थस्य** निखिलजगज्जनकत्वस्य । **साधितत्वात्** समर्थितत्वात् । **श्रुतिसमन्वय-न्यायेनेति** । 'नामानि सर्वाणी'ति श्रुत्यनुरोधेन 'ज्ञात्वा शिवं शान्तिमि'ति श्रौतशिवादिपदानां विष्णुतात्पर्यक-त्वमेवेति न्यायेनेत्यर्थः । **सकलशास्त्रेति** । श्रुत्यादिसकलशास्त्रेत्यर्थः । **पराभिधित्सितमिति** । अभ्युपसृष्टात् दधातेः सन्नन्तात्कर्मसाधननिष्ठायां निष्पद्यत इति परकर्तृकाभिधानगोचरेच्छाविषयीभूतमित्यर्थः । **दोषं** पिपी-लिकालिपिनिभत्वलक्षणम् । **प्राक्** शास्त्रयोनिनये । ननु सौत्रोत्तरखण्डस्य न पञ्चरात्रादिस्मृत्यप्रामाण्यप्रसञ्जन-तात्पर्यकताऽन्यदीयसमीहितसवित्र्युपेयते । किन्तु पञ्चरात्रादिस्मृतीनामप्याप्तप्रणीतत्वनिबन्धनार्थान्तरानवकाश-त्वनियन्त्रितपाशुपतादिस्मृतिसाम्यप्रसञ्जनतात्पर्यकतैवेति न पूर्वमतनिर्णय इत्यत आह **साम्यापादनेति** । **परस्य** पूर्ववादिनः । **निश्चयप्रतिबन्धकत्वात्** । उत्तरवाद्यभिमतनिर्णयानुत्पादप्रयोजकत्वात् । पूर्ववादी तु वितण्डामेवा-शिश्रिये इति न स्वपक्षनिर्णयं समीहत इति भावः । यद्यशेषज्ञा इत्यादिनोत्तरवादिमतस्याप्युपजीवयिष्यमाणतया तदवधिकप्राथम्यद्योतनार्थः तावच्छब्दः । **अयमिहाभिसन्धिरिति** । अनुव्याख्याकर्तृकसाम्प्रतिकाभिहितिगोचर इत्यर्थः । **स्वतस्त्वेन** औत्पत्तिकेन गुणाजन्यत्वरूपेण । **अङ्गीकृतत्वादिति** । उत्तरवादिनेति भावः । गुणजन्यत्वरूपौत्पत्तिकपरस्त्वमुपेयुषां भङ्गीमाश्रित्याह **वैपरीत्याच्चेति** । तदेव स्फुटयति **वाक्येति** । यदा वेदापौरुषेयत्वोपगन्तृपाशुपतादयः प्रत्यवतिष्ठन्ते तदा पूर्वोत्तरवादिभ्यां तत्पौरुषेयतामुपगच्छन्तो वैशेषिकादयः सिद्धान्तिनेति पूरणीयम् । **अत एव** दर्शितदिशा वेदपौरुषेयत्वोपगतिविषयत्वादेव । **तदभावादिति** । उक्तदिशा





पौरुषेयत्वोपरक्तोरीकृतिविषयत्वादिति भावः । **कृत्रिमाकृत्रिमत्वाभ्यामिति** । यूस्त्र्याख्यौ नदीति पाणिनीसङ्केतिता नित्यस्त्रीलिङ्गेदूदन्तशब्दव्यक्तिरेव 'आण्णद्याः ङेराम्नद्याम्नीभ्यः' इत्यादितत्प्रदेशेषु ग्राह्याः । 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति परिभाषया कृत्रिमत्वस्य प्राबल्यहेतुत्वात् । अकृत्रिमा गङ्गाद्याः सरितस्तु न ग्राह्या इत्याकरे निरूढमिति भावः । अथ कृतिनिर्वर्त्यत्वरूपकृत्रिमत्वस्य स्वरूपतः प्राबल्या-नौपयिकत्वेऽपि प्रामाण्यौपयिकाप्तिमूलकतासम्भावकतया प्राबल्ये तदुपयोक्ष्यत इत्यत आह **उक्तरीत्येति** । वक्तारश्च स्मृतीनामित्यादिकाङ्गीकृतत्वादित्यन्तोक्तदिशेत्यर्थः । आशयोद्भावनस्योत्प्रतीकत्वशङ्कानियन्त्रिताव-धीरणीयताम् अपहस्तयितुं तत्प्रतीकमारोहयति **तदिदमुक्तमिति** ।

* * *

**॥ अथ आप्तोक्तानां प्रत्यक्षमूलत्वम् ॥**

११ **सु०— ननु 'औदुम्बरीं स्पृष्ट्वोद्गायेदि'त्यादिश्रुतिविरुद्धानां 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतीनामप्रामाण्यमुपलब्धम्, तथाऽत्र स्यात् । न स्यात्, वैषम्यात् ॥ श्रुतिमूलतयाऽभिमता हि ताः स्मृतयः, अतस्तासां मूलश्रुत्यनुमापकत्वेन प्रामाण्यमिष्टम् ॥ न च श्रुतिविरुद्धायाः स्मृतेः मूलश्रुत्यनुमापकत्वं सम्भवतीत्यप्रामाण्यमेव युक्तम्, यथाऽऽह जैमिनिः 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'ति । न चैवं प्रकृते, पाशुपतादिस्मृतीनां शिवादिप्रत्यक्षमूलत्वेन श्रुतिमूलत्वाभावात् । तदिदमाह प्रत्यक्षतो दृष्ट्वेति ।**

**ननु तर्हि स्मृतीनामुक्तरीत्या सावकाशत्वान्निरवकाशश्रुतिविरोधेनाप्रामाण्यमस्तु । मैवम्, वैपरीत्यात् । स्मृतयो हि विस्पष्टवादिन्यो न विवक्षितार्थात्प्रच्यावनमर्हन्ति । श्रुतयस्तु अस्फुट(स्पष्ट)विक्षिप्तवादिन्योऽव्यवस्थितालौकिकशाब्दलक्षणविषया अशक्याध्ययनानन्तापरिपूर्णवाक्यरूपा नार्थविशेषनिष्ठा लक्ष्यन्ते, अत एव भवतां मीमांसायासः । एतदपि उक्तं प्रकर्षेणोक्तमिति । विस्पष्टमुक्तमित्यर्थः । पिपीलिकालिपिनिभेति च । अस्फुटे(स्पष्टे)त्यर्थः ।**

**परि०—** **औदुम्बरीमिति** । 'यजमानसम्मितौदुम्बरी भवति' इत्युक्तोदुम्बरवृक्षविकारः यजमानसमपरिमाणस्थाणुविशेषः सदसि नैर्ऋत्य(ति)भागे स्थापितः, तं स्पृष्ट्वोद्गातोद्गायेदित्यर्थः । **वेष्टयितव्येति** । वस्त्रेण स्थाणुः सर्वोऽपि वेष्टनेनाच्छादनीय इत्यर्थः । यदि सर्ववेष्टनं तदौदुम्बरीस्पर्शनं





न लभ्यते । यदि स्पर्शनं तदा न सर्ववेष्टनम् । त्रिचतुरङ्गुलमात्रस्य स्पर्शनस्थलस्य वेष्टनेन विना स्थाप्यत्वात् परस्परविरोधो ध्येयः । **अप्रामाण्यमिति** । (गुरुमता)प्राभाकरमताभिप्रायेण । भट्टमते सर्ववेष्टनस्मृतेः सङ्कोचः प्रामाण्यं च ध्येयम् । निराह **न स्यादिति** । **श्रुतिमूलतयाभिमता हीति** । पूर्वतन्त्रे आद्याध्यायतृतीयपादीयाद्यनये 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादि'त्यत्र तथोक्तेरिति भावः । **यथाऽऽहेति** । तत्रैव द्वितीयेऽधिकरणे । सर्ववेष्टनादिस्मृतीनां प्रत्यक्षश्रुतिविरोधे तु सति तादृशस्मृतिजातं प्रमाणत्वेनानपेक्षं स्यात् आदरणहीनं स्यात् । ननु पूर्वतनस्मृत्यधिकरण-न्यायेन मूलश्रुत्यनुमापकतया प्रमाणं किं नेति चेत् । न । हि यस्मादसति श्रुतिविरोधे अनुमानं मूलश्रुत्यनुमापकं तस्मादनपेक्षमेवादिस्मृतिजातमिति सूत्रार्थः । **अलौकिकशाब्दलक्षणविषया इति** । 'प्रचोदयात् अगृभ्णन् रुद्रेभिः ब्राह्मणास' इत्यादीनामलौकिकानि यानि शब्दसम्बन्धिलक्षणानि तद्विषयत्वात् । यद्वा अलौकिकानि शब्दसम्बन्धिलक्षणानि अलौकिकाः शब्दसम्बन्धिविषयाश्च यासामिति बहुव्रीहिः, तानि च न व्यवस्थितानि । क्वचित् 'प्रचोदयेत् अगृह्णन् ब्राह्मणा' इत्यादिप्रयोग-स्यापि दर्शनात् । **अनन्तेनेति** । 'अनन्ता वै वेदा' इति श्रुतेरिति भावः । **अपरिपूर्णेति** । 'इषेत्वोर्जेत्वे'त्येवमादेरपि दर्शनादिति भावः ।

**गु०दी०— अलौकिकशाब्दलक्षणविषया** इत्यत्र अलौकिकशाब्दलक्षणानि 'अयस्मयादीनि छन्दसी'-त्यादिकानि तद्विषया इत्यर्थः ।

**यादु०— अप्रामाण्यमेवेति** । इदं च प्राभाकरमतमाश्रित्योक्तं, भाट्टमते तु स्पर्शनार्थं द्वित्राङ्गुलं हित्वा तदितरसर्ववेष्टनरूपमर्थान्तरमेवोक्तम् । अतः प्रतीतार्थ एवाप्रामाण्यमिति व्याख्येयम् । **विरोधे त्वनपेक्षमिति** । स्मरणं प्रत्यक्षश्रुतिविरोधेऽनपेक्षमनादरणीयं स्यात् । असति प्रत्यक्षश्रुतिविरोधे मूलश्रुत्यनुमापकमष्टकादिस्मरण-मिति सूत्रार्थो जन्माधिकरणे पूर्वमेवोक्तः । तदीयाधिकरणरचना च तत्रैव प्रदर्शिता द्रष्टव्या । **अव्यवस्थिता-लौकिकेति** । शब्दस्येमे शाब्दाः, लक्षणानि च विषयाश्च लक्षणविषयाः, न लौकिका अलौकिकाः, अलौकिकाश्च ते शाब्दाश्च ते लक्षणविषयाश्च अलौकिकशाब्दलक्षणविषयाः, अव्यवस्थिता अनेकरूपा अलौकिकशाब्दलक्षण-विषया यासां तास्तथोक्ता इति विग्रहः । तथा च श्रुतीनां यानि लक्षणानि ब्रह्मणा सहात्मना देवेभिरित्यादिपद-स्वरूपाणि, ये विषयाः स्वरूपेणाहवनीयादिपदार्थाः ते न लौकिकशब्दलक्षणादिसदृशा, न चैकरूपा, आत्मना ब्रह्मणा इत्यपि दर्शनात् । नापि 'इषेत्वे'त्याद्याः परिपूर्णवाक्यरूपा अतोऽर्थविशेषपरतया न ज्ञातुं शक्यन्त इत्यर्थः । अत्र यद्यप्युपक्रमादिभिरेव तात्पर्यनिर्णय इति समन्वयसूत्र एवोक्तम् । शाखानामनन्तत्वेऽप्यविरोध इति गतिसामान्यादित्यत्रोक्तम् । पदपदार्थनिर्णयस्तु व्याकरणनिरुक्तादिभिरेव सुलभः । साकाङ्क्षवाक्यपूरणं चाध्याहारा-दिनेति लोकत एव सिद्धम् । तथाऽपि समूलस्मृतिविरोधे निर्मूलश्रुतिप्रामाण्यायोगादिति पूर्वोक्तयुक्त्यैव श्रौतोप-





**व्यभिचारादिति** । तत्प्रणीताप्रमाणीभूतवाक्य इति शेषः । नन्वाप्तिमूलत्वस्य तत्र सत्त्वेनाप्रामाण्यासम्मतेर्न तत्र व्यभिचार इत्यत आह **न हीति** । उक्तनियमाङ्गीकारे बाधकमाह **तथा चेति** । न्यायसाम्यमुपपादयति **तत्रापीति** ।

**वा०र०— आभिमुख्येन चार इत्यादीति** प्रतीकोपादानपाठः स्वरस एव । चार इति इत्येव पाठेऽपि प्रतीकोपादानत्वादेव तदभावः इत्यन्तरस्योपादानलाभात् इदं चेति टीकोक्तपरामर्शविषयत्वं तदभाव इत्यन्तस्य प्राप्नोतीति ज्ञेयम् । **समासप्रदर्शनमिति** । समासार्थावबोधकवाक्यरूपविग्रहप्रदर्शनमित्यर्थः । समासस्तु इत्यस्यापि समासार्थावबोधकवाक्यरूपविग्रहस्त्वित्यर्थः । इति द्वन्द्व इति समास इत्यादिरूपोक्तेः इत्यव्ययी-भावगर्भः । इत्याद्युक्तेश्च विग्रहप्रदर्शनोत्तरं ग्रन्थकाराणां सत्त्वात् रूढलक्षणायां समासपदप्रयोगो युक्त इति ज्ञेयम् । ननु कुतस्तदभावः इत्यन्तं व्यभिचारपदतात्पर्यकथनम् । समासस्तु प्राचार्य इत्यादाविव प्रादयो गताद्यर्थे प्रथमयेति वार्तिकोक्तः प्रादिसमासः इत्याश्रीयते समासप्रदर्शनमेव किं न स्यात् इत्यत आह **तेन व्यभिचार इतीति** । तदभाव इत्यन्तोक्तरीत्या समासाङ्गीकारेऽर्थाभावेऽव्ययीभावसमासरूपत्वाप्राप्त्या अव्ययीभावस्य चाव्ययीभावश्च इति प्रथमाध्यायाद्यपादगतसूत्रेणाव्ययत्वेन सुप्लोपप्राप्तौ (नाव्ययीभावः) नाव्ययीभावादतोमित्यनेन पंचमीं विना अमादेशे उपकृष्णं इत्यादिवत् व्यभिचारमिति नपुंसकमेव स्यात् इति भावः । अविरोधो विरोधाभावः इति पूर्वमूलटीकानुसारेण उपयुक्तमधिकं ज्ञेयम् । तत्प्रणीताप्रमाणीभूतवाक्य इति शेषः । अथ शेषपदं पदस्थाने लेखकागतम् ।

**स०व्र०— विप्रतिपन्नस्मृतिफलमि**त्यत्र प्राप्तमिति शेषः । **आभिमुख्येनेति** । विगतः अभिचारो व्यभिचार इति विग्रहो द्रष्टव्यः । तदभाव इति तु अर्थकथनम् । **नाप्यनुमानेनेति** । पाशुपतस्मृतिः तादृश-साधनेन फलप्रापिका भवति तादृशसाधनबोधकस्मृतित्वात् आप्तवाक्यत्वादित्यनुमानेनेति । **व्यभिचारित्वा-दिति** । स्मृतित्वादेर्बौद्धादिस्मृतावपि सत्त्वादिति भावः । **अङ्गीकृत्य चेदमुदितमिति** । इदं दृष्टार्थानां प्रवृत्ति-सामर्थ्येन प्रामाण्यमङ्गीकृत्य उक्तम् । तथाप्यदृष्टार्थानां प्रामाण्यं न सम्भवतीति दूषणमुक्तमित्यर्थः ।

**विठ्ठल०— स्मृतित्वादेरिति** । विप्रतिपन्ना स्मृतिः समर्थप्रवृत्तिजनका स्मृतित्वाप्तवाक्यत्वादेरित्यर्थः । **न च विप्रतिपन्नेनेति** । विप्रतिपन्नप्रामाण्यकेन स्वयूथ्यविरचितग्रन्थान्तरेण स्मृतिफलं वीक्ष्यत इति पूर्वेण अन्वयः । **विप्रतिपन्नस्मृतेरिति** । अदृष्टफलकपाशुपतादिस्मृतेरेव विप्रतिपन्नत्वादिति भावः । **तत एवेति** । दृष्टार्थकस्मृत्यंशे शिवादेराप्तत्वादेरेवेत्यर्थः ।

**॥ इति शिवादिषु आप्तिनिश्चयाशक्तिः व्यभिचारतः ॥**

**॥ इति सिद्धान्तसूत्रतात्पर्यम् ॥**

**॥ इति 'स्मृत्यनवकाशे'त्याद्याद्यसूत्रार्थप्रदर्शनम् ॥**

* * *





**॥ अथ उक्तार्थेन अग्रिमसूत्रद्वयस्यापि व्याख्यातता ॥**

**२१ सु०— तदनेन 'इतरेषां चानुपलब्धेः, एतेन योगः प्रत्युक्तः' इति सूत्रद्वयं व्याख्यातं भवति ।**

**परि०— तदनेनेति** । 'न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारतः' इत्यनेनेत्यर्थः । सूत्रद्वयार्थस्तन्त्रदीपिकायां व्यक्तमुक्तः ।

**यादु०— तदनेनेति** । '**इतरेषां** तासु स्मृतिषूक्तानां फलादीनां, प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यमेव तासां युक्तमि'ति प्रथमसूत्रस्य, 'योगफलं प्रत्यक्षोपलभ्यमिति न मन्तव्यमुक्ताभ्यासे तत्काल एव फलादृष्टेरि'ति द्वितीयसूत्रस्य च व्याख्यानं कृतमिति ज्ञातव्यम् ।

**शे०वा०—** 'न चाप्तिनिश्चयस्तत्रे'त्यादिभाष्यस्योत्सूत्रितत्वशङ्कां निरस्यति **तदनेनेति** ।

**विठ्ठल०— तदनेनेति** । 'न चाप्तिनिश्चयस्तत्र शक्यते व्यभिचारतः' इत्यनेन **इतरेषां** श्रुतिषूक्तानां फलादीनां प्रत्यक्षतोऽनपलब्धेरप्रामाण्यमेव तासां युक्तमिति प्रथमसूत्रस्य, प्रयोगफलं प्रत्यक्षतोपलभ्यमिति न मन्तव्यम् उक्ताभ्यासे तत्काल एव फलादृष्टेरिति द्वितीयसूत्रस्य व्याख्यानं कृतमिति ज्ञातव्यम् ।

**॥ इति उक्तार्थेन अग्रिमसूत्रद्वयस्यापि व्याख्यातता ॥**

* * *

**॥ अथ 'इतरेषां चानुपलब्धेः' इति सूत्रस्य व्याख्यानान्तरमप्ययुक्तम् ॥**

**२२ सु०— यच्चेतरेषां महदहङ्कारादितत्त्वानामनुपलब्धेश्च साङ्ख्यस्मृतेरप्रामाण्यमिति व्याख्यानम्, तत्प्रत्यक्षानुपलब्धेर्वेदान्तेष्वपि व्यभिचारतः सर्वथाऽनुपलब्धेरसिद्धेरुक्तत्वात् अयुक्तमिति ।**

**परि०—** परोक्तार्थं निराह **यच्चेत्यादिना** । **उक्तत्वादिति** । 'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथे'त्यादिना पूर्वपाद एवोक्तत्वादित्यर्थः ।

**यादु०— इतरेषामिति** । प्रधानादितरेषामित्यर्थः । **वेदान्तेष्वपीति** । प्रत्यक्षतोऽनुपलभ्यमानतत्त्वप्रतिपादकत्वस्य प्रमाणभूतेषु वेदान्तेष्वपि सत्त्वेनाप्रामाण्यव्यभिचार इत्यर्थः । **असिद्धेरुक्तत्वादिति** ।





'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा । एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुरि'त्याद्यागमात् तेषामुपलब्धेरुक्तत्वादित्यर्थः ।

**वं०प०—** प्रत्यक्षेणानुपलब्धेर्हेतुत्व इति शेषः । त्वया वेदान्तानामपि प्रत्यक्षायोग्यार्थप्रतिपादकत्वेऽपि प्रामाण्याङ्गीकाराद्व्यभिचार इत्यर्थः ।

**कं०रा०— यच्चेति** । साङ्ख्यस्मृत्युक्तानामितरेषां महदहङ्कारादितत्त्वानामनुपलब्धेश्च साङ्ख्यस्मृतेः अप्रामाण्यमिति यत्परकीयं व्याख्यानं तदयुक्तम् । अनुपलब्धिशब्देन प्रत्यक्षानुपलब्धिविवक्षायां वेदान्तोक्तार्थस्यापि प्रत्यक्षेणानुपलब्धेरप्रामाण्यरूपसाध्यस्य च तत्राभावेन व्यभिचारात् सर्वथानुपलब्धिविवक्षायां 'पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा । एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुरि'त्यागमेन महदहङ्कारादितत्त्वानामुपलभ्यमानतया सर्वथानुपलब्धेरसिद्धिरित्युक्तत्वादित्यर्थः ।

**शे०वा०— इतरेषामिति** । प्रधानादिति शेषः । **वेदान्तेष्वपीति** । प्रत्यक्षतोऽनुपलभ्यमानतत्त्वप्रतिपादकत्वस्य प्रमाणीभूतवेदान्तेष्वपि सत्त्वादित्यर्थः । **असिद्धेरुक्तत्वादिति** । 'न सङ्ख्योपसङ्ग्रहा'धिकरणे महदादीनामागमिकत्वसमर्थनेन सर्वथाऽनुपलब्धेरसिद्धेरुक्तत्वादित्यर्थः ।

**वा०र०— आगमिकत्वसमर्थनेनेति** । 'यत्तत् त्रिगुणमव्यक्तं' इत्यागमिकत्वेत्यर्थः । अभिसन्धिप्रदर्शनारूपदृष्टार्थेति वाक्ये अत्र हीत्यादावुपस्कर्तव्यम् । मूले दृष्टार्थायां अप्रामाण्यवचनं तु प्रकृतानुपयुक्तं इत्युक्त्यैवादृष्टार्थपञ्चरात्रादिस्मृतेः अप्रामाण्यवचनं यद्यपि प्रकृतोपयोगीति सूचितं तदपि सङ्गृह्य तद्विरोधादेवेत्येव तद्वाक्यं तद्द्वितीयपक्षदूषणं अस्पष्टीकृतमशक्यत्वात् इत्यनेन, तत्रापि इति प्रतिपाद्यमानत्वात् इत्युक्त्या तदप्रामाण्यस्य प्रतिपादनस्य प्रकृतोपयोगित्वं इत्युत्तरेण सम्बन्धः । तस्यैवोपपादनं अदृष्टार्थं पञ्चरात्रादिस्मृत्यप्रामाण्य इत्यादि । अदृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यं यदि प्राप्तं भवेत् तदेत्यर्थः । तद्विरोधे सत्यपीति सम्बन्धः । एवमुत्तरत्र । अप्रमाणविरोधस्याकिञ्चित्करत्वादिति भावः । एवं चादृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यप्रतिपादनं तव सङ्गतम् । परन्तु कारणीभूतफलव्यभिचाराभावान्न तत्सम्भवति । तदेवायुक्तम् ।

**स०व्र०— असिद्धेरुक्तत्वादिति** । 'यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्' इत्यादिनोक्तत्वादित्यर्थः ।

**विठ्ठल०—** परव्याख्यानं प्रत्याख्याति **यच्चेति** । **प्रत्यक्षानुपलब्धेरिति** । उक्तार्थस्य प्रत्यक्षानुपलब्धिरूपहेतोः प्रामाण्योपेतवेदान्तेष्वपि व्यभिचारः । सर्वार्थानुपलब्धिहेतुरिति चेन्न । **असिद्धेरुक्तत्वात्** । 'पञ्चभिः पञ्चभिर्ब्रह्मे'त्यादिना तेषां महदादीनामप्युपलब्धेरुक्तत्वादित्यर्थः ।





चषकः— **वेदान्तेष्वपीति** । प्रत्यक्षानुपलभ्यमानार्थप्रतिपादकत्वस्य प्रमाणीभूतवेदान्तसाधारण्यादित्यर्थः । **असिद्धेरुक्तत्वादिति** । 'पञ्चभिः पञ्चभिरि'त्यादिकं 'विदुरि'त्यन्तोदाहरणेन तेषामुपलब्धेरभिहितत्वादित्यर्थः ।

**॥ इति 'इतरेषां चानुपलब्धेः' इति सूत्रस्य व्याख्यानान्तरमप्ययुक्तम् ॥**

* * *

**॥ अथ पञ्चरात्रादिस्मृतेः क्वचिद्व्यभिचारेऽपि मानता न हीयते न्यायसाम्याभावात् ॥**

२३ **सु०**— ननु पञ्चरात्रादिस्मृतयोऽपि फलं व्यभिचरन्ति, क्वचित्तदुक्तानुष्ठानेऽपि दृष्टफलानुपलम्भात्; अतस्तासामप्रामाण्यान्न तद्विरोधेन पाशुपतादिस्मृतीनामप्रामाण्यम्, अन्यथा फलव्यभिचारस्यानैकान्तिकत्वमित्यत आह **न चेति** ।

**अनु०**— न चास्या व्यभिचारेऽपि हीयते मानता क्वचित् ।

**अस्याः** पञ्चरात्रादिस्मृतेः **क्वचिद्व्यभिचारेऽपि** इति सम्बन्धः ।

कुतो न हीयत इति चेत् । किमदृष्टार्थायाः प्रामाण्याभावोऽभिधीयते, उत दृष्टार्थाया एव । नाद्यः, यतः फलव्यभिचारे हेतौ **क्वचिद्** दृष्टार्थायां वर्तमाने **अस्या** अदृष्टार्थाया **मानता न हीयते** । व्यधिकरणत्वादिति भावः । न द्वितीयः । यस्मात् **क्वचिद्** दृष्टार्थायां **फलव्यभिचारे**, तत एव अप्रामाण्ये सत्यपि **अस्या** अदृष्टार्थायास्तावत् **मानता न हीयते,** कारणाभावात् । तद्विरोधादेव च पाशुपतादीनामप्रामाण्यमुक्तम् । दृष्टार्थाया अप्रामाण्यवचनं तु प्रकृतानुपयुक्तमित्यभिसन्धिः ।

**परि०**— तदेव वाक्यं आवृत्त्या शेषोक्तिपूर्वं योजयति **यत इति** । **फलव्यभिचारे हेताविति** । फलव्यभिचारित्वरूपे हेतौ वर्तमान इत्यन्वयः । 'क्वचिदि'त्यनुवादः । 'दृष्टार्थायामि'ति व्याख्या । सम्पदादिदृष्टफलसाधनबोधकस्मृतिभाग इत्यर्थः । 'अस्या' इत्यनुवादः । 'अदृष्टार्थाया' इति व्याख्या । एवमग्रेऽपि । **कारणाभावादिति** । फलव्यभिचाररूपकारणस्य तद्भागेऽदृष्टेरिति भावः ।





**वं०प०— अन्यथा** पञ्चरात्रस्मृतेर्दृष्टफलव्यभिचारेऽपि चेत्प्रामाण्यमित्यर्थः । **फलव्यभिचारस्य** शैवादिस्मृत्यप्रामाण्यसाधकहेतुभूतस्य । **व्यधिकरणत्वादिति** । अदृष्टार्था पञ्चरात्रादिस्मृतिरप्रमाणं दृष्टार्थे फलव्यभिचारादिति व्यधिकरणमित्यर्थः । ननु तर्हि दृष्टफलार्थपञ्चरात्रस्मृतिविरोधेन पाशुपतादिस्मृतीनाम् अप्रामाण्यं न सम्भवतीत्याह **तद्विरोधादेवेति** । अदृष्टार्थकपञ्चरात्रादिस्मृतिविरोधादेवेत्यर्थः ।

**कं०रा०— अन्यथेति** । फलव्यभिचारेऽपि पञ्चरात्रादिस्मृतीनां प्रामाण्य इत्यर्थः । **तद्विरोधादिति** । अदृष्टार्थकपञ्चरात्रादिस्मृतिविरोधादेव पाशुपतादीनामप्रामाण्यमुक्तमिति दृष्टार्थायाः पञ्चरात्रादिस्मृतेरप्रामाण्यवचनं प्रकृतानुपयुक्तमित्यभिसन्धिरित्यर्थः ।

**शे०वा०—** ननु फलव्यभिचारेण पाशुपतादिस्मृतीनामप्रामाण्यं प्रतिपाद्य कथं तद्विरुद्धं फलव्यभिचारेऽपि तासामप्रामाण्याभाववर्णनं 'न च' इत्यादिनोत्तरग्रन्थेन क्रियते । न च नैतत्पाशुपतादिस्मृतीनां फलव्यभिचारेऽप्यप्रामाण्यवर्णनं किन्तु पञ्चरात्रादिस्मृतीनामिति न पूर्वोत्तरविरोध इति वाच्यम् । तत्र फलव्यभिचारस्याप्रसक्त्याऽप्रामाण्यप्रसक्तेरेवाभावात् । तथा च 'न चे'त्यादिपञ्चरात्रादिस्मृतिप्रामाण्यवर्णनमनर्थकमित्यतः प्रागुक्तस्य पञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यस्य समर्थनार्थत्वान्न तस्यानर्थक्यमित्याशयेन तद्व्यावर्त्यशङ्कामुत्थापयति **नन्विति** । ननु पञ्चरात्रादिस्मृतीनां फलव्यभिचारेऽप्यप्रामाण्यसम्प्रतिपत्तेर्युक्तमेव तद्विरोधेन पाशुपतादिस्मृत्यप्रामाण्यमित्यतस्तर्हि फलव्यभिचारस्य पञ्चरात्रादिस्मृतिष्वप्रामाण्यव्यभिचारेण तदसाधकत्वात् फलव्यभिचारेण पाशुपतादिस्मृतीनामप्रामाण्यसाधनं प्राक्तनमसमञ्जसं स्यादित्याशयेनाह **अन्यथेति** । व्यवहितत्वेऽपि योग्यत्वात् क्वचिदित्यस्य व्यभिचारेऽपीत्यनेन सम्बन्ध इत्याह **क्वचिद्व्यभिचारेऽपीति सम्बन्ध इति** । **अप्रामाण्ये सत्यपीति** । अनेन मूले व्यभिचारेऽपीत्यपिशब्दोऽप्रामाण्यसमुच्चयार्थ इत्युक्तं भवति । **कारणाभावादिति** । फलव्यभिचारलक्षणाप्रामाण्यकारणाभावादित्यर्थः । नन्वेवमदृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्याप्राप्तावपि दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यम् अवर्जनीयमेवेति न पञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यसिद्धिरित्यत आह **तद्विरोधादेवेति** । अदृष्टार्थपञ्चरात्रादिस्मृतिविरोधादेवेत्यर्थः । न तु दृष्टार्थपञ्चरात्रादिस्मृतिविरोधादित्येवार्थः । अदृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाणस्य प्रतिपाद्यमानत्वात् अदृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्ये सत्यपि तद्विरोधे पाशुपतादिस्मृतिप्रामाण्योपपत्त्या तद्विरोधस्य पाशुपतादिस्मृत्यप्रामाण्यानापादकतया तदप्रामाण्यप्रतिपादनस्य प्रकृतोपयोगित्वेऽपि फलव्यभिचाररूपकारणाभावेन तस्याशक्यत्वात् । दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यप्रतिपादनस्योक्तकारणसम्पत्त्या शक्यत्वेऽपि तद्विरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादनपक्षे, दृष्टार्थस्य तस्याप्रामाण्ये सत्यपि तद्विरोधे पाशुपतादिस्मृतिप्रामाण्योपपत्त्या, तद्विरोधस्य पाशुपतादिस्मृत्यप्रामाण्यानापादकत्वेन, दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यप्रतिपादनस्य प्रकृतोपयोगित्वप्राप्तावपि च दृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादनस्येहानभिमतत्वात् । अभिमते चादृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादने दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्येऽपि





प्रमाणीभूतादृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन पाशुपतादिस्मृत्यप्रामाण्योपपत्त्या तद्विरोधस्याप्रामाण्यानापादकत्वाभावेन दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यव्युत्पादनस्य प्रकृतानुपयोगित्वेनाकर्तव्यत्वान्नोक्तशङ्कावकाश इत्यभिसन्धिरिति भावः ।

**वा०र०— फलव्यभिचारेति** । यस्याश्च दृष्टार्थस्मृतेः फलव्यभिचारेण प्रामाण्यप्रतिपादनं शक्यं न तद्विरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादनं इह प्रकृतम् । यदि हि दृष्टार्थपञ्चरात्रादिस्मृतिविरोधेन विरोधस्मृतेः अप्रामाण्यप्रतिपादनं इहाभिमतं स्यात् तदा दृष्टार्थायाः तस्याः अप्रामाण्यप्रतिपादनसङ्गतिः । न चैवम् । ततो न दृष्टार्थाया अपि तस्याः तत् प्रतिपादनं सङ्गतम् । व्यर्थत्वात् । तदेतदुक्तम् । **दृष्टार्थेत्यादिना अनभिमतत्वादित्यन्तेन** । शक्यत्वेऽपि इत्यस्यादृष्टार्थपञ्चरात्रादिविरोधेन पाशुपतादिस्मृत्यप्रामाण्यप्रतिपादनस्य इह अनभिमतत्वात् इत्युत्तरेण सम्बन्धः । दृष्टार्थस्मृतिविरोधात् विरोधस्मृतेः अप्रामाण्यप्रतिपादनपक्षेऽपि तदप्रामाण्यप्रतिपादनं प्रकृतानुपयोगादेव कुतो न निराक्रियते इत्यत उक्तम् । तद्विरोधेनेत्यादिप्राप्तावपीत्यन्तम् । अपीत्यनन्तरं चकारपाठः । तस्याप्रामाण्येत्यत्र दृष्टार्थस्मृतिपदोपस्थितं वाक्यं परामृश्यते इत्यदोषः । अप्रामाण्ये एतत्पक्षे इत्यर्थः । अस्तु तर्हि दृष्टार्थं तत्स्मृत्यप्रामाण्यार्थमेवादृष्टार्थतत्स्मृतिविरोधेन प्रामाण्यप्रतिपादनपक्षे अपि उपयोगी । अदृष्टार्थतत्स्मृतेरपि अप्रामाण्यप्रसञ्जकत्वात् इत्यत आह **अभिमते चेति** । प्रतिपादनेत्यस्य तत्पक्षे इत्यर्थः । अस्य दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यव्युत्पादनस्य प्रकृतानुपयोगित्वेन अकर्तव्यत्वादित्यनेन सम्बन्धः । प्रकृतानुपयोगस्यैवोपपादनं दृष्टार्थ इत्यादि अभावेनेत्यन्तम् । **तद्विरोधस्येति** । अदृष्टार्थतत्स्मृतिविरोधस्येत्यर्थः । मूलोक्तव्यधिकरणत्वादिति भावः । **नोक्तशङ्केति** । पञ्चरात्रादिस्मृत्यप्रामाण्यशङ्केत्यर्थः ।

**स०व्र०—** ननु कारणाभावेनादृष्टार्थाया अप्रामाण्याभावे दृष्टार्थायाः फलव्यभिचारलक्षणकारणसत्त्वेन अप्रामाण्यात् तद्विरोधेन कथं पाशुपतादिस्मृतीनामप्रामाण्यमुक्तमित्यत आह **तद्विरोधादेवेति** । अदृष्टार्थपञ्चरात्रस्मृतिविरोधादेवेत्यर्थः । जगत्कारणत्वादेरतीन्द्रियत्वादिति भावः ।

**विठ्ठल०— अन्यथेति** । फलव्यभिचारेऽपि पञ्चरात्रादीनां प्रामाण्य इत्यर्थः । तदेव वाक्यं पूर्वावृत्त्या दोषोक्तिपूर्वं योजयति **यत इति** । **फलव्यभिचारे हेताविति** । फलव्यभिचारित्वरूपहेतुवर्तमाने इत्यन्वयः । **क्वचिदित्यनुवादः** । **दृष्टार्थायामिति** । व्याख्यासम्पदादिदृष्टफलसाधनबोधकस्मृतिभाग इत्यर्थः । **अस्या**मानुवादः **अदृष्टार्था**या इति व्याख्या । एवमग्रेऽपि । **कारणाभावादिति** । फलव्यभिचाररूपकारणस्य तद्भागे अदृष्टेरिति भावः ।

* * *





**॥ अथ पञ्चरात्रादिस्मृतेः निर्दोषवाक्यमूलत्वात् प्रामाण्यं,**
**न तु समर्थप्रवृत्तिजनकत्वरूपयुक्तिमूलत्वात् ॥**

२४ **सु०—** अथ दृष्टार्थायाः फलव्यभिचारेणाप्रामाण्ये सति तत एवादृष्टार्था अपि अप्रमाणं भविष्यतीति चेन्न । 'तत' इति किं तेन हेतुनोत तेन दृष्टान्तेन । नाद्यः, **क्वचिद् व्यभिचारे**(णा)ऽप्रामाण्ये **अपि अस्या मानता हीयत** इति **न** युक्तम्, व्याप्त्यभावात् । न द्वितीयः, **क्वचित्** व्यभिचारे **अप्रामाण्ये(ऽपि) अस्या मानता हीयत** इत्येतत् **न** युक्तम्, हेत्वभावात्, नारायणवाक्यत्वादेर्व्यभिचारात् ।

मा हि भूत्सकलमपि नारायणवाक्यमप्रमाणम् । दृष्टार्थायां फल**व्यभिचारे** अप्रामाण्ये च सति **अस्या अपि मानता** शङ्कास्पदत्वेन **हीयत** इति च **न** वाच्यम् । अत्र हेतुमाह **निर्दोषेति ।**

## अनु०— निर्दोषवाक्यमूलत्वान्न च तद्युक्तिमूलता ।

**निर्दोषवाक्यं** वेदः, **तद्युक्तिः** समर्थप्रवृत्तिजनकत्वं, प्रामाण्यावधारणस्य, यत इति शेषः ।

अयमभिसन्धिः । किमिदं दृष्टार्थायाः पञ्चरात्रादिस्मृतेः फलव्यभिचारेण अप्रामाण्यानुमानम्, तत एवेतरस्या अप्यप्रामाण्यशङ्कनं च, स्वातन्त्र्येण क्रियते किंवा प्रतिबन्दीग्रहणम् ।

आद्यं तूत्तराधिकरणे निराकरिष्यामः ।

न द्वितीयः । प्रतिबन्दीग्रहणं हि प्रमेयसाध्ये भवति । न चैवं प्रकृते । परेण खलु फलसंवादादिना पाशुपतादिस्मृतेराप्तमूलत्वप्रामाण्ययोरनुमितयोरस्माभिस्तन्न्यायेन फलविसंवादं प्रदर्श्य दोषोऽभिहितः । यदि नाम पञ्चरात्रादिस्मृतिप्रामाण्यावधारणं फलसंवादयुक्त्याऽऽशास्येत, स्यादिदं तदा प्रतिबन्दीग्रहणम् । **न च** अस्माभिः पञ्चरात्रादिप्रामाण्यावधारणस्य **तद्युक्तिमूलता** उपेयते । न चैवं तत्प्रामाण्यावधारणं निर्मूलं स्यादिति वाच्यम्, बोधकत्वेन स्वतःसिद्धत्वात् । अप्रामाण्यशङ्कानिवृत्तिः कुत इति चेदाप्तमूलत्वेनेत्युक्तम् । तदवधारणं निर्मूलमिति चेन्न, श्रुतिसंवादनिबन्धनत्वादिति ।





**ननु श्रुतेरेव वक्तृगुणहीनाया न प्रामाण्यमित्यतो निर्दोषवाक्य इत्युक्तम् । बोधकत्वेनैव हि प्रामाण्यं व्यवस्थापितं, तच्च वाक्यत्वाच्छ्रुतेरुभयसम्मतम्, दोषस्तु तदपवादकः, न च अपौरुषेये स सम्भवतीति निष्कम्पमेव श्रुतिप्रामाण्यम् इति वक्ष्याम इत्यर्थः । अस्यां दशायां श्रुतिविरोधेनापि पाशुपतादिस्मृतीनामप्रामाण्यं शक्यसाधनम् ।**

**यदप्युक्तम् 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि'ति तत्तथा । किन्त्वविरुद्धानामेवोपायत्वं, न तु विरुद्धानाम् । न चैवमितरेतराश्रयत्वम्, श्रुत्यर्थनिश्चयस्य स्मृतिसंवादैकनिबन्धनत्वाभावादिति ।**

**परि०— व्याप्त्यभावादिति** । अदृष्टार्थकत्वांशेऽपि पञ्चरात्रस्मृतिः फलव्यभिचाराप्रामाण्याभ्यामुपेता । दृष्टार्थकत्वांशे ताभ्यामुपेतत्वादित्यत्र यथाऽमुक इति सम्प्रतिपन्नदृष्टान्ताभावात् । यत्कचिदंशे तदुभयोपेतं तदंशान्तरेऽपि तदुभयोपेतमिति सामान्यव्याप्तेश्च देवदत्तादिवाक्येषु व्यभिचारादिति भावः । नारायणवाक्यत्वादेर्व्यभिचारादिति कुत इत्यत आह **मा हि भूदिति** । नारायणवाक्यं सकलमप्यप्रमाणं हि यस्मान्माभूत् न भवति अत इत्यर्थः । अन्यथा तद्वाक्यं सकलमप्यप्रमाणं प्रसज्येतेति भावः । उत्तरवाक्यमवतारयितुं योजनान्तरमाह **दृष्टार्थायामिति** । **स्वातन्त्र्येणेति** । पाशुपतादेरप्रामाण्यादिकं परिहर्तुं प्रतिबन्दीरूपेण ग्रहणं विनेत्यर्थः । **उत्तरेति** । 'न विलक्षणत्वादि'त्यत्र । **तद्युक्तिमूलतेति** । फलसंवादयुक्तिमूलतेत्यर्थः । **स्वत इति** । फलसंवादापेक्षां विनैवेत्यर्थः । **इत्युक्तमिति** । 'हरिपूर्वकाः । किं नाशेषविदः' इत्यनेनोक्तमित्यर्थः । एवं तर्हि निर्दोषवाक्यमूलत्वादिति किमर्थमुक्तमित्यतस्तदुपयोगं व्यनक्ति **तदवधारणमित्यादिना** । **व्यवस्थापितमिति** । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इत्यत्र जिज्ञासानये । **वाक्यत्वादिति** । आकाङ्क्षायोग्यतासन्निधिमत्पदकदम्बकत्वरूपत्वादित्यर्थः । **वक्ष्याम इति** । उत्तराधिकरणे । **अस्यां दशायामिति** । निष्कम्पप्रामाण्य(ण्यावधारण)दशायामित्यर्थः । **न चैवमितरेतराश्रयत्वमिति** । स्मृत्यनुरोधेन श्रुत्यर्थनिर्णये सति स्मृतेः श्रुत्यविरुद्धत्वेन उपायत्वनिश्चयः तत्सिद्धौ च स्मृत्यनुसारेण श्रुत्यर्थनिर्णयार्थे निश्चिते सत्यविरुद्धत्वं अविरुद्धत्वे सति तदनुरोधेन श्रुत्यर्थनिर्णयः इतीतरेतराश्रयत्वमित्यर्थः । **स्मृतिसंवादैकनिबन्धनत्वाभावादिति** । उपक्रमादिभिरेव श्रुत्यर्थनिर्णय इति समन्वयसूत्रे व्यवस्थापितत्वात् उपक्रमादिसिद्धेऽर्थे स्मृत्यादिकमभ्युच्चयत्वेनेष्यत इति वक्ष्यमाणत्वादिति भावः ।





**यादु०**— व्यभिचारमुपपादयति **मा हि भूदिति** । न हि भवतीत्यर्थः । तथा च प्रमाणभूते नारायण-वाक्ये व्यभिचार इति भावः । **उत्तराधिकरण इति** । तन्मूलत्वात् स्मृतीनां चेत्यत्रेत्यर्थः । **वक्ष्याम इति** । 'नित्यत्वात्पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेदि'त्युत्तराधिकरण इति शेषः । **न चैवमिति** । विष्णुजगज्जन्मादिकारणत्वादिकमेव श्रुतेरर्थ इति निश्चये तदविरुद्धानां पञ्चरात्रादिस्मृतीनामेवोपायत्वं न तु विरुद्धानां पाशुपतादिस्मृतीनामिति निर्णयः । तस्मिंश्च सत्यविरुद्धपञ्चरात्रादिस्मृत्यनुसारेणोक्तवेदार्थनिर्णय इतीतरेतराश्रयत्व-मित्यर्थः । **श्रुत्यर्थनिश्चयस्येति** । ऋज्वादियोगिश्रुत्यर्थनिश्चयस्यानादिसिद्धत्वेन स्मृतिसंवादनिबन्धनत्वाभावादिति भावः । इतरेषामपि तेष्वाप्तिनिश्चये तदीयव्याख्यानेनैव श्रुत्यर्थनिश्चयः । अन्यथा पञ्चरात्रादिस्मृतिसंवादेनैव । तदिदमुक्तं स्मृतिसंवादैकनिबन्धनत्वाभावादिति । अन्ये तु स्पष्टार्थश्रुतेरर्थनिश्चयाय स्मृतिसंवादो नापेक्षित इत्यर्थ इत्याहुः ।

**वं०प०**— **क्वचिद्** दृष्टार्थे । **अस्याः** अदृष्टार्थायाः । **व्याप्त्यभावादिति** । यत्र दृष्टफलविधायक-वाक्याप्रामाण्यं तत्रादृष्टफलविधायकवाक्याप्रामाण्यमिति व्याप्त्यभावादित्यर्थः । **क्वचित्** स्थले । ननु पञ्च-रात्रादिस्मृतिरप्रमाणमित्यत्र नारायणवाक्यत्वमेव हेतुर्भविष्यतीत्यत आह **नारायणेति** । गामानयेत्यादितद्वाक्य इत्यर्थः । तत्राप्रामाण्यरूपसाध्यस्यापि सत्त्वान्न व्यभिचार इत्यत आह **मा हि भूदिति** । न भवति हीत्यर्थः । **तदवधारणम्** आप्त्यवधारणम् । **तच्च** बोधकत्वम् । **तदिति** । प्रामाण्येत्यर्थः । **अस्यां दशायाम्** श्रुतेरपौरुषेय-तया निष्कम्पप्रामाण्यस्य व्यवस्थितिदशायाम् । ततश्च 'परोक्तं दोषं बुद्ध्वा श्रुतिपरित्यागस्त्वयुक्त' इति दोषानवकाश इति ध्येयम् ।

**कं०रा०**— नन्वदृष्टार्थकपञ्चरात्रादिस्मृत्यप्रामाण्ये नारायणवाक्यत्वादेर्हेतुत्वात्कथं हेत्वभाव इत्यत आह **नारायणवाक्यत्वादेरिति** । व्यभिचारमुपपादयति **मा हीति** । **वाक्यत्वादिति** । आकाङ्क्षासन्निधिमत्पद-कदम्बकत्वादित्यर्थः । **अस्यां दशायामिति** । श्रुतिप्रामाण्यनिश्चयदशायामित्यर्थः । **अविरुद्धानामिति** । अविरुद्धानां पञ्चरात्रस्मृतीनामेव श्रुत्यर्थनिश्चयोपायत्वं न तु विरुद्धानां पाशुपतादिस्मृतीनामित्यर्थः । **न चैव-मिति** । अविरुद्धानां पञ्चरात्रादिस्मृतीनां श्रुत्यर्थनिश्चयोपायत्वे सिद्धे पञ्चरात्रादिस्मृतिप्रामाण्ये तदुपबृंहणेन श्रुत्यर्थनिश्चयः । सति च तस्मिन् श्रुतिसंवादेन स्मृतिप्रामाण्यसिद्धिरिति परस्पराश्रयत्वं नैव श्रुत्यर्थनिश्चयस्य उपक्रमोपसंहारादिभिरपि कर्तुं शक्यत्वेन पञ्चरात्रादिस्मृत्युपबृंहितैकनिबन्धनत्वाभावादित्यर्थः ।

**श्रीनिधि०**— **हेत्वभावात्** लिङ्गाभावात् । व्यभिचारमुपपादयति **मा हि भूदिति** । नारायणवाक्यत्वं पञ्चरात्रस्मृतित्वं वा लिङ्गमस्त्वित्यत आह **नारायणवाक्यत्वादेरिति** । **तन्न्यायेनेति** । तद्रीत्येत्यर्थः । दोषो-ऽभिहित इत्यनेन सम्बन्धः । **तच्च वाक्यत्वादिति** । बोधकत्वमित्यर्थः । **अस्यां दशायामिति** । वक्तृगुणाभावेऽपि निर्दोषत्वेन प्रामाण्यं वेदस्येति बोधदशायामित्यर्थः । इदानीं प्रामाण्यकारणादेर्भविन पाशुपतादिकं प्रमाणश्रुतिः तदभावेन अप्रमाणमित्यस्य अयोगादिति भावः ।





**शे०वा०—** फलव्यभिचारेण दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यव्युत्पादनस्य साक्षात्प्रकृतानुपयोगित्वेऽपि परम्परया तदस्त्येवेति कथमकर्तव्यतेति शङ्कते **अथेति** । **व्याप्त्यभावादिति** । दृष्टार्थायाः फलव्यभिचारेण अप्रामाण्यकरूपस्य हेतोरदृष्टार्थतदप्रामाण्यरूपसाध्येन व्याप्तौ दृष्टान्ताभावेन व्याप्त्यभावादित्यर्थः । **व्यभिचारा-दिति** । प्रमाणीभूतनारायणवाक्य इति शेषः । ननु नारायणवाक्यमात्रस्याप्रमाणत्वेन प्रमाणीभूततद्वाक्यासिद्धेर्न तत्र व्यभिचार इत्यत आह **मा हि भूदिति** । न भवति हीत्यर्थः । निर्दोषेत्यादिमूलमुत्थापयितुमपेक्षित-प्रतिज्ञारूपतयाऽपि 'न चे'त्यादिमूलं योजयति **दृष्टार्थायामिति** ।

ननु पञ्चरात्रादिस्मृतिप्रामाण्यावधारणस्य फलसंवादरूपयुक्त्यमूलत्वकथनमनर्थकम् । न चेदं पाशुपता-दिस्मृतिवैषम्योपदर्शनेन प्रतिबन्दीपरिहारार्थमिति वाच्यम् । फलव्यभिचारेण दृष्टार्थपञ्चरात्रादिस्मृत्यप्रामाण्यानु-मानादेः परेण स्वातन्त्र्येणापि कर्तुं शक्यत्वेन प्रतिबन्दीत्वेनैव तस्य कर्तव्यतायां नियामकाभावात् । भावे वा वैषम्योपदर्शनेन प्रतिबन्दीपरिहारस्य 'न च तद्युक्तिमूलते'त्येतावता भाष्यखण्डेनैव सिद्ध्या निर्दोषवाक्यमूलत्वा-दित्यंशवैयर्थ्यमेव । न चोक्तयुक्तिमूलत्वाभावे तत्प्रामाण्यावधारणस्य निर्मूलत्वशङ्कापरिहारार्थं तदिति वाच्यम् । तथा सति प्रामाण्यावधारणस्य निर्दोषवाक्यमूलत्वेन प्रामाण्यस्य परतस्त्वापत्त्याऽपसिद्धान्तप्रसङ्गादित्यतोऽत्र विकल्पमुखेन ग्रन्थप्रवृत्तिं, बहिरेवाद्यपक्षदूषणं चाभिप्रेत्य प्रतिबन्दीग्रहणपक्षमात्रनिरासकतया मूलप्रवृत्तेर्नानुप-पत्तिरिति भावेन विकल्पद्वयं प्रदर्श्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षनिरासकतया भाष्यं योजयितुं विकल्पं तावद्दर्शयति **अयमभिसन्धिरित्यादिना** । **उत्तराधिकरण इति** । 'तन्मूलत्वात्स्मृतीनां चे'त्यादिनेति शेषः । भाष्ये वेदमूलत्वोपन्यासस्यानर्थक्यं परिहर्तुं तदुपयुक्तं प्रमेयमाशङ्कासमाधानाभ्यां स्वयमाह **न चेत्यादिना** । श्रुति-मूलत्वोक्त्यैव विवक्षितसिद्धेरनर्थकं भाष्ये तन्निर्दोषत्वकथनमित्यतः श्रुत्यप्रामाण्यशङ्कानिरासार्थत्वान्नानर्थक्य-मित्याशयेन प्रसञ्जकोक्त्या तदप्रामाण्यशङ्कां निर्दोषत्वेन तत्परिहारप्रकारं च दर्शयति **नन्वित्यादिना** । **तच्च वाक्यत्वाच्छ्रुतेरुभयसम्मतमिति** । अनेन मूले वाक्यग्रहणस्य प्रयोजनमुक्तं भवति । अन्यथा निर्दोषवेद-मूलत्वादित्येव वक्तव्यतया वाक्यग्रहणं न कुर्यादिति भावः । **वक्ष्याम इति** । 'नित्यत्वात्पुरुषोद्भवैः । 'उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेदि'त्यादिनोत्तराधिकरण इति शेषः । **अस्यां दशायामिति** । निष्कम्पश्रुति-प्रामाण्यसिद्धिदशायामित्यर्थः । **इतरेतराश्रयत्वमिति** । स्मृतेः श्रुत्यविरुद्धत्वे निश्चिते तत्संवादेन श्रुत्यर्थनिश्चय-स्तन्निश्चये च स्मृतेस्तदविरुद्धत्वनिश्चय इतीतरेतराश्रयत्वमित्यर्थः । **स्मृतिसंवादैकनिबन्धनत्वाभावादिति** । विनाऽपि स्मृतिसंवादमुपक्रमादिभिरपि श्रुत्यर्थनिर्णयसम्भवादिति भावः । स्पष्टार्थश्रुतेरर्थनिर्णयाय स्मृतिसंवादो नापेक्षित इति भावेनैवमुक्तमित्यप्याहुः ।

**वा०र०— तत इति** । किं तेन हेतुना उत तेन दृष्टान्तेनेति मूले तच्छब्देन प्रकृतपरामर्शकेन दृष्टार्थायाः फलव्यभिचारेणाप्रामाण्यरूपविशिष्टस्यैव परामर्शेऽभिप्रेतेऽपि हेतुतापक्षे यथाश्रुतमुक्तम् । विशिष्टमप्रामाण्यमेव तच्छब्देन ग्राह्यम् । दृष्टान्तत्वपक्षे तु फलव्यभिचारेणाप्रमाणदृष्टार्थस्मृतिरेव ग्राह्या । तावतापि विशिष्टस्यैव





विवेकेनापादानलाभः । अत एव मूले पक्षद्वयदूषणावसरे तथैव स्पष्टं प्रतीतिरिति द्रष्टव्यम् । उक्तरीत्या तत इत्यस्य विशिष्टग्राहकत्वादेव व्याप्त्यभावोपपादनं च टीकाकारीयं तथैव भविष्यतीति ज्ञेयम् । **न भवतीत्यर्थ इति** । माङ्योगे लुङः सर्वलकारापवादकत्वेन लङर्थे लिङिति भावः । **अप्रामाण्यानुमानादे**ः इत्यादिपदेनेतरस्य अप्रामाण्यानुमानस्य परिग्रहः । **उपक्रमादिभिरपीति** । अत्रादिपदेनोपसंहारादिषट्कस्य च श्रुत्यादिषट्कस्यापि ग्रहणम् । श्रुत्यादिषट्कं च ग्राह्यमिति समन्वयसूत्रीयतत्त्वप्रकाशिकायामुक्तत्वात् । समन्वयाधिकरणमूले उपक्रमादीनां श्रुत्यादीनां च सन्निकर्षविप्रकर्षाभ्यामिति व्यवहारः । तात्पर्यनिर्णायकत्वं उपक्रमादीनामेवेति उपक्रमोपसंहारावभ्यास इति वाक्यं प्रमाणीकृत्य भाष्यादावुक्तम् । आगमार्थावसित्यर्थानियतव्याप्तयोऽखिला इति भक्तिपादीयानुभाष्ये श्रुत्यादीनामर्थनिर्णायकत्वमुक्तम् । उपक्रमादिलिङ्गानां बलीय इत्येतत् ज्ञानपादी-यानुव्याख्यानमूले तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थावादोपपत्तयः । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याश्च तात्पर्यलिङ्गानीत्यन्तेन श्रुत्यादीनां तात्पर्यनिर्णायकत्वं (यदुक्तं तद्गतिष्टीकायाम्) । यद्यपि श्रुत्यादीनां आगमार्थनिर्णायकत्वमेव सिद्धान्तः, न तु तात्पर्यनिर्णायकत्वम्, 'आगमार्थावसित्यर्था नियतव्याप्तयोऽखिलाः' इत्युक्तत्वात्, तथापि साक्षात् विप्रतिपन्नार्थनिष्ठानां एतेषामागमार्थनिर्णायकत्वेऽपि प्रकरणादौ श्रुतीनां उपक्रमादिनिर्णायकत्वेन तद्द्वारा तात्पर्यनिर्णायकत्वाभिप्रायेण इयमुक्तिरिति ध्येयमिति कृतास्ति । 'वायवाया हि दर्शत' इति ऋग्भाष्यटीकायां उपक्रमादयः खलु अर्थस्य निश्चायका इत्युक्तम् । 'जिज्ञास्योऽयं विधीयते' इत्येत-न्मूले शक्तितात्पर्यावधारणरूपं विचारप्रयोजनमुक्तम् । सकलस्यापि शास्त्रस्य यो ब्रह्मणि परममुख्यया वृत्त्या प्रतिपाद्यप्रतिपादकत्वलक्षणः समन्वयः इत्यानन्दमयनयमूले उक्तिः । तृतीयपादीयविष्णौ समन्वयमिति भाष्यस्य विष्णवैकवाचित्वमिति तट्टीकायां अर्थ उक्तः । अभ्यासस्य च समाख्यातो बलवत्वात् इति अन्तस्थत्वाधि-करणोक्तटीकायामुक्तिः । समन्वयाधिकरणचन्द्रिकायां गङ्गायां घोषः इत्यादिव्यावृत्त्यर्थं उपक्रमादिकं विषं भुंक्ष्वेत्यादिव्यावृत्त्यर्थं श्रुत्यादिकमित्युक्तम् । शक्तितात्पर्यावधारणभूतसमन्वय इति चानन्दमयनये तत्रोक्तम् । उपक्रमादिलिङ्गेभ्य इत्यनुभाष्यमूलटीकायामपि तात्पर्यज्ञापकत्वेन वाक्यार्थज्ञानोपयुक्तत्वेन च सजातीयानां उपसंहारादीनां चेत्युक्तम् । तदेतत् स्थलानुगुण्येन एकवाक्यता योज्यास्ति । न चैवमुपक्रमादिना श्रुत्यर्थ-निश्चयदशायां अन्योन्याश्रयाप्रसङ्गेऽपि स्मृतिसंवादेन तन्निश्चयस्थले अन्योन्याश्रयः स्यादेवेति वाच्यम् । उपक्रमादेरेव सर्वत्रार्थनिश्चायकत्वम् । स्मृतिसंवादेन क्वचित् दृढीकरणमात्रं इत्यत्र मूलटीकयोः तात्पर्यात् । तथा च स्मृतिसंवादात् पूर्वभाविश्रुत्यविरोधस्योपक्रमादिकृतश्रुत्यर्थनिश्चयेन उपपत्त्या स्मृतिसंवादानपेक्षत्वम् । स्मृति-संवादसाध्यश्रुत्यर्थदृढीकरणरूपनिश्चयस्य तु न श्रुत्यविरोधोपपादकत्वं इति कथमन्योन्याश्रयः । अस्ति च प्रत्यक्षादिना जायमाननिश्चयादीनां अनेकरूपत्वमिति बोध्यम् ।

**स०व्र०— व्याप्त्यभावादिति** । अदृष्टार्थायाः स्मृतेः अप्रामाण्यम्, दृष्टार्थायाः फलव्यभिचारेण अप्रामाण्यमित्यनयोः व्याप्तिग्रहणस्थलाभावेन व्याप्त्यभावादित्यर्थः । **नारायणवाक्यत्वादेरिति** । प्रमाणीभूते





तद्वाक्ये इति शेषः । तत्र साध्यस्याप्रामाण्यस्यापि सत्त्वान्न व्यभिचार इत्यत आह **मा हि भूदिति** । न भवति हीत्यर्थः । **तदवधारणमिति** । आप्तिमूलत्वावधारणमित्यर्थः । **अस्यां दशायामिति** । वेदस्यापौरुषेयत्वेन अप्रामाण्यशङ्काऽभावेन, बोधकत्वेन च स्वत एव प्रामाण्यसमर्थनदशायामित्यर्थः । **न चैवमितरेतराश्रयत्वमिति** । स्मृतेः श्रुत्यविरुद्धत्वे निश्चिते तया श्रुत्यर्थनिश्चयः । श्रुत्यर्थनिश्चये च स्मृतेस्तदविरुद्धत्वनिश्चय इति अन्योन्याश्रयत्वमिति भावः । **श्रुत्यर्थनिश्चयस्येति** । स्पष्टार्थश्रुतेरर्थनिश्चयाय स्मृत्यनपेक्षणात् तदर्थनिश्चयानन्तरं तयोरविरोधज्ञानसम्भवादिति भावः ।

**स०ना०— निर्दोषवाक्यमूलत्वादिति** मूलसुधायां **न चैवमितरेतराश्रयत्वमिति** । श्रुत्यर्थनिश्चये स्मृतिप्रणयनं तस्मिंश्च सति स्मृत्या वेदार्थनिश्चय इतीतरेतरेतराश्रयत्वं नेत्यर्थः ।

**विठ्ठल०— तत इति किमिति** । तत इति । अस्याः **दृष्टार्थायाः** फलव्यभिचारेण निमित्ते प्रामाण्यादिति हेतुना अदृष्टार्थाया अप्यप्रामाण्यं साध्यते वा फलव्यभिचारेण निमित्तेनाप्रमाणीभूतदृष्टार्थवाक्यदृष्टान्तेन अदृष्टार्थायाः प्रामाण्यं साध्यते वेति विकल्पार्थः । **व्याप्त्यभावादिति** । अमुक इति दृष्टान्ताभावादिति भावः । व्याप्तचिदंशे व्यभिचाराप्रामाण्योपेतं तदंशान्तरेऽपि तदुपेतम् । यथा विपर्ययादिपूर्वकवचनमिति सामान्यव्याप्तिरस्तीति चेन्न । सम्प्रतिपन्नाप्तवाक्ये व्यभिचारात् । तस्यापि धर्मादिप्रसङ्गे क्वचिदप्रमाणवाक्यप्रयोक्तृत्वसम्भवादिति भावः । व्यभिचारं उपपादयति **मा हि भूदिति** । तथा च प्रमाणभूते नारायणवाक्ये व्यभिचार इति भावः । उत्तरवाक्यमवतारयितुं योजनान्तरमाह **दृष्टार्थायामिति** । ननु दृष्टार्थायां पञ्चरात्रादिस्मृतौ फलव्यभिचारेण प्रामाण्यमनुमाय तत एव तद्वदेव अदृष्टार्थायामप्यप्रामाण्यशङ्का क्रियते । एवं च शङ्काकलङ्कितस्य न मानतानिश्चय इति परेणाशङ्किते अनुमानस्य दूषणोक्तिद्वारा शङ्कापरिहार एव कर्तव्यः । तद्विहाय श्रुतिमूलत्वादिकथनं प्रकृतानुपयुक्तमित्यत आह । प्रतिबन्दीरूपमन्तरा स्वातन्त्र्येण तच्चोद्यं क्रियत आहोस्विदिति पाशुपतादिस्मृतौ एवं दूषणेनास्माभिर्दूषितायां सति तत्प्रतिबन्दीतया एतदुच्यते वेति विकल्प्य आद्यस्य तन्मूलत्वात्स्मृतीनामिति नविलक्षणत्वाधिकरणे निराकरिष्यमाणत्वात् प्रतिबन्दीमोचनार्थं वैषम्याप्रदर्शनपरत्वात् तदुपयोग इति भावेनाह **अयमभिसन्धिरिति** । **इत्युक्तमिति** । हरिपूर्वकाः । किन्नाशेषविदः इत्यनेनोक्तमित्यर्थः । एवं तर्हि निर्दोषवाक्यमूलत्वादिति किमर्थमुक्तमित्यतस्तदुपयोगं दर्शयति **तदवधारणमित्यादिना** । **व्यवस्थापितमिति** । 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य ही'त्यनेनेत्यर्थः । **वक्ष्याम इति** । उत्तराधिकरण इति भावः । **न चैवमितरेतराश्रयत्वमिति** । श्रुत्यर्थनिश्चये अतीतस्मृतीनां विरोधाभावे सत्येव तदनुरोधेन श्रुत्यर्थनिश्चय इति इतरेतराश्रयत्वमित्यर्थः । **श्रुत्यर्थनिश्चयस्येति** । योगिनां श्रुत्यर्थनिश्चयस्य योगसामर्थ्यलभ्यत्वेन व्युत्पन्नानां व्युत्पत्त्यादिभिर्निश्चेतुं शक्यत्वेन वा संवादैकनिबन्धनाभावादिति भावः ।





**चषकः**— व्यभिचारमुपपादयति **मा हि भूदिति** । 'माङि लुङ्' सर्वलकारापवादः । 'न माङ्योग' इत्याण्णिषेधः । न हि भवतीत्यर्थः । तथा च प्रमाणभूतनारायणवाक्येऽनैकान्त्यमिति भावः । **उत्तराधिकरण इति** । 'तन्मूलत्वात्स्मृतीनां चे'त्यादिनेत्यादिः । **वक्ष्याम इति** । नित्यत्वात्पुरुषोद्भवैरित्यादिनोत्तरनयेऽभिधास्याम इत्यर्थः । **अस्यां दशायां** निष्कम्पश्रुतिप्रामाण्यावधृतिदशायां इतरेतराश्रयत्वमित्यर्थः । **श्रुत्यर्थनिश्चयस्येति** । अत्र व्याचक्षाणाः । स्मृतिसंवादमन्तरेणाप्युपक्रमादिभिः श्रुत्यर्थनिर्णयसम्भवादिति भावः इत्याशयमुदबीभवन् । स्पष्टार्थश्रुतेरर्थनिर्णयाय स्मृतिसंवादो नापेक्षित इत्यपि व्याचक्रिरे । ऋज्वादियोगिनां श्रुत्यर्थनिश्चयस्यानादिसिद्धत्वेन स्मृतिसंवादनिबन्धनत्वाभावादिति भाव इत्यप्यभिसन्धिमाविष्कुर्वन्ति ।

* * *

**॥ अथ वेदोक्तस्याधिकारस्य दुर्निरूपत्वतः**
**वेदोक्तसाधनानुष्ठानस्य फलनियमो व्यभिचारो वेति ज्ञातुमशक्यम् ॥**

**२५ सु०— "ननु च पञ्चरात्रादिस्मृतीनां प्रामाण्यमङ्गीकुर्वाणैः सर्वथा प्रवृत्तिसामर्थ्यमङ्गीकरणीयम् । व्यभिचारस्य च कर्तृकरणादिवैगुण्यनिबन्धनत्वमभ्युपेयम्, अन्यथा फलव्यभिचारि च प्रमाणं चेति व्याघातापातात् । तथा च फलसंवादेनापि प्रामाण्यादिसाधनं सुशकमेवेति किमुच्यते 'न च तद्युक्तिमूलते'ति" (इति) सुहृद्भावेन पृच्छन्तं प्रत्याह वेदोक्तस्येति ।**

**अनु०— वेदोक्तस्याधिकारस्य दुर्निरूपत्वतः सदा ।**
**नियमो व्यभिचारो वा नैव ज्ञातुं हि शक्यते ।**

**वैदिकग्रन्थोपदिष्टानुष्ठाने वेदोक्ता निषेकादिसंस्कारा एवाधिकारतामापद्यन्त इति वेदोक्तस्य इत्युक्तम् ।**

**यद्वा वेदशब्देन पञ्चरात्रादयोऽपि गृह्यन्ते । अधिकारस्य इत्युपलक्षणम्, साधनानुष्ठानस्येत्यपि द्रष्टव्यम् । दुर्निरूपत्वम् अस्मदाद्यप्रत्यक्षत्वम् । सदा इति स्वभावत एव, न तु देशादिव्यवधानेनेत्यर्थः । नियमो व्यभिचारो वा फलस्येति शेषः । हिशब्दो यस्मादित्यर्थे । तस्मात्फलसंवादेन प्रामाण्यादि नानुमीयत इति शेषः ।**





एतदुक्तं भवति । प्रमितं खलु लिङ्गमनुमितेः करणम्, न सत्तामात्रेण, अतिप्रसङ्गात् । अत्र (च) एवं प्रयोक्तव्यम् । पञ्चरात्रादिकं प्रमाणम्, समर्थप्रवृत्तिजनकत्वात् सम्प्रतिपन्नवदिति । तस्य चायमर्थः, एतद्विहितसाधनानुष्ठानवद्भिस्तत्फलस्य नियमेन प्राप्तेरिति । न चैतल्लिङ्गं शक्यावधारणम्, व्यभिचारस्य बहुलमुपलम्भेन नियमस्य प्रत्येतुमशक्यत्वात्, तदवधारणे च काकतालीयतायाः शङ्कनात् । तत्रैतावद्वक्तव्यम् । कार्यं कारणसामग्रीसम्पाद्यं, न तु तदेकदेशेन, तथात्वेऽतिप्रसक्तेः । प्रकृते चोभयकुलशुद्धिवैदिकनिषेकादिसंस्काराद्यधिकारपूर्वकं विशुद्धाभिसन्ध्यादिमता सम्यगनुष्ठितं कर्म, असति प्रतिबन्धके, सति चेश्वरेच्छादौ हि सहकारिणि, सम्पदादिफलजननायालम् । तथा च यत्र फलं नोपलब्धं तत्राधिकारादिवैगुण्यम्, इतरत्र तु तत्साद्गुण्यम्, इत्यतो नियमनिश्चय इति ॥ न चैतत् युक्तम् । परगतयोरधिकारादिभावाभावयोरस्मदादिभिरवगन्तुमशक्यत्वात् । न हि खलु परकीयपितृपितामहादीनां मानसादिविशुद्धिर्वा, निषेकादिसमीचीनता वा, मन्त्राणामयातयामत्वादिकं वा, द्रव्यादीनां शुचित्वादिकं वा, अर्वाचीनैरवगन्तुं शक्यते । तथा च 'अस्य फलनियम एव, व्यभिचारस्तु वैगुण्यनिमित्त' इति वाऽस्तु, 'व्यभिचार एवास्य, क्वचित् फलोपलम्भस्तु काकतालीयोऽन्यनिमित्त एवे'ति वा भवतु इति सन्देहो न निवर्तते । न च सन्दिग्धेन प्रामाण्यानुमानं युज्यते, प्रामाण्यसिद्ध्युत्तरकालं तु व्यभिचारस्य वैगुण्यनिमित्तताकल्पनायामितरेतराश्रयत्वं स्यात् । वेदसंवादेन तु प्रामाण्येऽवधारिते शक्यते फलव्यभिचारस्यान्या गतिः कल्पयितुम् । अतो वेदसंवादेनैव प्रामाण्यं पञ्चरात्रादीनामवधार्यते न प्रवृत्तिसामर्थ्येनेति ।

**परि०**— स्मृत्यादिप्रसङ्ग वेदमात्रग्रहणसङ्गतमित्यत आह **वैदिकेति** । स्मृत्युक्तस्यापि वैदिकत्वादिति भावः । **पञ्चरात्रादयोऽपीति** । 'भारतं पञ्चरात्रं च वेदा इत्येव शब्दिता' इति नविलक्षणत्वनयभाष्योक्तस्मृतेरिति भावः । 'न च तद्युक्तिमूलते'त्यनेनान्वय इति अर्थतस्तदनुवादेन दर्शयति **तस्मात्फलसंवादेनेत्यादिना** । तात्पर्यस्यास्फुटत्वादाह **एतदुक्तमिति** । **प्रमितमिति** । लिङ्गप्रमितावेव तात्पर्यं न तु लिङ्गकरणतायाम् । परामर्शकरणताया एव तर्कताण्डवे समर्थनात् । **तस्य चेति** । हेतोरित्यर्थः । **काकतालीयताया इति** । काकागमनसमय एव तालफलपतनं यथा तथा इत्यर्थः । उपमानाच्छ इति छप्रत्ययः । काकागमनतालफलपतनयोर्यथा यादृच्छिकत्वं तथात्वस्येह





शङ्कनादित्यर्थः । **कारणसामग्रीति** । कारणानां मेलनमित्यर्थः । **अयातयामत्वादिकं** वीर्यवत्त्वादिकमित्यर्थः । प्रवृत्तिसामर्थ्येनेतीतिशब्दस्यैतदुक्तं भवतीति पूर्वेणान्वयः ।

**यादु०— व्यभिचारस्य बहुलमुपलम्भेनेति** । एतत्स्मृतिविहितसाधनानुष्ठानवतामपि तत्फलाभावस्य बहुलमुपलम्भेनेत्यर्थः । ननु फलस्यापि क्वचिदवधारणेनोक्तलिङ्गावधारणमपि किन्न स्यादित्यत आह **तदवधारण इति** । क्वचित्साधनानुष्ठानेन फलावधारण इत्यर्थः । **निषेकादीति** । गर्भाधानादीत्यर्थः । **अयातयामत्त्वम्** अगतवीर्यत्वम् । आदिपदेनोचितस्वरवर्णाद्युपेतत्वं ग्राह्यम् । **अन्यनिमित्त एवेति** । पूर्वादृष्टनिमित्त एवेत्यर्थः । यद्वा स्मृतिकर्तुर्गुडजिह्विकनिमित्त एवेत्यर्थः । **सन्दिग्धेनेति** । नियमगर्भेण प्रवृत्तिजनकत्वेनेत्यर्थः । ननु प्रामाण्यनिश्चयेनैवोत्तरसन्देहनिवृत्तिर्भविष्यतीत्यत आह **प्रामाण्यसिद्ध्युत्तरेति** । प्रामाण्यसिद्धौ व्यभिचारस्य वैगुण्यादिनिमित्तताकल्पनया नियमगर्भसमर्थप्रवृत्तिजनकत्वनिश्चयः । तन्निश्चये च तेन प्रामाण्यनिश्चय इतीतरेतराश्रयत्वं स्यादित्यर्थः ।

**वं०प०— अन्यथा** व्यभिचारस्य वैगुण्यनिबन्धनताऽनङ्गीकारे । ननु पञ्चरात्रादिवैदिकग्रन्थोक्तानुष्ठाने वैदिकोक्तस्येति वक्तव्यं वेदोक्तस्येति कथमुक्तमित्यत आह **वैदिकेति** । **तस्य** हेतोः । **तदवधारणे** फलविसंवादेन लिङ्गावधारणे । **शङ्कनात्** फलसंवादस्येति शेषः । **निश्चय इति** । एतावद्वक्तव्यमित्यन्वयः । **सामग्री** साकल्यम् । द्रव्यस्य शुचित्वं नाम न्यायार्जितत्वम् । **सन्दिग्धेन** फलोपलम्भरूपेण लिङ्गेन । ननु न भविष्यति सन्देहः फलनियममेवाङ्गीकृत्य फलसंवादेन प्रामाण्यसिद्ध्यनन्तरं फलव्यभिचारस्य वैगुण्यनिमित्तताकल्पनसम्भवेनैककोटेर्निश्चितत्वादित्याशङ्क्य फलसंवादेन प्रामाण्यसिद्धौ तदन्यथाऽनुपपत्त्या व्यभिचारस्य वैगुण्यनिमित्तत्वं कल्पनीयम् । व्यभिचारस्य वैगुण्यादिनाऽन्यथासिद्धौ कल्पितायां फलनियमसम्भवेन फलसंवादेन प्रामाण्यसिद्धिरित्यन्योन्याश्रयः स्यादत एककोटिनिश्चायकाभावेन सन्देहः स्यादेवेति न सन्दिग्धेन फलसंवादेन प्रामाण्यानुमानं युक्तमित्याशयेनाह **प्रामाण्यसिद्धीत्यादिना** ।

**कं०रा०—** ननु पञ्चरात्राद्युक्तानुष्ठाने तदुक्तस्यैवाधिकारत्वात् कथं वेदोक्तस्याधिकारस्येत्युक्तमित्यत आह **वैदिकग्रन्थेति** । **तदनवधारणे चेति** । नियमानवधारणे च पञ्चरात्रादिविहितसाधनानुष्ठाने फलभावस्य काकतालीयत्वशङ्कनेन तत्फलसाधनत्वबोधकपञ्चरात्रादिप्रामाण्यनिश्चयायोगादिति भावः । **इतरेतराश्रयत्वमिति** । पञ्चरात्रादिप्रामाण्यसिद्धौ फलव्यभिचारस्याधिकारादिवैगुण्यनिमित्तत्वसिद्धिः तत्सिद्धौ च पञ्चरात्रादिविहितसाधनानुष्ठानवद्भिः तत्फलस्य नियमेन प्राप्तेरिति हेतुसिद्ध्या पञ्चरात्रादिप्रामाण्यसिद्धिरिति इतरेतराश्रयत्वमित्यर्थः । यद्वा पञ्चरात्रादिप्रामाण्यसिद्धौ काचित्कफलव्यभिचारस्य अधिकारादिवैगुण्यनिमित्तत्वकल्पनया उक्तहेतुसिद्धिः तत्सिद्धौ च पञ्चरात्रादिप्रामाण्यसिद्धिः इति इतरेतराश्रयत्वमित्यर्थः ।

**श्रीनिधि०— तदवधारणे चेति** । क्वचित् तद्विहितसाधनानुष्ठानेन फलोपलम्भ इत्यर्थः । तदवधारणे कर्तव्ये सतीति वा शेषः । **कारणसामग्री** कारणपौष्कल्यम् ।





**शे०वा०— प्रामाण्यादिसाधनमिति** । पञ्चरात्रादिस्मृतीनामिति वर्तते । **सुशकमेवेति** । तथा च युक्तं मदीयं फलसंवादेन पाशुपतादिस्मृतिप्रामाण्यसाधनं व्यभिचारस्य कर्तृकरणादिवैगुण्यनिबन्धनत्वकल्पनं चेति प्रतिबन्दीग्रहण एव शङ्कितुस्तात्पर्यमिति द्रष्टव्यम् । सुहृद्भावेनेति तु गुडजिह्विकामात्रम् । अत एव 'यदपि प्रतिबन्दीमाददानस्य विवक्षितमि'त्युत्तरत्र वक्ष्यतीति द्रष्टव्यम् । यद्वा यथास्थितैवेयमुक्तिरन्यथा स्वातन्त्र्येण फलव्यभिचारेण अप्रामाण्यशङ्काया उत्तराधिकरणे निराकरिष्यमाणत्वेन व्यभिचारस्यान्यथासिद्धेरत्राव्युत्पादनीयत्वात् प्रतिबन्द्याश्च मोचितत्वात् उक्तशङ्कानुदयादिति द्रष्टव्यम् । ननु पञ्चरात्रादिस्मृतीनां युक्तिमूलत्वेन प्रामाण्यस्य शङ्कितत्वात् तदभावप्रतिपादनाय स्मार्तकर्मानुष्ठाने स्मृत्युक्ताधिकारस्यैव दुर्निरूपत्वस्य वक्तव्यतया वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमसङ्गतमित्यतो वेदोक्ताधिकारातिरिक्तस्य स्मृत्युक्ताधिकारस्यैवाभावात् स्मार्तकर्मानुष्ठानेऽपि वेदोक्त एवाधिकार इति ज्ञापयितुं वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमित्याह **वैदिकेति** । **निषेकादीति** । गर्भाधानादीत्यर्थः । **उपलक्षणमिति** । अत एव 'अशक्यसाधनं चोक्त्वा' इत्युत्तरत्र वक्ष्यतीति भावः । ननु वेदोक्तस्याधिकारस्य वेदेनैव निरूपणात् कथं दुर्निरूपत्वमित्यत आह **दुर्निरूपत्वमिति** । ननु समर्थप्रवृत्तिजनकत्वेनैव पञ्चरात्रादेः प्रामाण्यानुमानसम्भवात् किमिति वेदमूलकत्वाश्रयणमिति शङ्कायां, मूले वेदोक्ताधिकारस्य दुर्निरूपत्वेन फलनियमो व्यभिचारो वा न ज्ञातुं शक्यत इत्युक्तम् । तदयुक्तम् । तावताऽपि समर्थप्रवृत्तिजनकत्वेन प्रामाण्यानुमाने दोषानभिधानेन तस्यादुष्टत्वप्रसङ्गात् । कथं च वेदोक्ताधिकारदुर्निरूपत्वस्य फलनियमव्यभिचारयोरनवधारणप्रयोजकत्वम् । के चात्र वेदोक्ताधिकाराः । कथं च तेषां दुर्निरूपत्वमित्यत आह **एतदुक्तं भवतीति** । **प्रमितं खल्विति** । अनेन 'फलस्य नियमो व्यभिचारो वा ज्ञातुं न शक्यते' इत्यंशेन मूले समर्थप्रवृत्तिजनकत्वकथनेन कथमुक्तलिङ्गस्यानवधारणोक्तिलाभ इत्यत आह **तस्य चेति** । **व्यभिचारस्येति** । एतत्स्मृतिविहितसाधनानुष्ठानवतामपि तत्फलाभावस्य बहुलमुपलम्भेनेत्यर्थः । कथं तर्हि साधनानुष्ठानेन क्वचित्फलोपलम्भ इत्यत आह **तदवधारणे चेति** । अत्र साधनानुष्ठानेन क्वाचित्कफलोपलम्भ एव तदवधारणपदेन विवक्षितः । अत एव वक्ष्यति 'क्वचित्फलोपलम्भस्तु काकतालीय' इत्यादि इति द्रष्टव्यम् । क्वचित्तदनवधारणे चेति पाठः । तत्र ननु लिङ्गस्य नियमगर्भत्वमेव कुत इत्यत आह **तदनवधारणे चेति** । लिङ्गस्य नियमाघटितत्व इत्यर्थ इति योज्यम् । इदानीं वेदोक्ताधिकारनिरूपणपूर्वकं तेषां दुर्निरूपतायाः फलनियमव्यभिचारयोरनवधारणप्रयोजकत्वमुपपादयितुमुपक्रमते **तत्रैतावद्वक्तव्यमित्यादिना** । **कारणसामग्रीति** । कारणपौष्कल्यमित्यर्थः । **अयातयामत्वम्** अगतवीर्यत्वम् । आदिपदेनोचितस्वरवर्णाद्युपेतत्वपरिग्रहः । **काकतालीय इति** । अत्र काकतालशब्दौ वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ तेन काकागमनमिव तालपतनमिव काकतालमिति इवार्थे 'समासाच्च तद्विषयादि'ति ज्ञापकात्सुप्सुपेति वा समासः । उभयत्रोपमेयदेवदत्तागमनं तदानीमेव दस्योरुपनिपातश्च । तेन देवदत्तस्य दस्योश्च समागमः काकतालसमागमसदृश इति फलति । ततश्च काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयादि'ति सूत्रेण 'इवे प्रतिकृतौ' इत्याधिकारिकस्थेन छप्रत्ययः । तथा च पतता तालेन काकवधस्येवोपनिपतता दस्युना देवदत्तवधः कृत इति तदर्थः । ततश्च काकागमनतालपतनसमागमरूपस्य तालकृतकाकवधरूपस्य चोपमानस्यानुपादानात् प्रत्यया-





र्थोपमायामुपमानलोपः । समासार्थोपमायां वाचनिकोपमानलोपः सर्वोऽप्ययं लोपः छप्रत्ययविधायकशास्त्रकृतः । ततश्च यद्यपि 'समासाच्च तद्विषयादि'ति सूत्रेणेवार्थविषयात्समासादपरस्मिन्निवार्थे छप्रत्ययेन निष्पादितः काकतालीयशब्द उपमाद्वयगर्भस्तथा च काकतालयोरिव यादृच्छिको दस्युदेवदत्तयोः समागम इत्येका समासार्थोपमा । तदानीमेव पतता तालेन काकस्येव दस्युना देवदत्तस्य वधः कृत इत्यन्या तद्धितार्थोपमा चेति यत्रोपमाद्वयं तत्रैवास्य शब्दस्य सम्पूर्णार्थता तथाऽपि यादृच्छिकसमागममात्रेऽप्यस्य प्रचुरः प्रयोगो दृश्यत इत्ययमपि प्रयोगो यादृच्छिकसमागममात्रविषय इति ध्येयम् । **अन्यनिमित्तक इति** । गुडजिह्विकानिमित्तक इत्यर्थः । **सन्दिग्धेनेति** । नियमगर्भप्रवृत्तिजनकत्वरूपलिङ्गेनेति शेषः । ननु प्रामाण्यनिश्चयेनैवोक्तसन्देहनिवृत्तिद्वारा नियमगर्भसमर्थप्रवृत्तिजनकत्वरूपलिङ्गनिश्चयसम्भवात् कथं सन्दिग्धत्वमित्यत आह **प्रामाण्यसिद्ध्युत्तरकालं त्विति** । **इतरेतराश्रयत्वमिति** । प्रामाण्यसिद्धौ व्यभिचारस्य वैगुण्यादिनिमित्तताकल्पनया नियमगर्भसमर्थप्रवृत्तिजनकत्वरूपलिङ्गनिश्चयः तन्निश्चये च निश्चितेन तेन प्रामाण्यनिश्चयः इतीतरेतराश्रयत्वमित्यर्थः । वेदसंवादेन तु प्रामाण्यावधारणे नायं दोषः । फलव्यभिचारस्यान्यनिमित्तताकल्पनायाः प्रामाण्यनिश्चयाधीनत्वेऽपि प्रामाण्यनिश्चयस्यान्यनिमित्तताकल्पनाधीनत्वाभावादित्याशयेनाह **वेदसंवादेन त्विति** ।

**वा०र०—** ननु च पञ्चरात्रादीत्यादिसुहृद्भावेन पृच्छन्तं प्रति इत्यतः ग्रन्थतात्पर्यं अन्यथाप्रतीतिनिरासाय आह **तथा च युक्तं मदीयमिति** । तथा सति सुहृद्भावेनेत्यस्यासङ्गतिप्रसङ्गः इत्यत आह **सुहृदिति** । वक्ष्यमाणग्रन्थानुसारेण प्रतिबन्दीपरत्वं स्पष्टं चेत्याह **अत एवेति** । अयमत्राशयः । प्राक् फलव्यभिचारेण पाशुपतादिस्मृतेः अप्रामाण्याङ्गीकारे तद्व्यभिचारेणैव पञ्चरात्रादिस्मृतेरप्यप्रामाण्यं स्यात् इति प्रतिबन्द्याशङ्कायाः त्वया फलसंवादेन प्रामाण्यस्याङ्गीकृतत्ववत् मया तस्याङ्गीकृतत्वाभावेन तद्व्यभिचारेणाप्रामाण्यस्य स्मृतिषु अप्रसङ्गात् इति परिहृतं 'न च तत् युक्तिमूलता' इत्यनुव्याख्यानेन । न चैव तावता प्रतिबन्दीमोचनं समाप्तम् । पूर्वपक्षिणा प्रामाण्यावधारणस्य युक्तिमूलत्वं सिद्धान्तिनाप्यङ्गीकारयित्वा स्वाभिलषितं च प्रतिबन्दीफलं सूचयितुं सिद्धान्तिनैव तदङ्गीकारयित्वा च प्रतिबन्द्याऽपरिहार्यत्वे शङ्किते वैषम्यान्तरप्रतिपादनेन तत्परिहाराय वेदोक्तस्येत्यादेः अनुव्याख्यानस्य प्रवृत्तत्वात् । अतः सुहृद्भावेनेत्येतत् अन्यथैव योज्यम् । यदपीति वक्ष्यमाणग्रन्थेऽपि अत्राशङ्कितफलस्य दूषणेनास्य तावत्पर्यन्तमेव तात्पर्यं वाच्यमिति । अत्र तात्पर्य इत्यनन्तरमिति द्रष्टव्यम् इत्येतत् अधिकं लेखकागतम् । वक्ष्यतीति द्रष्टव्यं इत्येतत्पर्यन्तत्वात् अस्य ग्रन्थस्य पूर्वेणेति द्रष्टव्यमित्यनेन कृत्याभावादिति बोध्यम् । सुहृज्ज्ञानेनेतिपदस्वारस्यमात्रं आश्रित्य प्रकारान्तरमाह **यद्वेति** । अत्र यद्वेति अनास्थासूचनाय । वस्तुतः पूर्वोक्तमेव व्याख्यानं युक्तम् । न च यद्वेति पक्षोक्तदोषावकाशः । कर्तृकरणादिवैगुण्यकल्पनेन फलव्यभिचारान्यथासिद्धे उत्तराधिकरणप्रतिपाद्यायाः उपजीवनेन पूर्वपक्षिणा अत्राशङ्केऽपि इह तदन्यथासिद्धिप्रतिपादनाभावात् । न च तत् युक्तिमूलतेति प्रतिबन्दीपरिहारकानुव्याख्यानोक्तस्यैव समर्थनेन प्रतिबन्दीमोचनस्यासमाप्तत्वाच्च । अत एव यदपीति वक्ष्यमाणग्रन्थव्याख्यावसरेऽप्यनेन प्राचीना सुहृद्भावेन पृच्छन्तं इत्युक्तिः गुडजिह्विकामात्रमित्युक्तं भवतीति पूर्वव्याख्यानमेव साधकतया वक्ष्यतीति विद्वद्भिः





परिभावनीयम् । **इत्याहेति** । इत्याशयेनाहेत्यर्थः । **लिङ्गस्येति** । समर्थप्रवृत्तीत्युक्तलिङ्गस्येत्यर्थः । ननु सामग्र्याः कारणत्वाव्यभिचारात् कारणत्वं सामग्रीविशेषणं न युक्तम् । कारणसाकल्यस्यैव प्रतिपादनीयतया सामग्री-पदप्रयोगायोग एवेत्यतो जिज्ञासाधिकरणीयपूर्वपक्षे कारणसामग्रीसद्भावात् इत्येतत् मूलोक्तिं घटयितुं समग्रस्य भावः सामग्री सामग्रीसाकल्यमित्यर्थः । औचितीत्यादिवत् ब्राह्मणादित्वात् ष्यञ् षित्वात् ङीषिति प्रतिपादित-रीत्या उपपादनं ज्ञेयं इत्याशयेन तात्पर्यार्थमाह **कारणपौष्कल्येत्यर्थ इति** । औचितीत्यादिदृष्टान्तदार्ष्टान्तिक-उपपादनं चोक्तटीकाव्याख्यावसरे प्रागेवास्माभिः कृतं, तत एव प्रतिपत्तव्यम् । कारणपौष्कल्ये इत्येव पाठः स्वरस एव । पौष्कल्यं इति पाठस्तु बुद्ध्या विविच्य सामग्रीपदव्याख्यानाशयेनेति ज्ञेयम् । अत्र प्रकरणे मध्यदीपिकान्यायेन काकतालीयशब्दव्याख्यानमध्ये इति न दोषः । **वृत्तिविषय इति** । समासरूपवृत्तिविषये-त्यर्थः । अनेन केवलयोः काकतालशब्दयोः काकतालरूप एवार्थ इति ध्वनितम् । एतदभिप्रायेणैव कैयटेऽपि वृत्तिविषय इत्युक्तमिति ज्ञेयम् । **ज्ञापकादिति** । इवार्थविषयात् समासात् इत्युक्त्या लक्षणान्तराभावेऽपि अनेनैव ज्ञापकेन समाससिद्धिरिति भावः । एवं ज्ञापनेन समासस्य छप्रत्ययविषयत्वमेवेति कैयटादयः । तत्रैवोक्तं समासविधायकमप्याह **सुप् सुपेति वेति** । सह सुपेत्यत्र सहेति योगविभागस्याङ्गीकारेण तस्य सुबामन्त्रिते इत्यतोऽनुवर्तमान सुबित्येतत्सम्बन्धे सूत्रवाक्यं सुप्सुपेति फलितम् । तेन समास इत्यर्थः । **उभयत्रेति** । काकागमनमिव तालपतनमिवेत्युभयोरित्यर्थः । साक्षात्कृतब्रह्मणो सद्यःशरीरादिपाते वातपुत्रीयाः पौरुषेयाः ब्रह्मोपदेशाः प्रसज्येरन् इत्येतत् जिज्ञासाधिकरणीयमूलव्याख्यानरूप अत्र यद्यपि समासाच्च तद्विषयात् इत्यादि-टीकाव्याख्यानावसरेऽधिकमुपपादनमस्माभिः कृतमस्ति । तत्प्रकारेणाधिकं प्रमेयं ज्ञेयम् । तत्रत्यटीकानु-सारेणैवाशङ्क्य समाधत्ते **यद्यपि इत्यादिना ध्येयमित्यन्तेन** । अत एव काकतालीयेति व्याप्तिरपरिहार्येति उत्तराधिकरणमूले उभयत्रापि उपमानोपमेयप्रदर्शनमिति ज्ञेयम् । समासप्रत्ययार्थ उपमयोः उपमानलोपः स्पष्टी-कर्तव्योऽस्ति । **गुडजिह्वानिमित्तक इत्यर्थ इति** । स्मृतिकारेण गुडजिह्विकान्यायेन काचित् संवाद्यर्थप्रतिपादिका स्मृतिः प्रणीता तन्निमित्तक इत्यर्थः ।

**स०व्र०**— ननु पञ्चरात्रादिस्मृतीनाम् आप्तिमूलत्वेन प्रामाण्यस्य शङ्कितत्वात् तदभावप्रतिपादनाय स्मार्तकर्मानुष्ठाने स्मृत्युक्ताधिकारस्यैव दुर्निरूपत्वस्यैव वक्तव्यतया वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमसङ्गत-मित्यतो वेदोक्ताधिकारातिरिक्तस्य स्मृत्युक्ताधिकारस्याभावात् स्मार्तकर्मानुष्ठानेऽपि वेदोक्त एवाधिकार इति द्योतयितुं वेदोक्ताधिकारस्य दुर्निरूपत्ववर्णनमित्याह **वैदिकग्रन्थोपदिष्टानुष्ठान इति** । **हिशब्दो यस्मादित्यर्थे इति** । ननु हिशब्दो हेतावित्यनुक्त्वा यस्मादित्यर्थ इति किमर्थमुक्त इति चेन्न । हेतुत्वबोधनाय पञ्चम्या उद्देश्य-समर्पणार्थयच्छब्दस्य च सार्थकत्वादिति भावः ।

ननु व्यभिचारस्योपलम्भात् समर्थप्रवृत्तिजनकत्वानवधारणं चेत् तर्हि फलसंवाददर्शनेन तदवधारणमपि स्यात् तत्राह **तदवधारणे चेति** । फलसंवादेन लिङ्गावधारणे करिष्यमाणे चेत्यर्थः । तन्न सम्भवतीति शेषः । फलोपलब्ध्या लिङ्गावधारणं नोपपन्नम् । फलोपलब्धेः काकतालीयतायाः शङ्कनेन तदसम्भवादिति भावः । क्वचित्





तदनवधारणे इति पाठः । तत्र पूर्ववाक्यस्यैकवाक्यतया एवं योजना । तदनवधारणे नियमानवधारणे । अत एव तस्य हेत्वविषयत्वे चेत्यर्थः । किं तु फलोपलम्भमात्रस्यैव हेतुत्वे इत्यपि । तथा च हेतोरप्रयोजकत्वमिति भावः । **कारणसामग्री** कारणसाकल्यमित्यर्थः । **विशुद्धाभिसन्ध्यादिमतेति** । विशुद्धाभिप्रायादिमतेत्यर्थः । **अन्यनिमित्त इति** । गुडजिह्विकानिमित्त इत्यर्थः । ननु प्रामाण्यसिद्ध्यनन्तरं फलव्यभिचारस्य कर्त्रादि-वैगुण्यनिमित्तत्वं प्रकल्प्य फलसंवादेन प्रामाण्यनिश्चयोपपत्तिरित्यत आह **प्रामाण्यसिद्ध्युत्तरकालमिति** । **इतरेतराश्रयत्वम्** फलसंवादेन प्रामाण्ये निश्चिते फलव्यभिचारस्य कर्त्रादिवैगुण्यनिमित्तत्वसिद्धिः । तत्सिद्धौ च बाधकाभावेन फलसंवादेन प्रामाण्यनिश्चय इत्यन्योन्याश्रयत्वमित्यर्थः ।

**विठ्ठल०**— ननु पञ्चरात्राद्यनुष्ठाने तदुक्तस्यैवाधिकारत्वात्कथं वेदोक्तस्येत्युक्तमित्यत आह **वैदिक-ग्रन्थेति** । **निषेको** गर्भाधानम् । **वेद**पदेन पञ्चरात्रादयो गृह्यत इति । 'पञ्चरात्रं च वेदाश्च वेदा इत्येव शब्दिताः' इति भाष्योक्तेरिति भावः । **प्रामाण्या**दीत्यादिपदेन आप्तिमूलग्रहणं फलसंवादेनापि प्रामाण्यादिसाधनं सुकर-मेवेत्यस्य किमुत्तरमित्यत आह । प्रामाण्यादिसाधकहेतोरज्ञानसिद्धत्वादिदूषणं वक्तुमाह **एतदुक्तं भवतीति** । नात्र लिङ्गप्रमितिं सम्भवतीत्याह **अत्र चेति** । **तस्येति** । हेतोरित्यर्थः । **तदवधारण इति** । क्वचित्साधना-नुष्ठाने फलावधारणे फलस्य काकतालीयतायाः शङ्कनाद्यर्थः । **तदनवधारण इति** पाठे तु नियमावधारणे क्वचित्फलाभावस्य काकतालीयतेत्यर्थः । काकागमनसमय एव तालपतनं यथेत्यर्थे उपमानाच्छ इति छप्रत्यये छस्येयादेशे काकागमनतालपतनयोः यथा यादृच्छकत्वं तथात्वस्य शङ्कनादिति भावः । व्यभिचारस्य कर्तरि वैगुण्यनिमित्तत्वमभ्युपेयमित्युक्तमाशङ्क्य निराह **तत्रैतावद्वक्तव्यमिति** । **अयातयामत्वादिकमिति** । अगत-रसत्वम् । आदिपदेन उचितस्वराद्युपेतत्वमित्यर्थः । **इतरेतराश्रयत्वमिति** । प्रामाण्यसिद्धौ व्यभिचारस्य वैगुण्यनिमित्तत्वसिद्धिः । तत्सिद्धौ च नियमेन फलसंवादित्वादिति हेतुसिद्ध्या पञ्चरात्रादिप्रामाण्यसिद्धिरि-त्यन्योन्याश्रयत्वमित्यर्थः ।

**चषकः**— **व्यभिचारस्य बहुलमुपलम्भेनेति** । पञ्चरात्रस्मृतिविहितसाधनानुष्ठानवतामपि तत्फला-भावस्य बहुलमुपलम्भेनेत्यर्थः । **तदवधारणे चेति** । क्वाचित्कसाधनानुष्ठाननियन्त्रितफलावधारण इत्यर्थः । **निषेकादीति** । गर्भाधानादीत्यर्थः । **अयातयामत्वम्** अगतवीर्यत्वम् । **सन्दिग्धेनेति** । नियमघटितप्रवृत्ति-जनकत्वेनेत्यर्थः । प्रामाण्यसिद्ध्यधीनव्यभिचारधर्मिकवैगुण्यादिनिमित्तकताकल्पनानिबन्धनं नियमघटितसमर्थ-प्रवृत्तिजनकत्वावधारणं तन्नियन्त्रितश्च प्रामाण्यनिश्चय इतीतरेतराश्रयत्वं प्रसज्ज्येतेत्यर्थः ।

**॥ इति वेदोक्तस्याधिकारस्य दुर्निरूपत्वतः**
**वेदोक्तसाधनानुष्ठानस्य फलनियमो व्यभिचारो वेति ज्ञातुमशक्यम् ॥**

* * *





**॥ अथ अन्यागमोक्ताधिकारस्य सौलभ्यात् व्यभिचारज्ञानशक्यता ॥**
**॥ अथ शैवाद्यागमेषु अधिकारसौलभ्यकथनं, वेदोक्ताधिकारस्य च सर्वमानुषदुर्लभता ॥**

२६ **सु०—** एवं न्यायसाम्याभावेन प्रतिबन्दी मोचिता । यदपि प्रतिबन्दीमाददानस्य विवक्षितम्, 'यथा च पञ्चरात्रादिप्रामाण्यमभिलषता फलव्यभिचारस्याधिकारादिवैकल्य-निबन्धनता कल्प्या, तथाऽहमपि पाशुपतादिस्मृतिषु कल्पयिष्यामी'ति; तदयुक्तं वैषम्या-दित्याह **अधिकारो हीति** ।

**अनु०—** अधिकारो हि सुलभः कथितोऽन्यागमेष्वलम् ।
वेदोक्तो ह्यधिकारस्तु दुर्लभस्सर्वमानुषैः ।

अधिकारग्रहणं साधनस्याप्युपलक्षणम् । **अन्यागमेषु** पाशुपतादिषु **कथितोऽधि-कारोऽलं सुलभः** अनायाससाध्यः । कुतः । यस्मादन्यागमेषु तथा कथितः । तथा च तद्वैकल्यकल्पनमसम्भावनाप्रतिहतम् ।

**वेदोक्तस्त्वधिकारः** विशुद्धसन्तानजत्वादिः **सर्वमानुषैर्दुर्लभ** इति प्रसिद्धमेव । अतस्तद्वैकल्यकल्पनं सम्भावितमेवेति ।

**परि०—** अन्यागमेष्विति विषयसप्तमीमुपेत्य तावद्योजनामाह **अन्यागमेषु पाशुपतादि-ष्विति** । अधिकरणसप्तमीमभ्युपेत्य योजनान्तरमाह **यस्मादित्यादिना** । **तथा कथितः** अधिकारः सुलभः कथित इत्यर्थः । तुशब्दस्य व्युत्क्रमेणान्वयमुपेत्य वेदोक्त इत्यादेरर्थमाह **वेदोक्तस्त्विति** । हिशब्दार्थः प्रसिद्धमेवेति ।

**वं०प०—** **न्यायसाम्येति** । पाशुपतादिस्मृतीनां प्रामाण्यावधारणस्य यथा फलसंवादादियुक्त्यधीनत्वं तथा न पञ्चरात्रादिस्मृतिप्रामाण्यावधारणस्य तदधीनत्वम् । किन्नाम वेदसंवादाधीनत्वमेवेति न न्यायसाम्य-मित्यर्थः । **तथा कथितः** सुलभत्वेन कथित इत्यर्थः ।

**शे०वा०—** **एवं न्यायसाम्याभावेनेति** । फलविसंवादेन पाशुपतादिस्मृतीनामप्रामाण्ये तर्हि तत एव पाञ्चरात्रादिस्मृतीनामप्यप्रामाण्यं स्यादिति प्रतिबन्दी परेण गृहीता सा न्यायसाम्याभावोपपादनेन परिहृतेत्यर्थः । **यदपि प्रतिबन्दीमाददानस्य विवक्षितमिति** । अनेन प्राचीनसुहृद्भावेन पृच्छन्तमित्युक्तिर्गुडजिह्विकामात्रमित्युक्तं भवति । अभ्युच्चयेनैतद्विवक्षितनिराकरणं प्रतिबन्द्या मोचितत्वेन तन्मूलविवक्षाया अप्रयोजकत्वादित्यप्याहुः ।





**वा०र०— गुडजिह्विकामात्रमित्युक्तं भवतीति** । एतच्च प्रागुक्तप्रथमपक्षानभिप्रायेण । द्वितीयपक्षस्तु प्रागुक्तरीत्या न सम्मत एवेति ध्येयम् । आह इत्यस्वरसोद्भावनम् । तद्बीजं तु प्रतिबन्द्या मोचितत्वेऽपि तन्मूलकपरविवक्षितस्यापि मोचनार्थं प्रवृत्तेऽत्र ग्रन्थे प्रतिबन्दी अनुपपन्ना एवं यच्च तदवष्टम्भेनोच्यते तच्चानुपपन्नमिति प्रतिपादनेन अप्रयोजकत्वकथनायोगात् इति ।

**स०व्र०— एवं न्यायसाम्याभावेन प्रतिबन्दी मोचितेति** । प्रवृत्तिसामर्थ्येनाप्तिमूलत्वे फलविसंवादेन आप्तिमूलत्वाभावश्च स्यादित्यस्माभिरुक्ते तथा सति फलविसंवादात् पञ्चरात्रादीनामप्यप्रामाण्यं स्यादिति प्रतिबन्दी अभिहिता । सा उक्तन्यायेन साम्याभावप्रतिपादनेन परिहृतेत्यर्थः ।

**विठ्ठल०—** अन्यागमेष्विति विषयसप्तमीत्यभ्युपेत्य तावद्योजनामाह **अन्यागमेषु पाशुपतादिष्विति** । पाशुपतादिग्रन्थोपदिष्टानुष्ठानविषये कथितोऽधिकार इति यावत् । अधिकरणसप्तमीमभ्युपेत्य योजनान्तरमाह **यस्मादित्यादिना** । कथाकथितमधिकारः सुलभः कमित्यतः तुशब्दस्य व्युत्क्रमेणान्वयमभ्युपेत्य वेदोक्त इत्यादेरर्थमाह **वेदोक्तस्त्विति** । **हिशब्दार्थः** प्रसिद्धमेवेति ।

**॥ इति शैवाद्यागमेषु अधिकारसौलभ्यकथनं, वेदोक्ताधिकारस्य च सर्वमानुषदुर्लभता ॥**

* * *

**॥ अथ अन्यागमोक्ताधिकारसौलभ्यस्य लेशतो दर्शनम् ॥**

२७ **सु०—** ननु कथमन्यागमेष्वधिकारः साधनं च सुलभमुक्तमित्यतो लेशेन दर्शयति **अन्यागमेष्विति** ।

**अनु०— अन्यागमेषु विप्रत्वमपि चण्डालजन्मनाम् ।**
**मण्डलान्तःप्रवेशेन क्रमशः प्रतिपाद्यते ॥**

यद्भवान्तरेण महता तपसा विना वा(न)ऽलभ्यं तदपीत्यर्थः । यतित्वादिकमपीति वा । **चण्डालजन्मनामपि** किमु क्षत्रियादीनामिति वा ।

विप्रा एव ये कर्मणा चण्डालास्तेषां कथञ्चित्प्रत्यापत्तिर्वैदिकैरप्यङ्गीक्रियत इत्यतः **चण्डालजन्मनामित्युक्तम्** । चण्डालेषु जन्म येषामिति वा । चण्डालसम्बन्धित्वाच्चण्डालं जन्म येषामिति वा तथोक्ताः ।





**क्रमशो मण्डलान्तःप्रवेशेन** इत्यनेनेदमुच्यते । 'यो यावज्जातिव्यवहितः तस्य तावन्ति मण्डलानि पूज्यानि (कल्प्यानि) । तत्र यद्यन्मण्डलं प्रविशति तत्तज्जातीयो भवति । चरममण्डलप्रवेशे तु विप्रः सम्पद्यत' इति **अन्यागमेषु प्रतिपाद्यत** इति सम्बन्धः ।

तथा चोक्तम् 'दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात् । कापालं व्रतमास्थाय यतिर्भवति मानवः' इति । एतदधिकारसौलभ्यमुदाहृतम् ।

एवं साधनसौलभ्यमपि द्रष्टव्यम् । यथाऽऽहुः कापालिकाः—

'मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः ।
भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति ।
कर्णिका रुचकं चैव कुण्डलं च शिखामणिः ।
भस्म यज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ।
आभिर्मुद्रितदेहस्तु न भूय इह जायते (कायभाक्) ॥' इत्यादि ।

तथा कालामुखा अपि—

'रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके ।
कपालं भस्मना स्नानं लकुटं (च कला)कलशार्चनम् ॥' इत्यादि ।

**परि०**— गाधिराजपुत्रस्य जन्मान्तरेण विनैव विप्रत्वस्य पुराणेषु श्रवणादाह **महता तपसा विना वेति** । अलभ्यमिति पदच्छेदः । क्वचिन्न लभ्यमिति पाठः । **प्रत्यापत्तिः** । प्रतिप्रसवः । पुनर्विप्रत्वप्राप्तिरिति यावत् । **चण्डालेषु जन्मेति** । 'सप्तमी शौण्डैरि'त्यत्र योगविभागात् समास इति भावः ।

**गु०दी०**— **कर्णिका रुचकं चैव** इत्यत्र **कर्णिका** पद्मासनं **रुचकं** अयोमयकटकविशेषः । **लकुटं च कलार्चनम्** इत्यत्र **लकुटं** यष्टिविशेषः **कलार्चनं** लिङ्गपूजा ।

**यादु०**— **चण्डालसम्बन्धित्वादिति** । तथा चाणि वृद्ध्यभावश्छान्दसः । प्रत्ययान्तरं वा कल्पनीय-मिति भावः । **दीक्षा** पूर्वोक्ता । कापालं व्रतं तच्छास्त्रोदितं द्रष्टव्यम् । 'कपालं भस्मना स्नानमि'ति वक्ष्यमाणं





वा । परमुद्राप्रदर्शनार्थमाह **तथा कालामुखा अपीति** । **कर्णिका** कर्णभूषणविशेषः । **कर्णिका** योगासनमिति केचित् । **लकुटं** वक्रकाष्ठम् । कुण्डलं च कलार्चनमिति पाठे **कलार्चनं** लिङ्गपूजा ।

**वं०प०—** जन्मपदकृत्यमाह **विप्रा एवेत्यादिना** । व्यधिकरणबहुव्रीहिमङ्गीकृत्य व्याख्याय समानाधिकरणबहुव्रीहिमङ्गीकृत्यापि व्याख्याति **चण्डालसम्बन्धित्वादिति** । **कलशार्चनं** घटपूजा ।

**कं०रा०—** **भवान्तरेण** जन्मान्तरेण । **प्रत्यापत्तिरिति** । पुनर्विप्रत्वप्राप्तिरित्यर्थः । चण्डालेषु जन्म येषामिति व्यधिकरणबहुव्रीहावपरितुष्यन्नाह **चण्डालसम्बन्धित्वाच्चण्डालमिति** । चण्डालशब्दान्मत्वर्थीय-अच्प्रत्यये चण्डालपदं तत्सम्बन्धिपरमिति भावः । **दीक्षाप्रवेशमात्रेणेति** । शिवदीक्षामात्रेण मण्डलप्रवेशमात्रेणेत्यर्थः । सा पाशुपताद्युक्तिरिति भावे क्तप्रत्ययान्तेनोक्तशब्देन तच्छब्दस्य कर्मधारये सत्ययमर्थो लभ्यत इति भावः ।

**श्रीनिधि०—** **इत्यतः इति** । एवं कल्पनादित्यर्थः । व्यधिकरणबहुव्रीह्याश्रयणस्य अगतिकागतित्वात् आह **चण्डालसम्बन्धित्वादिति** । **दीक्षाप्रवेशमात्रेणेति** । दीक्षापूर्वकं मण्डलप्रवेशमात्रेणेत्यर्थः । **भगासनस्थं** योनिरूपासनस्थम् । **आत्मानं** शिवात्मानम् । पाणिपीठस्य योनिरूपत्वादिति । अविद्यामोहितधियो भ्रमन्तीति । परमुद्राविशारद इत्युक्तम् । तां मुद्रां दर्शयति **तथा कालामुखा अपीत्यादिना** ।

**शे०वा०—** साधनसौलभ्यस्याप्रदर्शितत्वाल्लेशेनेत्युक्तम् । विश्वामित्रादिसङ्ग्रहायाह **महता तपसेति** । **प्रत्यापत्तिरिति** । प्रायश्चित्तादिना ब्राह्मणत्वादेः पुनः प्राप्तिरित्यर्थः । **चण्डालसम्बन्धित्वादिति** । अत्र सम्बन्धार्थे विहितस्याणो लुक् द्रष्टव्यः । तेन चण्डालमिति साधु । अन्यथाऽऽदिवृद्धौ सत्यां चाण्डालमित्येव स्यादिति द्रष्टव्यम् । अणि वृद्ध्यभावश्छान्दस इत्यप्याहुः । **दीक्षाप्रवेशमात्रेणेति** । उक्तरीत्या चरममण्डलप्रवेशमात्रेणेत्यर्थः । **कर्णिका** कर्णभूषणविशेषः । योगानुशासनं वा । परमुद्रां दर्शयति **तथेति** । **लकुटं** चक्रकाष्ठम् । कुण्डलं च कलार्चनमित्यपि क्वचित्पाठः । तत्र कलाशब्दो लिङ्गपर इति द्रष्टव्यम् ।

**स०व्र०—** **चण्डालसम्बन्धित्वादिति** । तथा च सम्बन्धार्थकाण्प्रत्ययस्य लोपेन एवं व्युत्पत्तिकथनमिति भावः ।

**विठ्ठल०—** **भवान्तरेणेति** । वर्तमानसूत्रे द्विजन्म परित्यज्य जन्मान्तरेणेत्यर्थः । **महता तपसेति** । विश्वामित्रादीनां क्षत्रजात्युत्पन्नानां विप्रत्वस्य महत्तपोलभ्यत्वादिति भावः । **प्रत्यापत्तिः** पुनर्विप्रत्वप्राप्तिः । **चण्डालसम्बन्धित्वादिति** । चण्डालशब्दान्मत्वर्थीयाच्प्रत्यये चण्डालपदं तत्सम्बन्धिपरमिति भावः । **दीक्षाप्रवेशमात्रेणेति** । शिवदीक्षाप्रवेशमात्रेणेत्यर्थः । **परमुद्रेति** । षण्मुद्रापेक्षयान्यमुद्रेत्यर्थः । **भगासनस्थमात्मानं**





शिवं **कर्णिका** कर्णभूषणं कर्णोपरि जपाकुसुमादिस्थानमिति यावत् । पद्मासनमिति वा । **रुचकं** अयोमयकटकविशेष इत्याहुः । **लकुटं** यष्टिविशेषः । कुण्डलं च कलार्चनमिति पाठे **कलार्चनं** लिङ्गपूजा ।

**चषकः— चण्डालेषु जन्मेति** । सप्तमी शौण्डैरित्यत्र योगविभागात् समासस्याकरे व्यक्तत्वादिति भावः । **चण्डालसम्बन्धित्वादिति** । तथा चाणि वृद्ध्यभावश्छान्दसः प्रत्ययान्तरं वा कल्पनीयमिति स्थितम् ।

**॥ इति अन्यागमोक्ताधिकारसौलभ्यस्य लेशतो दर्शनम् ॥**

* * *

**॥ अथ अन्यागमानां तदुक्ताधिकारसौलभ्यदौर्लभ्यविसंवादात् फलव्यभिचाराच्च अप्रामाण्यम् ॥**

२८　**सु०— ननु यथाऽधिकारसाधनयोः सौलभ्यमुक्तमेवं तद्दौर्लभ्यमपि तत्रैवोक्तमिति चेत्तर्हि न केवलं फलविसंवादेन पाशुपतादीनामप्रामाण्यम्, किन्नाम परस्परविसंवादेनापीत्याह अधिकारमिति ।**

अनु०— अधिकारं दुरापाद्यमुक्त्वाऽतिसुलभं पुनः ।
अशक्यं साधनं चोक्त्वा सुशकं तत्फलाप्तये ।
उच्यतेऽतस्तदुक्तं हि व्यभिचारि फलेऽपि तु ।
कथं प्रमाणतां गच्छेत् ................ ॥

यस्मात् क्वचित् **अधिकारं दुरापाद्यमुक्त्वा** पुनरपि **सुलभं** ब्रवीति, **यस्माच्च तत्फलाप्तये** सम्पदादिफलाप्तये, **साधनमशक्यमुक्त्वा सुशकं चोच्यते** । **यस्माच्च तदुक्तं साधनं फलेऽपि** विषये **व्यभिचारि अतस्तदुक्तं** सा पाशुपताद्युक्तिः **कथं प्रमाणतां गच्छेन्न** कथमपीत्यर्थः ।

दुर्लभत्वोक्त्यनुरोधेन सौलभ्यवचनं प्ररोचनार्थं व्याख्यायताम्, तथा च फलविसंवादोऽप्यधिकारादिवैगुण्यनिमित्तो भविष्यति यथा पञ्चरात्रादाविति चेन्न, वैषम्यात् ।





**युक्तं हि पञ्चरात्रादिषु, तथा कल्पनात्, श्रुतिमूलत्वेन प्रामाण्यस्य निश्चिततया कल्पकस्य विद्यमानत्वात्; पाशुपतादौ तु तदभावेन विसंवादस्याप्रामाण्यनिबन्धनतोपपत्तौ कल्पकाभावात् ।**

**क्वचित्संवादस्तु काकतालीयो वा गुडजिह्विकानिमित्तो वा भविष्यति । तदिदमुक्तं तुशब्देन । तदुक्तं तु इति सम्बन्धः ।**

**तदेवं पाशुपतादीनाम् अपस्मृतित्वान्न तद्विरोधेनोक्तार्थासम्भवः शङ्कनीय इति स्थितम् ॥**

**परि०**— तदुक्तमिति कर्मणि निष्ठेति भावेनाह **यस्माच्च तदुक्तं साधनमिति** । भावे निष्ठेत्युपेत्यार्थान्तरमाह **तदुक्तं सा पाशुपताद्युक्तिरिति** । शङ्कते **दुर्लभत्वेति** । **तदुक्तं त्विति सम्बन्ध इति** । पाशुपताद्युक्तिस्त्वित्यर्थः ।

**वं०प०**— **तत्रैवोक्तं** तथा च भवन्मत इव अस्मन्मतेऽप्यधिकारस्य दुर्लभत्वात् फलव्यभिचारं वैगुण्यनिमित्तकमेव कल्पयिष्यतीति युक्तं फलसंवादेन पाशुपतादिस्मृतिप्रामाण्यानुमानमिति हृदयम् । पञ्चरात्र-पाशुपतस्मृत्योर्विशेषसूचकतुशब्दार्थमाह **दुर्लभत्वोक्तीत्यादिना** । **तदभावेन कल्पकाभावात्** । फलविसंवादस्य वैगुण्यनिमित्ततायां कल्पकस्य प्रामाण्यनिश्चयस्याभावादित्यर्थः ।

**कं०रा०**— **पाशुपतादौ त्विति** । पाशुपतादौ तु प्रामाण्यनिश्चयाभावेन फलव्यभिचारस्य परस्पर-विरोधस्य च अप्रामाण्यनिबन्धनत्वोपपत्तौ अधिकारादिवैगुण्यनिमित्तत्वे अधिकारादिसौलभ्यवचनस्य प्ररोचनार्थ-तया व्याख्याने कल्पकाभावादित्यर्थः ।

**श्रीनिधि०**— ननु कल्पकाभावादित्युक्तं फलविसंवादस्यैव कल्पकत्वादित्यत आह **विसंवादस्येति** । **अपस्मृतित्वात्** अप्रमाणस्मृतित्वात् ।

**शे०वा०**— व्यभिचारि फले त्विति तुशब्दव्यावर्त्यां शङ्कामुत्थापयति **दुर्लभत्वोक्त्यनुरोधेनेत्यादिना** । गुडजिह्विकानिमित्तो वेत्यत्र लोकव्यामोहनायेति शेषः ।

**स०व्र०**— **गुडजिह्विकानिमित्त इति** । गुडजिह्विकानिमित्तं प्रयोजनं यस्येति विग्रहः । गुडस्य आधेयत्वमिव जिह्वाया आधारत्वमिवेति गुडजिह्विका । उच्यत्वात् । (रुच्यर्थत्वम्) अनुमानेन गृह्यते । तत्प्रयोजकतेति भावः ।





**विठ्ठल०**— तदुक्तमिति कर्मणि निष्ठेति भावेनाह **यस्माच्च तदुक्तं साधनमिति** । भावे निष्ठामुपेत्य अर्थान्तरमाह । तदुक्तं समाधानमयुक्तमिति शङ्कते **दुर्लभत्वेति** । **तदुक्तं त्विति सम्बन्ध इति** । पाशुपता-द्युक्तिस्त्वित्यर्थः ।

**॥ इति अन्यागमानां तदुक्ताधिकारसौलभ्यदौर्लभ्यविसंवादात् फलव्यभिचाराच्च अप्रामाण्यम् ॥**

**॥ इति अन्यागमोक्ताधिकारस्य सौलभ्यात् व्यभिचारज्ञानशक्यता ॥**

**॥ इति पञ्चरात्रादिस्मृतेः निर्दोषवाक्यमूलत्वात् प्रामाण्यम्,**
**न तु समर्थप्रवृत्तिजनकत्वरूपयुक्तिमूलत्वात् ॥**

**॥ इति पञ्चरात्रादिस्मृतेः क्वचिद्व्यभिचारेऽपि मानता न हीयते न्यायसाम्याभावात् ॥**

## ॥ इति स्मृत्यधिकरणम् ॥

**॥ २-१-१ ॥**





## ॥ न विलक्षणत्वाधिकरणम् ॥

## ॥ २-१-२ ॥

### ब्र०सू०— ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥

॥ अथ वेदादीनां प्रामाण्यात्, तदभावमूलकसमन्वयभङ्गशङ्कानिरसनम् ॥

॥ अथ वेदादिप्रामाण्यदौर्लभ्यात् श्रुत्यादिसमन्वयाभावशङ्का ॥

॥ तथा नित्यत्व(रूपापौरुषेयत्व)ात्पुरुषोद्भवसर्वदोषैरुज्झितत्वाच्च बोधकत्वेन सम्प्रतिपन्नानां वेदादीनां स्वत एव प्रामाण्यसिद्ध्या तच्छङ्कानिरसनश्च ॥

२९ सु०— परिहृतः स्मृतिविरोधः । सम्प्रति युक्तिविरोधः परिह्रियते ।

तथा हि । "श्रुत्यादिसमन्वयेन खलु जगज्जन्मादिकारणत्वं ब्रह्मणो निरूपितम् । तत्र श्रुतेरेव प्रामाण्यं तावद् दुर्लभम् ।

यद्धि फलव्यभिचारि तदप्रमाणं दृष्टम्, यथा विप्रलम्भवाक्यम् । फलव्यभिचारिणी च श्रुतिः, पुत्रकामेष्ट्याद्यनुष्ठानेऽपि कदाचित्पुत्रजन्माद्यनुपलब्धेः । अन्यथा फलानुपलब्ध्योक्तं पाशुपताद्यप्रामाण्यमपि न स्यात् । एकदेशे चाप्रामाण्ये तन्न्यायेनैकदेशान्तरस्याप्यप्रामाण्यानुमानं सुलभमेव ।

किञ्च यदबुद्धिपूर्वकं तदप्रमाणं यथा पिपीलिकालिपिः । अबुद्धिपूर्वकश्च वेदोऽपौरुषेयत्वाङ्गीकारात् । पौरुषेयत्वे च मूलप्रमाणशून्यत्वादप्रमाणमेव, विप्रलम्भकवाक्यवत् ।

अपि चाप्ताप्रणीतवाक्यत्वादुन्मत्तवाक्यवदप्रामाण्यं वेदस्यानुमेयम् ।

यदा वेदस्य ई(एता)दृशी दशा तदा का वा स्मृतीतिहासपुराणानां फलव्यभिचारादि(दोष)झर्झराणां प्रामाण्यस्य ।

तथा च वेदादिसमन्वयेन न जगज्जन्मादिकारणत्वं ब्रह्मणः सिद्ध्यती"त्येवं प्राप्ते तत्प्रतिविधानार्थस्य 'न विलक्षणत्वादि'ति सूत्रस्य तात्पर्यमाह **नित्यत्वादिति** ।





**अनु०—** नित्यत्वात् पुरुषोद्भवैः ।
उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेत् ॥

वेदवाक्यमिति शेषः ।

अयमर्थः । बोधकत्वेन खलु करणानां प्रामाण्यं, दोषात्तु कदाचिदपनीयते । वेदवाक्यं च बोधकत्वेन वादिप्रतिवादिसम्मतम् । अन्यथा फलव्यभिचारोऽपि तत्र(स्य) न स्यात् । वाक्ये च प्रमाणस्यापवादका दोषा अबोधकत्वविपरीतबोधकत्वादयः सर्वेऽपि वक्तृदोषनिबन्धना एव, अन्वयव्यतिरेकाभ्यां तदवगमात् । वेदवाक्यं च **नित्यत्वाद्** अपौरुषेयत्वात् पुरुषदोषनिबन्धनैः **सर्वदोषैः** वर्जितं स्वत एव प्रामाण्यमाप्नोति । प्रामाण्ये च निश्चिते सति फलव्यभिचारस्य सामग्रीवैकल्यं वा प्रतिबन्धकसद्भावो वा कारणं कल्पयिष्यते, अन्यथासिद्धानन्यथासिद्धयोरनन्यथासिद्धस्य बलवत्त्वादिति ।

अत्रैते प्रयोगा भवन्ति । वेदः प्रमाणं बोधकत्वे सति विपरीताबोधकत्वात् सम्प्रतिपन्नवत् । विमतो विपरीतबोधको न भवति अनाप्तप्रणीतवाक्यत्वात् सम्प्रतिपन्नवाक्यवत् । विमतो अनाप्तप्रणीतो न भवति अपौरुषेयत्वात् व्योमवत् । विमतः फलव्यभिचारो वैकल्यादिनिबन्धनो भव(वितुमर्ह)ति प्रमाणसिद्धफलव्यभिचारत्वात् चरकाद्युक्तफलव्यभिचारवदिति ।

**परि०—** भाष्यमवतारयितुमुपोद्घातमाह **परिहृतः स्मृतिविरोध इत्यादिना** । नित्यत्वादित्यादित्रिपादीव्यावर्त्यार्थं विवृण्वन्वेदाप्रामाण्यवादिनो बौद्धत्वात् तन्मतरीत्योदाहरणोपनयरूपावयवद्वयात्मकप्रयोगमाह **यद्धीति** । पक्षधर्मतां व्यनक्ति **पुत्रेति** । हेतोरप्रयोजकत्वनिरासाय विपक्षे बाधकमाह **अन्यथेति** । तावता न सर्वाप्रामाण्यसिद्धिरित्यत आह **एकदेशे चेति** । पुत्रकामेष्ट्यादिबोधकवाक्ये चेत्यर्थः । **सुलभमिति** । ज्योतिष्टोमादिबोधकवाक्यम् अप्रमाणं वेदत्वात् पुत्रकामेष्ट्यादिवाक्यवदिति प्रयोगसम्भवादिति भावः । 'पिपीलिकालिपिश्चापी'त्यादिवाक्यव्यावर्त्यमाह **किञ्चेति** । व्यावर्त्यान्तरं चाह **अपि चेति** । तन्मूलत्वादित्यादेर्व्यावर्त्यमाह **यदा वेदस्येति** । **फलेति** । फलव्यभिचार-आप्तोक्तत्वादिराहित्यादिना । **झर्झराणाम्** अदृढानामित्यर्थः । ननु नित्यत्वमात्रेण कथं पुरुषोद्भवदोषहीनत्वमित्यतो नित्यत्वादित्यनूद्य व्याचष्टे **अपौरुषेयत्वादिति** ।





स्वतन्त्रपुरुषकृतत्वाभावादित्यर्थः । **अन्यथासिद्धानन्यथासिद्धयोरिति** । फलव्यभिचारप्रामाण्ययोरिति योज्यम् । फलव्यभिचारस्य सामग्रीवैकल्यादिनाप्युपपन्नत्वेनान्यथासिद्धत्वात् बोधकत्वे सत्यपौरुषेयत्वस्य च प्रामाण्यं विनाऽसम्भवेनानन्यथासिद्धत्वात् अन्यथासिद्धानन्यथासिद्धयोश्चानन्यथासिद्धस्य बलवत्त्वाद्वेदस्य प्रामाण्यमेवाभ्युपेयमित्यर्थः । **चरकाद्युक्तेति** । चरकेति वैद्यग्रन्थविशेषस्य नामधेयम् ।

**गु०दी०— प्रमाणसिद्धफलव्यभिचारत्वात्** इत्यत्र प्रमाणात्सिद्धेऽर्थे फलव्यभिचारत्वादित्यर्थः ।

**यादु०— सम्प्रतीति** । अनेनात्रावसरसङ्गतिं सूचयति । पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरनन्तरता चास्याधिकरणस्येति ज्ञातव्यम् । **झर्झराणां** कम्पमानानाम् । **बोधकत्वेनेति** । बोधजनकत्वशक्त्येत्यर्थः । **प्रामाण्यं** भवतीति शेषः । तथा च बोधजनकत्वेनेति तृतीया हेताविति ज्ञातव्यम् । **अन्यथा फलव्यभिचार इति** । पुत्रकामेष्ट्यादौ फलसाधनतां वेदेन ज्ञात्वा तदनुष्ठातुः फलालाभे खलु फलव्यभिचारो वक्तव्यः । वेदवाक्यस्याबोधकत्वे तु साधनताऽज्ञानेऽनुष्ठानस्याभावेन क्व व्यभिचारोद्भावनावसर इत्यर्थः । **स्वत एव प्रामाण्यमिति** । करणरूपे वेदवाक्ये यथार्थज्ञानजनकत्वरूपप्रामाण्यस्य स्वतस्त्वं नाम ज्ञानजनकत्वशक्त्यभिन्नशक्तिरूपत्वं ज्ञानजनकमात्रजन्यत्वं वा द्रष्टव्यम् । अनन्यथासिद्धस्य बलत्त्वादित्येव पाठः । तत्रानन्यथासिद्धस्येत्यस्य निरवकाशस्येत्यर्थः । अत्रान्यथासिद्धः फलव्यभिचारः । अपौरुषेयत्वनिबन्धनं प्रामाण्यमनन्यथासिद्धमिति ज्ञातव्यम् । विपरीतबोधकत्ववति प्रत्यक्षादावनाप्तप्रणीते व्यभिचारवारणाय वाक्यत्वादित्युक्तम् । **प्रमाणसिद्धेति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारत्वादित्यर्थः । **चरकं** वैद्यशास्त्रम् ।

**वं०प०— अन्यथा** फलव्यभिचारेऽपि चेत् प्रामाण्यमित्यर्थः । अस्तु तर्ह्यपौरुषेयत्वेनैव प्रामाण्यमित्यतोऽपौरुषेयत्वं प्रत्युताप्रामाण्यमेव साधयतीत्याह **अपौरुषेयत्वे चेति** । **अन्यथा** प्रतिवादिनो मम मते वेदस्य बोधकत्वं न सम्मतमिति यद्युच्यत इत्यर्थः । तथा च, यदि वेदवाक्यमबोधकं स्यात्तदा पुत्रकामः पुत्रकामेष्ट्या यजेतेत्यादिवाक्यस्यार्थं बुद्ध्वा पश्चादिदमप्रमाणं कृतायामपीष्टौ पुत्रजन्मानुपलम्भादिति तस्य वेदस्य फलव्यभिचारश्चोद्यते । तन्न स्यात् । तस्माद्वेदवाक्यस्य बोधकत्वमुभयसम्मतमित्यर्थः । ननु वेदस्य प्रामाण्यमङ्गीकृत्य फलव्यभिचारस्य सामग्रीवैकल्यादिना कुतोऽन्यथासिद्धिः कल्पनीया नियामकाभावात् फलव्यभिचारेणाप्रामाण्यमेव किं न स्यादित्यत आह **अन्यथासिद्धेति** । फलव्यभिचार उक्तरीत्याऽन्यथासिद्धोऽतो दुर्बलः । वेदप्रामाण्यं त्वपौरुषेयतया स्वत एव सिद्धमिति प्रबलमित्ययं न्याय एव नियामक इति नोक्तदोष इति भावः । स्वरूपसिद्धिपरिहारायाह **विमतो विपरीतेति** । एवमुत्तरत्रापि ।

**कं०रा०— परिहृतः स्मृतिविरोध इति** । विष्णोर्जगज्जन्मादिकारणत्व इति शेषः । **एकदेशे चेति** । वेदैकदेशे चाप्रमाणे सति तन्न्यायेन तद्दृष्टान्तावष्टम्भप्रवृत्तन्यायेन विमतो वेदैकदेशो प्रमाणं वेदत्वात्





सम्मतवेदैकदेशवदित्येवंरूपेणैकदेशान्तरस्याप्यप्रामाण्यानुमानं सुलभमेवेत्यर्थः । ननु पूर्वपक्ष्युक्तरीत्या फलव्यभिचारेण वेदस्याप्रामाण्यमेव कल्प्यताम् । कुतस्तस्य प्रामाण्यं स्वीकृत्य फलव्यभिचारस्य सामग्रीवैकल्यादिनिबन्धनत्वेनोपपन्न इत्यन्यथासिद्धः । निर्दोषत्वं तु वेदस्य प्रामाण्यं विनाऽनुपपन्नमित्यन्यथासिद्धमन्यथासिद्धानन्यथासिद्धयोश्चानन्यथासिद्धं बलवदतो निर्दोषत्वेन वेदप्रामाण्यमङ्गीकृत्य फलव्यभिचारस्य सामग्रीवैकल्यादिनिबन्धनत्वकल्पनमेव युक्तमिति भावः । **प्रमाणसिद्धेति** । इदमेतस्य फलमिति प्रमाणसिद्धं यत्फलं तं निरूपितव्यभिचारत्वादित्यर्थः । **चरकेति** । वैद्यकाद्युक्तफलव्यभिचारकादित्यर्थः ।

**श्रीनिधि०— अन्यथा फलव्यभिचारोऽपि न स्यादिति** । **अन्यथा** बोधकत्वाभावे । बोधकत्वे खलु तदुक्तस्य साधनं ज्ञात्वा तदनुष्ठानेऽपि फलानुपलम्भात् फलव्यभिचार इति वक्तव्यम् । तद्वन्नास्ति तदा कथं फलव्यभिचारः । न हि फलव्यभिचारो नाम कश्चित् तज्जन्यज्ञाननिरपेक्षः शब्दत्वादिवन्निष्ठो धर्म इति भावः । **अन्यथासिद्धानन्यथासिद्धयोरिति** । फलव्यभिचारोऽन्यथासिद्धः । अपौरुषेयत्वं तु अनन्यथासिद्धं प्रामाण्यमाक्षिपतीति भावः । **प्रमाणसिद्धफलव्यभिचारत्वादिति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारत्वादित्यर्थः ।

**शे०वा०—** अत्रापि पूर्वमेव स्मृतिविरोधः परिहृियत इति भ्रान्तिनिरासाय पूर्वोत्तराधिकरणयोरर्थभेदमाह **परिहृत इत्यादिना** । सम्प्रतीत्यनेन 'इतरेषां चानुपलब्धेरि'ति पूर्वाधिकरणसिद्धान्तन्यायेनेह पूर्वपक्षोत्थानादनन्तरसङ्गतिः सूचिता भवतीति ज्ञेयम् । उत्तरत्र पञ्चरात्रादिस्मृतिप्रामाण्यादिदौर्लभ्यस्यापि वक्ष्यमाणत्वात् तावदित्युक्तम् । 'नित्यत्वात् पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेदि'त्यनेन मूले प्रथमतो वेदप्रामाण्यव्युत्पादनेन फलव्यभिचारस्यान्यथासिद्धिसूचनात् तदनुरोधेन प्रथमतः फलव्यभिचारेण तदप्रामाण्यशङ्कामेवोत्थापयति **यद्वीत्यादिना** । फलव्यभिचारेऽप्यस्तु वेदस्य प्रामाण्यं बाधकाभावादित्यप्रयोजकताशङ्कां परिहरति **अन्यथेति** । ननु 'पुत्रकामः पुत्रेष्ट्या यजेते'त्यादेः फलव्यभिचारेणाप्रामाण्येऽपि जगत्कारणत्वाभिधायकानां 'यतो वे'त्यादिवाक्यानां फलव्यभिचारशून्यानामप्रामाण्यं निर्निबन्धनमित्यतः फलव्यभिचारेण तद्वतो वेदभागस्याप्रामाण्यसिद्धौ तद्दृष्टान्तेन वेदत्वेन हेतुना 'यतो वे'त्यादिवेदभागस्याप्यप्रामाण्यसाधनात् युक्तैव कृत्स्नस्यापि वेदस्याप्रामाण्यसिद्धिरित्याह **एकदेशे चेति** । पिपीलिकालिपिश्चेत्याद्युत्तरानुव्याख्यानव्यावर्त्यत्वेन सूचितयुक्त्याऽपि तामुत्थापयति **किञ्चेति** । हेत्वसिद्धिं परिहरति **अबुद्धिपूर्वकश्चेति** । ननु च वेदस्य पौरुषेयत्वमेवाङ्गीकुर्मः तथा चोक्तहेत्वसिद्धेर्नाप्रामाण्यप्रसङ्ग इत्यतो वृथाऽयं पौरुषेयत्वाङ्गीकारः परस्य । पौरुषेयत्वेऽप्यप्रामाण्यस्य वज्रलेपत्वादित्याशयेनाह **पौरुषेयत्वे चेति** । पौरुषेयवाक्यत्वात् स्मृत्यादिवत् स्वातन्त्र्येण प्रामाण्यानुपपत्त्या प्रमाणमूलकत्वेनैव प्रामाण्यं वाच्यम् । न च तत्सम्भवति । वैदिकार्थस्य प्रत्यक्षाद्ययोग्यत्वेन तत्र प्रत्यक्षानुमानयोरप्रवृत्त्या तयोर्वेदं प्रति मूलत्वासम्भवाद्वाक्यस्याप्यपौरुषेयस्यान्यस्यानभ्युपगमात् पौरुषेयवाक्यस्यैव तन्मूलत्वे च तत्प्रामाण्यस्याप्युक्तरीत्या मूलप्रमाणसापेक्षतयाऽनवस्थितासिद्धवाक्यपरम्पराकल्पनायामनवस्थापत्तेः मूलप्रमाणशून्यत्वादप्रामाण्यमित्याशयः । प्रमाणीभूतस्यापि प्रत्यक्षादेः





आप्तप्रणीततया तत्र व्यभिचारपरिहाराय वाक्यत्वादित्युक्तम् । अस्तु तर्हि स्मृत्यादिसमन्वयेन ब्रह्मणो जगत्कारणत्वसिद्धिरित्यतस्तस्य श्रुतिमूलत्वतत्संवादित्वाभ्यां प्रामाण्यस्येष्टत्वात् श्रुत्यप्रामाण्ये न स्मृत्यादेः प्रामाण्यमित्यभिप्रेत्य तावत्पदसूचितं स्मृत्यादिप्रामाण्यस्य दुर्लभत्वमप्युपपादयति **यदा चेति** । **झर्झराणामिति** । शिथिलावयवानामिवेत्यर्थः । **वेदवाक्यमिति शेष इति** । अत्र वेद इति शेष इति वक्तव्येऽपि वाक्यग्रहणं मूले उज्झितमिति नपुंसकोपपत्त्यर्थम् । मूलेऽपि वेदस्य वाक्यत्वाद्बोधकत्वसिद्धिरित्यभिप्रायेणैव नपुंसकमेव प्रयुक्तमिति द्रष्टव्यम् । ननु वाक्ये यथार्थज्ञानसाधनत्वलक्षणप्रामाण्यस्याप्तोक्तत्वलक्षणगुणाधीनतायाः सर्वत्रोपलब्धत्वादपौरुषेयत्वे च वेदस्याप्तोक्तत्वलक्षणगुणाभावात् प्रामाण्यकारणगुणाभावे कथं दोषाभावमात्रेण प्रामाण्यं स्यादित्यतः प्रामाण्यस्य स्वतस्त्वान्न गुणापेक्षत्वमिति भावेन वेदप्रामाण्यस्योत्पत्तौ स्वतस्त्वं व्युत्पादयितुं प्रत्यक्षानुमानागमप्रामाण्यस्य तावत् तदुपपादयति **अयमर्थ इति** । **बोधकत्वेनेति** । ज्ञानजननशक्त्यैव न तु तदतिरिक्तशक्त्या । इत्थम्भूतलक्षणे चेयं तृतीया । प्रामाण्यं यथार्थज्ञानजननशक्तिरूपं यथार्थज्ञानसाधनत्वमित्यर्थः । ततश्चायमर्थः । **करणानां** प्रत्यक्षानुमानागमानां, **प्रामाण्यं** यथार्थज्ञानजननशक्तिः, **बोधकत्वेन** ज्ञानजननशक्त्या ज्ञानजननशक्तिरूपा, करणनिष्ठकरणहेत्वासादितज्ञानजननशक्त्यभिन्नेत्यर्थः । यद्वा बोधकत्वेनेति सहयोगे तृतीया । तथा च करणनिष्ठप्रामाण्यरूपा यथार्थज्ञानजननशक्तिर्बोधकत्वेन ज्ञानजननशक्त्या सहितैवेत्युक्त्या ज्ञानजननशक्तिवद्यथार्थज्ञानजननशक्तेः सहजत्वं लभ्यते । तदनेन करणनिष्ठकरणहेत्वासादितज्ञानजननशक्त्यभिन्नयथार्थज्ञानजननशक्तिमत्त्वं वा ज्ञानजननशक्तिवत् सहजतद्यथार्थजननशक्तिमत्त्वं वा करणानां प्रामाण्यस्योत्पत्तौ स्वतस्त्वमित्युक्तं भवति । नन्वेवं दुष्टेन्द्रियादेरपि ज्ञानजननशक्तिमत्त्वात् तदभिन्नयथार्थज्ञानजननशक्तिमत्त्वं तद्वत्सहजतद्याथार्थ्यजननशक्तिमत्त्वं च स्यादिति तस्यापि प्रामाण्यापत्त्या प्रमाणतदाभासविवेकानुपपत्तिरित्यतो नायमस्ति नियमो यत् करणनिष्ठज्ञानजननशक्त्यभिन्ना तद्वत्सहजा वा सर्वत्र यथार्थज्ञानजननशक्तिरिति, येनोक्तातिप्रसङ्गः स्यात् । किन्तु दोषाभावे सत्येव तथा नियमः । दुष्टेन्द्रियादौ दोषस्यैव सत्त्वात् तेन च यथार्थज्ञानजननशक्तेः प्रतिबन्धान्नाशाद्वा न ज्ञानजननशक्तिमतोऽपि दुष्टेन्द्रियादेः प्रामाण्यं प्रसज्यते प्रामाण्यस्वतस्त्वस्यौत्सर्गिकत्वादित्याशयेनाह **दोषात्त्विति** । अस्त्वेवं करणप्रामाण्यस्य स्वतस्त्वाद्गुणानपेक्षत्वम् । किमेतावता वेदस्येत्यतो वेदस्यापि करणविशेषत्वात् तन्निष्ठयथार्थज्ञानजननशक्तेरपि वेदनिष्ठज्ञानजननशक्त्यभिन्नत्वस्य तद्वत्सहजत्वस्य वोक्तन्यायेन सिद्ध्या तस्य गुणानपेक्षप्रामाण्यसिद्धिरिति भावेन उभयसम्मत्या तत्र ज्ञानजननशक्तिमुपपादयति **वेदवाक्यं चेति** । ननु दुष्टेन्द्रियादिवद्वेदस्याप्यपवादविषयत्वोपपत्तेर्न तन्निष्ठयथार्थज्ञानजननशक्तेः तन्निष्ठज्ञानजननशक्त्यभिन्नत्वादिरित्यतोऽपवादकदोषसद्भावेन दुष्टेन्द्रियादेरपवादविषयत्वेऽपि वेदस्य निर्दोषतयाऽपवादशून्यत्वान्नापवादविषयत्वमित्याशयवान् के ते वाक्यदोषाः कुतश्च तेषां पुरुषदोषाधीनत्वं कथं च वेदस्य तद्राहित्यमित्याशङ्काः क्रमेण परिहरति **वाक्ये चेत्यादिना** । नित्यत्वस्याप्रयोजकत्वेन पुरुषदोषराहित्यानुपपादकत्वात् कथं तस्य मूले हेतुत्वेनोपन्यास इत्यतः तदनूद्य प्रकृतोपयोगितया व्याचष्टे **नित्यत्वादपौरुषेयत्वादिति** । **स्वत एवेति** । गुणानपेक्षमेवेत्यर्थः । न त्वपवादविषयो भवतीत्येवार्थः । अस्तु वेदस्य प्रामाण्यं तथाऽपि फलव्यभिचारस्य का गतिरित्यतः फलसंवादेन प्रामाण्यसिद्ध्यङ्गीकारे





उक्तरीत्याऽन्योन्याश्रयप्रसङ्गात् फलव्यभिचारस्य कर्तृकरणादिवैगुण्यनिमित्तताकल्पनाऽनुपपत्तावपि अपौरुषेयादियुक्त्योक्तरीत्या प्रामाण्यसिद्ध्यङ्गीकारेऽन्योन्याश्रयाप्रसङ्गात् फलव्यभिचारस्य कर्तृकरणादिवैगुण्यनिमित्तत्वकल्पनेत्याह **प्रामाण्ये चेति** । अन्यथा फलव्यभिचारि च प्रमाणं चेति व्याघातापातादिति भावः । ननु यथा भवताऽपौरुषेययुक्त्या वेदस्य प्रामाण्यं प्रसाध्य फलव्यभिचारस्य गत्यन्तरं कल्पयितुं शक्यते तथा परेणापि फलव्यभिचारेणाप्रामाण्यं प्रसाध्य प्रामाण्यसाधकापौरुषेयत्वस्य गत्यन्तरं कल्पयितुं शक्यत एव । अप्रामाण्यसाधकफलव्यभिचारस्यैवान्यथासिद्धिर्वर्णनीया न तु प्रामाण्यसाधकापौरुषेयत्वस्येत्यत्र नियामकाभावात् तत्कथं निर्णय इत्यतः अप्रामाण्यसाधकस्य फलव्यभिचारस्य सावकाशत्वात् प्रामाण्यसाधकस्य च अपौरुषेयत्वस्य निरवकाशत्वात् सावकाशान्निरवकाशस्यैव बलवत्त्वेन निरवकाशापौरुषेयत्वनिबन्धनप्रामाण्यनिश्चयाङ्गीकारेण सावकाशफलव्यभिचारस्यैवान्यथासिद्धिर्वर्णनीयेति निर्णयोपपत्तिरित्याशयेनाह **अन्यथासिद्धानन्यथासिद्धयोरनन्यथासिद्धस्य बलवत्त्वादिति** । अत्र चान्यथासिद्धशब्दः सावकाशपरः । अनन्यथासिद्धशब्दश्च निरवकाशपर इति द्रष्टव्यम् । क्वचिदन्यथासिद्धानन्यथासिद्धयोरन्यथासिद्धस्य बलवत्त्वादित्यपि पाठः । तत्राप्यन्यथासिद्धस्येत्यतःपरं सकाशादनन्यथासिद्धस्येति शेषपूरणेन उक्तरीत्याऽनन्यथासिद्धप्रामाण्यसाधकापौरुषेयत्वस्य प्रबलत्वादित्यर्थलाभादुक्तावधारणोपपत्तिरित्यर्थो द्रष्टव्यः । यद्यपि विपरीताबोधकत्वरूपविशेष्यस्येव बोधकत्वरूपविशेषणस्याप्यसिद्धिः शङ्कितुं शक्यते तथाऽपि वेदवाक्यं च बोधकत्वेन सम्प्रतिपन्नमित्यादिना तदसिद्धेः पूर्वमेव परिहृतत्वाद्विशेष्यासिद्धिमेव परिहरति **विमतो विपरीतबोधको न भवतीत्यादिना** । अत्र हेतौ विपरीतबोधकत्ववति प्रत्यक्षादावप्यनाप्तप्रणीतत्वसत्त्वात् तत्र व्यभिचारवारणाय वाक्यत्वादित्युक्तम् । वैकल्यादीत्यादिपदेन प्रतिबन्धसद्भावपरिग्रहः । **प्रमाणसिद्धेति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारत्वादित्यर्थः । **चरकं** वैद्यशास्त्रम् ।

वा०र०— **अनन्तरसङ्गतिरिति** । पूर्वसिद्धान्ततो यः पूर्वपक्षः प्रवर्तते इति लक्षणानुसारेणापवादिका सङ्गतिः इत्यर्थः । अनेनावसरसङ्गतिरिति टीकान्तरस्थमसदिति सूचितम् । अनन्तरसङ्गतिरिति सूचितं भवतीति योजना । **प्रथमत इति** । पिपीलिकालिपिश्चेत्युत्तरभाष्यव्यावृत्त्या बुद्धिपूर्वकत्वापेक्षया प्रथमतः इति योज्यम् । **यतो वेत्यादीति** । यद्यपि यतः वै इमानीति पदविभागात् वेत्यादीति सन्धिरयुक्तः । तथापि जन्माधिकरणादिसम्बन्धित्वपरग्रन्थयोः चन्द्रिकादौ च तत्र तत्र तथैव व्यवहारप्राचुर्यात् अत्रापि तथैव व्यवहारो युक्तः । एवं आत्मा इदं असद्वा इदं इत्यादेः उपादानस्थलेऽपि प्रचुरग्रन्थप्रयोगानुसारेण व्यवहार इति ज्ञेयम् । **व्यावर्त्यत्वेनेति** । अनुव्याख्यानेऽबुद्धिपूर्वकत्वेऽपि प्रामाण्यसम्भवोपपादनेन अबुद्धिपूर्वकत्वेनाप्रामाण्यसाधनपूर्वपक्षसत्त्वादिति भावः । विशिष्टवाक्याशयं उक्त्वा तदवान्तरभागाशयः पौरुषेयवाक्यत्वादित्यारभ्येत्याशयः इत्यन्तेनोक्त इति पुनरुक्तिशङ्कावकाशः । अनभ्युपगमादित्यनन्तरं वचनविपरिणामेन तस्य वेदं प्रतीत्याद्यनुवर्तते । पौरुषेयस्यैव तस्येति पाठः । वाक्यस्येति पाठे स्पष्टत्वार्थं तथोक्तिः । आप्तप्रणीतेति प्रतीकोपादानं सिद्धवत्कृत्य तत्कृत्यमाह **प्रमाणीभूतस्यापीति** । स्मृत्यादेरप्रामाण्यमिति सम्बन्धः । फलव्यभिचारादिभिः





झर्झरा इव तथोक्ताः इति तृतीयेति योगविभागात् समासः । 'सुखशक्तिपयोनिधिरि'त्यत्र यथा झर्झरत्वनिर्वचनं प्रशिथिलेति । 'प्रामाण्यं स्वत एवागमस्य ही'ति जिज्ञासाधिकरणीयानुव्याख्यानावसरे करणानां ज्ञानजनकशक्त्या एव तद्याथार्थ्यजनकत्वं स्वतस्त्वमिति मूलम् । तद्व्याख्यातं वाक्यार्थचन्द्रिकायाम् । याथार्थ्यजनकत्वं याथार्थ्यजननं ज्ञानजननशक्त्यैव न तु तदतिरिक्तशक्त्येत्यादिना तदनुसारेण व्याचष्टे **ज्ञानजननशक्त्यैवेत्यादिना** । **इत्थम्भूतेति** । यथार्थज्ञानजनकत्वप्रकारप्राकारं प्राप्तस्य ज्ञानजननशक्तिलक्षणम् । ज्ञानजननशक्तिं ज्ञात्वा यथार्थज्ञानजनकत्वं तेन जानन्तीति भवति लक्षणं ज्ञानजननशक्तिः प्रामाण्यस्येति भावः । एवं प्रामाण्यपदार्थत्वेन शक्तिलाभं अभिधाय बोधकत्वेनेति वाक्यं ज्ञानप्रामाण्यजननशक्त्योः अभेदप्रतिपादकं यथा स्यात् तथा व्याचक्षाणः इत्थम्भूततृतीयार्थत्वेनाभेदमाह **ततश्चायमिति** । ज्ञानजननशक्त्येत्यस्य एव विवरणं ज्ञानजननशक्तिरूपेति । तस्यापि तात्पर्यं करणनिष्ठेत्यादि । तर्कताण्डवोक्तद्वितीयपक्षस्यापि सङ्ग्रहो यथा स्यात् तथा रूपेणापि बोधकत्वेनेति वाक्यं योजयति **यद्वेति** । अत्रापि बोधकत्वप्रामाण्यपदार्थभूता शक्तिरेव किन्तु तयोर्भेदमाश्रित्य सहजत्वरूपं स्वतस्त्वमिति शेषः । मूले वेदवाक्यं बोधकत्वेनेत्यत्र बोधकत्वेनेत्यस्य ज्ञानजननशक्तिमत्वेनेत्यर्थः । **अन्यथेति** मूलम् । तस्य ज्ञानजननशक्तिशून्यत्वेत्यर्थः । तच्छून्यत्वे ज्ञानानुदयापत्त्या तत्पूर्वके तत्र व्यभिचारस्यापि ज्ञातुमशक्यत्वेन तदभावापातादित्यर्थः । एतन्मूलवाक्यद्वयेन वक्ष्यमाणप्रयोगे विशेषणासिद्धिः परिहृता भवति इत्यपि अभिप्रायो वर्णनीयः । वक्ष्यति च तथापि वेदवाक्यं बोधकत्वेन सम्प्रतिपन्नमित्यादिनेति ज्ञेयम् । **के ते वाक्यदोषा इति** । उपलक्षणं चैतत् । कुतश्च ते स्वत एव न स्युरित्यपि द्रष्टव्यम् । मूलानुसारात् । अबोधकत्वेति तत्त्वनिर्णयटीकायां अबोधकत्वविपरीतबोधकत्वयोरेव अप्रामाण्यरूपत्वेन कीर्तनं तु तत्र तयोर्दोषत्वेनापि कीर्तनालाभात् अविरुद्धम् । तद्ग्रन्थद्वयाविरोधः तट्टीकाव्याख्याने अस्माभिर्निरूपितो द्रष्टव्यः । **उक्तरीत्येति** । प्रामाण्यसिद्ध्युक्तरेति पूर्वाधिकरणोक्तरीत्येत्यर्थः । **अपौरुषेयत्वादियुक्त्येति** । आदिपदेनानाप्तप्रणीतवाक्यत्वस्य बोधकत्वे सति विपरीताबोधकत्वस्य च सङ्ग्रहः । **उक्तरीत्येति** । अयमर्थः इत्यादिग्रन्थपर्यालोचनया प्रामाण्यसिद्धिप्रतीतेरिति भावः । अत एवापौरुषेयत्वयुक्तेः प्रामाण्ये तृतीयकक्ष्यतया अत्र एते प्रयोगाः इत्यत्र मूले उक्तिरिति द्रष्टव्यम् । निर्दोषवाक्येति पूर्वाधिकरणभाष्योक्तां युक्तिमाह **अन्यथाफलेति** । **अपौरुषेयत्वयुक्त्येति** । एतच्च परम्परां गर्भीकृत्योक्तम् । उक्तरीत्या तदभिप्रायस्यावश्यकत्वात् । एवमुत्तरत्रापीति बोध्यम् । **शङ्कितुं शक्यते इति** । अतस्तत्परिहारोऽपि आवश्यकः इति शेषः । सम्प्रतिपन्नमित्यर्थानुवादः । **विशेष्यासिद्धिमेवेति** । यद्यपि वेदवाक्यं च नित्यत्वात् इत्यनेन विशेष्यासिद्धिरपि परिहृतैव । तथापि अपौरुषेयत्वस्य साक्षात् विशेषसाधकत्वाभावाभिप्रायेण तथोक्तिः । अवान्तरहेतोरत्रोक्तेश्चात्र परिहारत्वं च युज्यत इति ध्येयम् । **अत्र हेताविति** । एतत् अनुमानीयहेताविव्यर्थः । अस्य वाक्यत्वात् इत्युक्तमित्यनेनान्वयः । तत्र साध्याभावोपपादनं **विपरीतेति** । हेतुसत्त्वमुक्तम् **अनादीति** । मूले चरकादीत्यादिपदेन सुश्रुतादिपरिग्रहः ।

**स०व्र०— अपौरुषेयत्वेनेति** । क्वचित्पौरुषेयत्वे चेति पाठः । तत्र पौरुषेयत्वाङ्गीकारे आप्तिनिश्चयस्योक्तरीत्या असम्भवेन अप्रामाण्यापत्त्या अपौरुषेयत्वमङ्गीकार्यमित्युक्तार्थसिद्धिरिति भावः । **झर्झराणाम्** ।





शिथिलावयवानाम् । **बोधकत्वेन खल्विति** । इत्थम्भूतलक्षणे तृतीया । बोधकत्वरूपं प्रामाण्यमित्यर्थः । **अन्यथेति** । बोधकत्वानङ्गीकारे । फलव्यभिचारोऽपि ज्ञातुं न शक्येतेति भावः । ननु प्रामाण्यमङ्गीकृत्य फलव्यभिचारस्य सामग्रीवैकल्यं वा प्रतिबन्धकसद्भावो वा कारणत्वेन न कल्पनीयः । फलव्यभिचारेण वेदाप्रामाण्यमेवाभ्युपेत्य फलसंवादस्य काकतालीयताया अपि कल्पनाप्रसङ्गात् । नियामकप्रमाणाभावादित्यत आह **अन्यथेति** । अन्यथासिद्धानन्यथासिद्धयोरन्यथासिद्धस्य बलवत्त्वादित्येव पाठः । अयमाशयः— फलसंवादमात्रेण वेदप्रामाण्यमभ्युपेत्य फलविसंवादे सामग्रीवैकल्यनिमित्तत्वकल्पनायां विसंवादेनाप्रामाण्य-मङ्गीकृत्य फलसंवादस्य काकतालीयत्वं वाच्यम् । न चैतदस्माभिरुच्यते किन्तु फलसंवादपरित्यागेन अप्रामाण्यकारणदोषशून्यस्य बोधकत्वेनैव प्रामाण्यमिति स्वत एव प्रामाण्यस्य सिद्धत्वेन तस्यान्यथासिद्ध-त्वात् । वेदाप्रामाण्ये च फलविसंवादातिरिक्तसाधकाभावेन फलविसंवादेनैव तस्य वाच्यतया अप्रामाणस्य अनन्यथासिद्धत्वात् । अन्यथासिद्धानन्यथासिद्धयोश्च अन्यथासिद्धस्यैव बलवत्त्वान्नियमोपपत्तिरिति । क्वचि-दनन्यथासिद्धस्य बलवत्त्वादिति पाठः । तस्य, फलव्यभिचारस्य सामग्रीवैकल्यादिनाऽप्युपपन्नत्वेनान्यथा-सिद्धत्वात्, बोधकत्वे सति अपौरुषेयत्वस्य च प्रामाण्यं विना असम्भवेन अनन्यथासिद्धत्वात्, अन्यथा-ऽनन्यथासिद्धयोश्चानन्यथासिद्धस्य बलवत्त्वात्, वेदस्य प्रामाण्यमेवाभ्युपेयमित्यर्थः । विपरीतबोधकत्ववति प्रत्यक्षे आप्तप्रणीतत्वाभावरूपानाप्तप्रणीतत्वस्य सत्त्वेन तत्रानैकान्त्यं मा भूदिति वाक्यत्वादित्युक्तम् । **प्रमाणसिद्धेति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारत्वादित्यर्थः । चरकमिति वैद्यकशास्त्रसंज्ञेति ज्ञेयम् ।

**विठ्ठल०**— सङ्गतिदर्शनपूर्वकं पूर्वपक्षित्वात् तस्य चोदाहरणोपनयनरूपावयवद्वयाङ्गीकारि तथा तथैवानुमानं वेदाप्रामाण्यसाधकमुदाहरति **यद्वीति** । श्रुतेर्व्यभिचारितामेव दर्शयति **पुत्रेति** । हेतोरप्रयो-जनतानिराकरणाय विपक्षे बाधकमाह **अन्यथेति** । तावता न सर्वाप्रामाण्यं सिद्ध्यतीत्यत उक्तम् **एकदेशो चेति** । **सुलभमेवेति** । यथोक्तम् । उन्मत्तप्रलपितन्नतीह्यमानं यद्वाक्यं व्यभिचरति क्वचित्फलेऽत्र दृष्टान्तो भवति तदप्रमाणतायां सर्वेषां श्रुतिवचसां च व्यर्थतेति । फलव्यभिचारादित्यादिपदेनापि मूलत्वाभावग्रहणम् । **झर्झराणां** शिथिलानाम् । ननु वक्तृदोषनिबन्धनदोषाभावमात्रेण कथं मानत्वं दुष्टेन्द्रियादौ तदभावादित्यत आह **अयमर्थ इति** । **बोधकत्वेनेति** । बोधजननशक्त्येत्यर्थः । प्रामाण्यं भवतीति शेषः । **अन्यथेति** । पुत्रकामेष्ट्यादौ फलसन्धानतां वेदेन ज्ञात्वा तदनुष्ठातुः फलाभावे खलु व्यभिचारो वक्तव्यः । वेदवाक्यस्य अबोधकत्वे तु फलसाधनताज्ञानाभावेन तदनुष्ठानस्यैवासम्भवान्न कश्चिद्व्यभिचारोद्भावनावसर इत्यर्थः । पुराणादावपि वर्तमाने नित्यत्वमात्रे वक्तृदोषाभावसिद्धेर्नित्यत्वादित्येतदपौरुषेयत्वादिति व्याख्याति **नित्य-त्वादिति** । **अन्यथासिद्धेति** । फलव्यभिचारणाप्रामाण्याभावेऽपि सामग्रीवैकल्यादि निबन्धनोपपन्न इत्यन्यथा-सिद्धः । निर्दोषत्वं तु वेदस्य प्रामाण्यं विनाऽनुपपन्नमित्यनन्यथासिद्धम् । तथा च तयोरन्यथासिद्धस्यैव बलवत्त्वात् फलव्यभिचारस्य सामग्रीवैकल्यादिनिबन्धनत्वकथनमेव युक्तमिति भावः । **प्रमाणसिद्धेति** । प्रमाणसिद्धं यत्फलं तद्व्यभिचारित्वादित्यर्थः । **चरकं** वैद्यशास्त्रम् ।





२७ **चषकः**— पूर्वोत्तरनययोरर्थैक्यविपर्यासं तद्भेदोक्त्या प्रत्यस्यति **परिहृतः स्मृतिविरोध इत्यादिना**। भाष्यमवतारयितुमुपोद्घातमाह 'परिहृतः स्मृतिविरोध इत्यादी'त्यपि स्थितम् । **सम्प्रति** इदानीम् । एतेन स्मृतिविरोधपरिहारगोचरप्रतिबन्धकीभूतविनेयजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यतोक्त्याऽवसरसङ्गतिं ध्वनयति । इतरेषां चानुपलब्धेरिति पूर्वनयीयसिद्धान्तन्यायेनेह पूर्ववादिमतप्रवर्तनादानन्तर्यमेतन्नयस्येत्यवसेयम् । मूले नित्यत्वादित्यादिपादत्रिकव्यावर्त्यं विवृण्वानः प्रकृते वेदाप्रामाण्यवादिनो बौद्धस्य प्रत्यवस्थिततया तन्मतदिशोदाहरणोपनयात्मकन्यायप्रयोगमभिधत्ते **यद्धीति** । हेतोः पक्षधर्मतां दर्शयति **पुत्रेति** । अप्रयोजकताशङ्कानिरसनौपयिकं विपक्षे बाधकतर्कमाह **अन्यथेति** । **झर्झराणां** शिथिलावयवानामिव स्थितानाम् । **अदृढानां** कम्पमानानामिति । **बोधकत्वेनेति** । ज्ञानजननशक्त्यैव न तु तदतिरिक्तशक्त्येत्यर्थः । अत्र व्याकर्तारः । इत्थम्भूतलक्षणे चेयं तृतीया । करणानां प्रत्यक्षानुमानागमानां प्रामाण्यं यथार्थज्ञानजननशक्तिः ज्ञानजननशक्त्यभिन्नेत्यर्थः । यद्वा सहयोगे तृतीया । तथा च करणगतयथार्थज्ञानजननशक्तिः ज्ञानजननशक्त्या सहितैवेत्युक्त्या ज्ञानजननशक्तिवत् यथार्थज्ञानजननशक्तेः सहजत्वं लभ्यते । ज्ञानजननशक्त्यभिन्नयथार्थज्ञानजननशक्तिमत्त्वं तादृशशक्तिवन्नैसर्गिकयथार्थज्ञानजननशक्तिमत्त्वं वा करणानां प्रामाण्यस्योत्पत्तौ स्वतस्त्वमित्युक्तं भवतीति व्याकुर्वते । प्रामाण्यं भवतीति शेषः । तथा च बोधकत्वेनेति तृतीया हेताविति ज्ञातव्यमित्यपि व्याचक्षते **अन्यथा फलव्यभिचार इति** । पुत्रकामेष्टिधर्मिकफलसाधनत्वप्रकारकवेदवाक्यजनितान्वयबोधानन्तरं तदनुष्ठानकर्तुः फलालाभे फलव्यभिचारोऽभिधातव्यः । तस्यान्वयबोधाजनकत्वे तदधीनानुष्ठानाभावप्रसङ्गेन व्यभिचारोद्भावनस्य निराश्रयत्वप्रसङ्ग इत्यर्थः । **स्वत एव प्रामाण्यमिति** । तस्य स्वतस्त्वं ज्ञानजनकशक्त्यभिन्नत्वरूपं ज्ञानजनकसामग्रीमात्रजन्यत्वरूपं वेति मन्तव्यम् । अन्यथासिद्धस्य बलवत्त्वादित्येव पाठः साधीयान् । अन्यथासिद्धशब्दश्च निरवकाशतात्पर्यक इत्यवसेयम् । आद्यानुमाने हेतुशरीरे दलद्वयप्रयोजनं घटे विप्रलम्भकवाक्ये च व्यभिचारवारणम् । द्वितीयानुवाके दुष्टेन्द्रियादौ तद्विधूननाय वाक्यत्वांशनिवेशनम् । वैकल्यादीत्यादिपदं प्रतिबन्धसमवधानपरम् । प्रमाणसिद्धत्वं फलांशे विशेषणम् । **चरकं** वैद्यशास्त्रम् ।

**॥ इति वेदादिप्रामाण्यदौर्लभ्यात् श्रुत्यादिसमन्वयाभावशङ्का तन्निरसनञ्च ॥**

* * *

**॥ अथ तच्छङ्कानिरसने वेदस्य नित्यत्व(रूपापौरुषेयत्व)ात् प्रामाण्यम् ॥**

**॥ अथ तत्रादौ प्रागुक्तसामान्यसिद्धिपरिशेषाभ्यां वेदनित्यत्वसिद्धिः ॥**

३० **सु०— स्यादेतत्, नित्यत्वमेव वेदस्य कुतः । प्रागुक्तसामान्यसिद्धिपरिशेषाभ्यामिति ब्रूमः ।**





**परि०— प्रागुक्तेति** । 'न हि धर्मादिसिद्धिरस्यान्नित्यवाक्यं विना क्वचिदि'त्यादिजिज्ञासानयानुव्याख्याव्याख्यानावसरे 'धर्मादिकं सप्रमाणं वस्तुत्वात् घटवत् । तच्च प्रमाणं न प्रत्यक्षादी'त्युक्तसामान्यसिद्धिपरिशेषाभ्यामित्यर्थः ।

**यादु०— प्रागुक्तेति** । 'न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचित् । अविप्रलम्भस्तज्ज्ञानं तत्कृतत्वादयोऽपि च । कल्प्या गौरवदोषेण पुंवाक्यं ज्ञापकं न तदि'त्यत्रोक्तसामान्यसिद्धिपरिशेषाभ्यामित्यर्थः । तत्र हि, धर्मादिकं प्रमाणोपेतं वस्तुत्वाद्धटवदिति सामान्यतः सिद्धं धर्मादिविषयं प्रमाणं न तावत्प्रत्यक्षं धर्मादेरतीन्द्रियत्वात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । नापि पौरुषेय आगमः । आप्त्यनिश्चयात् । अतः परिशेषादपौरुषेयमेव तदिति सामान्यसिद्धिपरिशेषावुक्ताविति ज्ञातव्यम् ।

**कं०रा०— प्रागुक्तेति** । सर्ववादिसम्प्रतिपन्नं धर्मादिकं प्रमाणोपेतं वस्तुत्वात् । घटवत् । न हि विना प्रमाणेन धर्मादिनिश्चयः सर्ववादिनां भवितुमर्हति अतिप्रसङ्गात् तदेवं सामान्यतः सिद्धं धर्मादिगोचरं प्रमाणं न तावत्प्रत्यक्षं तद्धि बाह्यं मानसं वा स्यात् । न तावद्बाह्यम् । तस्य रूपादिमति द्रव्ये तत्समवेतगुणकर्मसामान्येष्वेव च प्रवृत्तेः । नापि मानसम् । सुखादिवद्धर्मादावनुभवाननुव्यवसायात् अन्यथा सुखमनुभवामीति स्यात् । न च योगसिद्धानां प्रत्यक्षं धर्मादिविषयकमिति वाच्यम् । तेन तेषां कथञ्चिद्धर्मादिसिद्धावप्यस्माकं तन्निश्चयायोगात् न ह्यन्यप्रत्यक्षेणान्यस्य निश्चयोऽनुष्ठानं वा सम्भवति । नाप्यनुमानं तद्व्याप्तिलिङ्गाभावात् सामान्यतो दृष्टेन कथञ्चिद्धर्मस्वरूपमात्रसिद्धावप्यनुष्ठानयोग्यस्तद्विशेषो नानुमातुं शक्यः, न हीदृशयज्ञदानादिभिरुपजनितो धर्म ईदृशं फलं जनयतीत्यादयः सूक्ष्मतरा विशेषाः शक्यानुमानाः । वाक्यमपि न पौरुषेयं धर्मादिनिश्चयाय प्रभवति पुरुषाणामज्ञानसंशयविपर्ययविप्रलम्भापटुकरणत्वानां बहुलमुपलम्भेन धर्माद्युपदेष्टर्याश्वासानुपपत्तेस्तदेवमपौरुषेयं वाक्यं विना सर्ववाद्यभिमतधर्मादिनिश्चयासम्भवात् सामान्यसिद्धिपरिशेषाभ्यां अपौरुषेयं किमपि वाक्यं धर्मादिप्रतिपादकमस्तीति सिद्धम् । तच्चापौरुषेयं वाक्यं वेद एव परिशेषात् वेदव्यतिरिक्तानां कर्तृप्रसिद्धिमत्वाद्वेदस्य तु तदभावादिति प्रागुक्तसामान्यसिद्धिपरिशेषाभ्यां वेदस्य नित्यत्वं सिद्धमिति ब्रूम इत्यर्थः ।

**शे०वा०—** ननु वेदस्य नित्यत्वमेव कुत इत्याशङ्कायां मूले 'विरूपनित्यया वाचे'त्यादिना श्रुतिभिर्नित्यत्वं साध्यते । न तद्युक्तम् । धर्मादिकं प्रमाणोपेतं वस्तुत्वाद् घटादिवदिति सामान्यतो धर्मादिविषयप्रमाणसिद्धौ तस्य प्रत्यक्षानुमानपौरुषेयवाक्यत्वप्रतिषेधेनापौरुषेयत्वस्यैव प्राप्तत्वेन सामान्यसिद्धिपरिशेषाभ्यामेव नित्यत्वस्य सिद्धत्वात् । न च सामान्यसिद्धिपरिशेषाभ्यामिव श्रुत्याऽपि नित्यत्वं सुसाधमित्यभिप्रायेण श्रुत्युपन्यासो मूले इति वाच्यम् । श्रुतिप्रामाण्ये विवदमानं प्रति श्रुतिभिस्तत्साधनायोगादित्यतो नात्र श्रुतिप्रामाण्ये विवदमानं प्रति श्रुतिभिस्तत्साधनमभिप्रेतं येनोक्तानुपपत्तिः स्यात् । न चैवं नित्यत्वासिद्धि-





प्रसङ्गः । सामान्यसिद्धिपरिशेष्याभ्यामेव तत्सिद्धेरभिप्रेतत्वात् । 'न हि धर्मादिसिद्धिः स्यादि'त्यादिना सामान्यसिद्धिपरिशेषयोः प्रागुपन्यस्तत्वादेव चात्र नित्यत्वसाधकतयाऽनुक्तिर्भाष्यकाराणामित्यभिप्रेत्य तद्भाष्यं मनसि निधाय नित्यत्वाक्षेपं परिहरति **प्रागुक्तेति** ।

**वा०र०— नित्यत्वं साध्यते** तथा प्रतीयते इत्यर्थः । **प्रतिषेधेनेति** । न हि धर्मादीत्युक्तरीत्या इति शेषः । तन्नित्यतायां विवदमानमिति । यद्यपि प्रत्यक्षादिभ्योऽतिरिक्तं वेदरूपं प्रमाणं सिद्ध्यत् नित्यमेव सिद्ध्यतीति प्रागुपपादितम्, तथा च न नित्यत्वविवादः सम्भवति, तथापि धर्मादिप्रमाणस्य नित्यत्वे यो हेतुः पुरुषेषु अज्ञानादिदोषसद्भावेन पुरुषप्रणीतत्वानुपपत्तिरिति परिशेषोपपादनावसरेऽभिहितः सोऽत्र नास्ति परमाप्त-महेश्वरेण प्रणीतत्वाभ्युपगमात् इत्याशयेन विवदमानस्येति केचित् । तन्न । ईश्वरप्रणीतत्वपक्षस्यापि प्रागेव बहुधा निराकृतत्वात् । किन्तु तेन वेदप्रामाण्याङ्गीकारात् न तं प्रति परिशेषावसरः इति प्रामाण्याङ्गीकारादेव वेदरूपप्रमाणमुच्यते । नित्यताननुमितिस्तु वेदनित्यत्वे वेदरूपप्रमाणाभावशङ्कया ऋचः सामानीति विपरीत-प्रमाणदर्शनेन च । अत एव **स्वयूथ्या** इत्युक्तं मूले । वेदप्रामाण्यानङ्गीकारिणं प्रति प्रमाणत्वेन वेदः साध्यमानो नित्यतया एव साध्यते तदङ्गीकारिणं प्रति वेदेनैव नित्यत्वमात्रं प्रसाध्यते इति भेद इति मूले तात्पर्यम् । **न नित्यत्वमिति** । विवक्षितमिति शेषः ।

**स०व्र०— प्रागुक्तेति** । 'अविप्रलम्भस्तज्ज्ञानं' इत्यादिना जिज्ञासाधिकरणोक्तेरित्यर्थः ।

**विठ्ठल०— प्रागुक्तसामान्यसिद्धीति** । 'न हि धर्मादिसिद्धिः स्यान्नित्यवाक्यं विना क्वचिदि'त्या-दिनोक्तसामान्यसिद्धिपरिशेषाभ्यामित्यर्थः ।

**चषकः— प्रागुक्तेति** । 'न हि धर्मादिसिद्धिः स्यादि'त्यादिकं 'पुंवाक्यं ज्ञापकं न तदि'त्यन्ता-नुव्याख्याव्याख्यावसरे— धर्मादिकं प्रमाणं वस्तुत्वात् तच्च प्रमाणं प्रत्यक्षादीत्युक्तसामान्यसिद्धिपरिशेषाभ्या-मित्यर्थः ।

**॥ इति प्रागुक्तसामान्यसिद्धिपरिशेषाभ्यां वेदनित्यत्वसिद्धिः ॥**

* * *

**॥ अथ च तत्र श्रुत्युक्तत्वाच्च वेदनित्यत्वसिद्धिः ॥**

**३१ सु०— ये तु स्वयूथ्या वेदप्रामाण्यमङ्गीकृत्यापि तन्नित्यतां नानुमन्यन्ते तान्प्रति सूत्रसूचिताभिः श्रुतिभिस्तामुपपादयति विरूपेति ।**





**अनु०— 'विरूप नित्यया वाचा'**

**अनेन 'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिमि'ति श्रुतिमुपादत्ते ।**

**अत्र 'वाचो नित्यत्वमुच्यते, न वेदस्य । तदपि बहुकालीनत्वं भविष्यती'त्यतो 'नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परमं पदमि'ति, 'श्रुतिर्वाव नित्याऽनित्या वाव स्मृतयो याश्चान्या वाच' इति श्रुतिमुपादत्ते नित्ययेति ।**

**'नित्ययाऽनित्यया सदा' ।**
**इत्यादिश्रुतिभिर्वेदो नित्य इत्येव गम्यते ॥**

**व्याख्यानान्तरनिरासाय नित्ययेत्येतत् 'सदा विद्यमानये'ति व्याख्यातम् ।**

**वाक्यशेषे हि बहुकालीना अपि स्मृतीरनित्यपक्षे निक्षिप्य श्रुतिमेव नित्यामाह ।**

**परि०— स्वयूथ्याः** वैशेषिकादयः । एतेन पुनरुक्तिर्निरस्ता । तस्मा इत्यादिश्रुत्योरर्थो भाष्यटीकायामुक्तत्वादत्र नोक्तः । **व्याख्यानान्तरेति** । बहुकालीनत्वरूपव्याख्यानान्तरेत्यर्थः । सदेत्यस्यार्थः सदा विद्यमानयेति ।

**यादु०— अनेन तस्मै नूनमिति** । अभितो द्यौः प्रकाशो यस्यासावभिद्युस्तस्मै अभिद्यवे वृष्णे वर्षित्रे नूनं निश्चितं हे विरूप नित्यया वाचा वेदलक्षणया सुष्टुतिं शोभनां स्तुतिं चोदस्व प्रेरय कुर्विति मन्त्रार्थः । **अत्र वाच इति** । वागिन्द्रियस्येत्यर्थः । **व्याख्यानान्तरेति** । बहुकालीनत्वरूपव्याख्यानान्तरनिरासायेत्यर्थः ।

**वं०प०— स्वयूथ्याः** सत्यतावादित्वेन तार्किकाः । **तां** नित्यताम् । **वाचो** वागिन्द्रियस्य । 'तदपी'त्यतःपूर्वम् 'अस्तु वाऽत्र वेदस्य नित्यत्वमुच्यत इति तथाऽपी'ति शेषः । **तदपि** नित्यत्वमपि ।

**कं०रा०— सूत्रसूचिताभिरिति** । तथात्वं चशब्दादिति सूत्रांशसूचिताभिरित्यर्थः । **अत्रेति** । 'वाचा विरूप नित्यये'ति श्रुतौ वाचो नित्यत्वमुच्यते । न वेदस्य । वाक्शब्दस्य वेदपरत्वे मानाभावात् । **तथापीति** । तस्य तत्परत्वेऽपीयं श्रुतिर्वेदस्य बहुकालीनत्वपरा भविष्यतीत्यर्थः । **वाक्यशेष इति** । 'श्रुतिर्वाव





नित्या अनित्या वाव स्मृतय' इति वाक्यशेषे बहुकालीना अपि स्मृतिः अनित्यपक्षे निक्षिप्य श्रुतिमेव नित्यामाह । 'हिः यस्मात् तस्मान्नित्यये'त्यस्य 'सदा विद्यमानाये'ति व्याख्यानमेव युक्तं न तु 'बहुकालीनया' इति व्याख्यानान्तरमिति भावः ।

**श्रीनिधि०— सूत्रसूचिताभिरिति** । शब्दादिति सूत्रशेषसूचिताभिरित्यर्थः । **तदपि बहुकालीनत्वपरा भविष्यतीति** । वाचा विरूपनित्यया इति श्रुतिः बहुकालीनत्वपरा भविष्यतीत्युक्तम् । नित्येति नित्यताया उक्तत्वादित्यत आह **तदपीति** । बहुकालीनत्वमपीत्यर्थः । उपचरितमिति भावः । तदपि बहुकालीनत्वपरं भविष्यतीति पाठे तदपि वाचा विरूपनित्यया इति वचनमपीत्यर्थः । **व्याख्यानान्तरं** बहुकालीनत्वरूपं व्याख्यानान्तरम् । तन्निरासायेत्यर्थः ।

**शे०वा०—** नन्वेवं सामान्यसिद्धिपरिशेषाभ्यामेव वेदनित्यत्वसिद्धेः श्रुतिभिर्नित्यत्वसमर्थनं मूले अनर्थकमापन्नमित्यतोऽङ्गीकृत्य वेदप्रामाण्यं तन्नित्यतायां विवदमानं प्रति तत्समर्थनार्थत्वान्नानर्थक्यं तस्य इत्याशयेन उत्तरभाष्यं तथैव योजयति **ये त्विति** । ननु 'विरूप नित्यये'त्यादिरूपश्रुत्यप्रसिद्धेः 'इत्यादिश्रुतिभिः' इति भाष्यासामञ्जस्यमित्यतो नेदं श्रुतिप्रतीकोपादानं किन्त्वर्थानुवादोऽयमित्यभिप्रेत्य तदंशसूचिततत्तच्छ्रुतिस्वरूपमाह **अनेनेत्यादिना** । **वाच इति** । वागिन्द्रियस्येत्यर्थः । **व्याख्यानान्तरेति** । बहुकालीनत्वमात्रेण नित्यत्वमित्येवंरूपव्याख्यानान्तरनिरासायेत्यर्थः । बहुकालीनत्वं न नित्यत्वं किन्तु सदा विद्यमानत्वमेव इत्यत्र नियामकमाह **वाक्यशेषे हीति** ।

**स०व्र०— आख्यानान्तरेति** । बहुकालीनत्वादिरूपेत्यर्थः ।

**विठ्ठल०—** वेदातिरिक्तस्य नित्यत्वस्य उभयोः सम्मतेर्नित्यत्ववचनेनैव वेद एवेति पर्यवस्यतीत्यत आह **तदपीति** । नित्यत्ववचनमपीत्यर्थः । मूले सदेतिपदं व्यर्थमित्यत आह **व्याख्यानान्तरेति** । बहुकालीनत्वरूपव्याख्यानान्तरनिरासायेवेत्यर्थः । तत्त्वप्रकाशिकादौ श्रुत्यर्थो वर्णित इति नेहोक्तः । सन्न्यायरत्नावल्यां तु 'हे विरूप, नित्यया वाचा वेदेन तस्मै अभितो द्योतमानाय वृष्णे मनोरथवर्षिणे नूनं निश्चितं सुष्टुतिं शोभनां स्तुतिं चोदस्व प्रेरय गमयेति यावदि'त्युक्तः ।

**चषकः— स्वयूथ्याः** स्वसमुदायप्रविष्टाः वैशेषिकादयः । **तस्मै नूनमिति** । विरूपेति ऋषिसम्बोधनम् । सर्वतः प्रकाशमानाय भक्ताभिलषितवर्षणशीलाय, **नूनं** निश्चितं, वेदलक्षणया वाचा शोभना स्तुतिं चोदस्व प्रेरय कुर्विति मन्त्रार्थोऽवसेयः । **वाचः** वागिन्द्रियस्य । **व्याख्यानान्तरेति** । बहुकालीनत्वरूपव्याख्यानान्तरनिरासायेत्यर्थः ।

* * *





**॥ अथ वेदपौरुषेयताभिधायिश्रुतीनां दौर्बल्यम् ॥**

**३२ सु०— पौरुषेयतामपि श्रुतयोऽभिदधतीति चेन्न, आप्तोक्तत्वस्य दुरवधारणतायाः प्रागुक्तत्वेन पौरुषेयत्वे प्रामाण्यावधारणानुपपत्तिप्रसङ्गेन दुर्बलत्वात् । प्रामाण्यस्य स्वतस्त्वेन, 'अपौरुषेयत्वेऽपि कारणाभावात्प्रामाण्यं न स्यादि'ति प्रसङ्गस्याभासत्वात् । प्रबलश्रुत्यनुसारेण तत्तत्पुरुषप्रवर्तितत्वमेव तासामर्थोऽवगन्तव्यः । तथा च 'ऋचः सामानि जज्ञिरे', 'ऋग्वेद एवाग्नेरजायते'त्याद्युपपन्नं भवति । न ह्येकं वाक्यमनेककर्तृक-मिति सम्भवति, सम्भवति त्वनेकप्रवर्तितमिति ।**

**परि०— पौरुषेयतामपीति** । 'ऋचः सामानि जज्ञिरे' इति श्रुतौ पुरुषाज्जातत्वम् ऋगादीनामुच्यते ।

**यादु०— पौरुषेयतामपीति** । 'ऋचः सामानि जज्ञिरे' इत्याद्या इत्यर्थः । **प्रागुक्तत्वेनेति** । 'अविप्रलम्भस्तज्ज्ञानमि'त्यत्रोक्तत्वेनेत्यर्थः । **दुर्बलत्वादिति** । तथा च न सत्प्रतिपक्षतेति भावः । नन्वपौरुषेयत्वे श्रुतेराप्तत्वोक्तरूपकारणाभावात् प्रामाण्यं न स्यादिति प्रसङ्गबाधितत्वेनापौरुषेयत्वश्रुतेरपि दुर्बलत्वमित्यत आह **अपौरुषेयत्वेऽपीति** । कुत आभासत्वमित्यत उक्तं **प्रामाण्यस्य स्वतस्त्वेनेति** । गुणानपेक्षत्वेनेत्यर्थः ।

**वं०प०—** ननु श्रुतेः पौरुषेयत्वे यथा प्रामाण्यावधारणानुपपत्तिरूपतर्कबाधोऽस्ति । तथा प्रामाण्यस्य स्वतस्त्वमङ्गीकृत्य वेदस्यापौरुषेयत्वेऽपि यदि वेदोऽपौरुषेयः स्यात्तदा आप्तिरूपगुणलक्षणकारणाभावात् प्रामाण्यं न स्यादिति प्रसङ्गावतारादित्याशङ्क्याह **प्रामाण्यस्येति** । **आभासत्वादिति** । भवति च प्रमाणं वेदः तस्मात् आप्तोक्तत्वात् अपौरुषेयो नेति विपर्ययपर्यवसानं तर्के न सम्भवति । अपौरुषेयताया उक्तश्रुतिसिद्धत्वेन विपर्ययपर्यवसाने बाधापत्तेरिति भावः । यद्वा गुणलक्षणकारणाभावे प्रामाण्यं न स्यादिति तर्को न युक्तः । यादृच्छिकसंवादिस्थले सल्लिङ्गपरामर्शरूपगुणाभावेऽपि प्रामाण्यदर्शनेन व्यभिचारदर्शनात् तद्वत्प्रकृतेऽपौरुषेयत्वेन आप्तोक्तत्वरूपगुणलक्षणकारणाभावेऽपि प्रामाण्यमस्त्विति तर्क आभास इत्यर्थः । नन्वपौरुषेयताश्रुतयो 'ऋचः सामानी'ति पौरुषेयताऽभिधायकश्रुत्या सत्प्रतिपक्षा इति चेत् तत्राह **प्रबलेति** । 'वाक्यशेषे ही'त्याद्युक्तरीत्या प्राबल्योपेतनित्ययाऽनित्ययेत्यादिश्रुत्यनुसारेणेत्यर्थः । प्रत्युतेदं वाक्यं पौरुषेयतापक्षे विरुद्धमित्याह **न हीति** । पुरुषसूक्ते 'ऋचः सामानी'ति ऋग्वेदसामवेदयोः पुरुषनामकभगवज्जातत्वं कथ्यते । तथा तयोरेव वेदयोः 'ऋग्वेद एवाग्नेरजायतादित्यात्सामवेद' इति वाक्याभ्यामग्न्यादित्यजातत्वं कथ्यते । न हीदं सम्भवति । एकस्य वाक्यस्यानेककर्तृकताऽयोगादिति भावः । प्रवर्तितत्वपक्षे तु नानुपपत्तिरित्याह **सम्भवतीति** ।





**कं०रा०—** ननु वेदस्य पौरुषेयतामिति 'ऋग्वेद एवाग्नेरजायते'त्यादि श्रुतयो अभिदधति । अतः सत्प्रतिपक्षत्वात् कथं 'विरूपनित्यये'त्यादिश्रुतिभिर्वेदापौरुषेयत्वसिद्धिरिति शङ्कते **पौरुषेयतामिति** । **आप्तोक्तत्वस्येति** । वेदस्य पौरुषेयत्वे आप्तोक्तत्वस्य दुरवधारणतायाः प्रागुक्ततया प्रामाण्यावधारणानुपपत्तिप्रसङ्गेन वेदपौरुषेयत्वाभिधात्रीणां श्रुतीनां दुर्लभत्वादित्यर्थः । ननु वेदापौरुषेयत्वेऽपि प्रामाण्यकारणस्य वक्तृवाक्यार्थयथार्थज्ञानलक्षणगुणस्याभावात् तत्प्रामाण्यं न स्यादित्यनिष्टप्रसङ्ग इत्यत आह **प्रामाण्यस्येति** । **प्रबलेति** । प्रबलवेदापौरुषेयत्वश्रुत्यनुसारेण अग्ने ऋग्वेदः वायोर्यजुर्वेदः आदित्यात्सामवेद इत्यादि श्रुतीनां तत्तत्पुरुषप्रवर्तितत्वमेवार्थोऽभ्युपगन्तव्यः । न तु तत्तत्कर्तृकत्वमित्यर्थः ।

**शे०वा०—** **श्रुतय इति** । 'ऋचः सामानि जज्ञिरे' इत्याद्या इति शेषः । तथा च पौरुषेयत्वप्रतिपादकश्रुतिभिः सत्प्रतिपक्षत्वान्नोदाहृतश्रुतिभिरपौरुषेयत्वसिद्धिरिति भावः । तर्कपराहतत्वेन पौरुषेयत्वश्रुतीनां दुर्बलत्वान्न सत्प्रतिपक्षत्वमित्याह **आप्तोक्तत्वस्येति** । **प्रागिति** । अविप्रलम्भस्तज्ज्ञानमित्यादिनेत्यर्थः । ननु अपौरुषेयत्वे श्रुतेराप्तोक्तत्वरूपकारणाभावात् प्रामाण्यं न स्यादिति तर्कपराहतत्वेनापौरुषेयत्वश्रुतेरपि दुर्बलत्वात् श्रुतिद्वयस्यापि साम्यमेवेति मुक्तः सत्प्रतिपक्ष इत्याशङ्क्याह **अपौरुषेयत्वेऽपीति** । अभासत्वमेवोपपादयितुं प्रामाण्यस्य स्वतस्त्वेनेत्युक्तम् । गुणानपेक्षत्वेनेत्यर्थः । का तर्हि पौरुषेयत्वश्रुतीनां गतिरित्यत आह **प्रबलश्रुत्यनुसारेणेति** । प्रबलनित्यत्वश्रुत्यनुसारेणेत्यर्थः । सामान्यसिद्धिपरिशेषरूपन्यायोपेतत्वेन च नित्यत्वश्रुतेः प्राबल्यमित्यवधेयम् । तर्कपराहतिशून्यत्वेन नित्यत्वश्रुतेः प्राबल्यमित्यप्याहुः । तत्तत्पुरुषप्रवर्तितत्वमेवेत्यवधारणमुपपादयति **तथा चेति** । **तथात्व एव च** तत्तत्पुरुषप्रवर्तितत्वार्थत्व एव चेत्यर्थः । कथं तत्तत्कृतत्वार्थत्वेऽनुपपन्नत्वमित्यतस्तदुपपादयति **न हीति** । तत्तत्प्रवर्तितत्वार्थत्वे तदुपपत्तिमुपपादयति **सम्भवति त्विति** ।

**वा०र०—** **ऋचः सामानीति** । अत्र 'तस्मात् यज्ञात्' इत्यनेन सम्बन्धस्य सिद्धवत्कारेण ऋचः इत्यादिकमेवोदाहृतम् । अन्यथा ऋचः सकाशात् इति प्रतीयेत । एवं तत्त्वनिर्णयटीकायामपि तावन्मात्रोदाहरणस्याभिप्रायः । 'छन्दांसि जज्ञिरे' इति तर्कताण्डवे उदाहृतम् । तत्तु छन्दःशब्दस्य ऋचः इत्यादि समभिव्याहारेण वेदपरत्वं चास्ति । सामान्यविशेषभावेन युक्त्याश्रयणात् । अथर्ववेदस्य उत्पत्तिलाभार्थत्वाच्च छन्दःशब्दस्य वेदपरताया अपि आवश्यकत्वम् । वेदत्रयस्यैव त्रयो वेदा इत्याद्यनुसारेण संव्यवहारविषयत्वाशयेन भागवतद्वितीयस्कन्धगतपुरुषसूक्तव्याख्यानस्पष्टीकरणावसरे सप्त छन्दांसि इत्येवाभिनवतीर्थैः उक्तमिति ज्ञेयम् । **का तर्हीति** । पौरुषेयत्वप्रतिपादकश्रुतीनां तर्हि कोऽर्थः इत्यर्थः ।

**स०व्र०—** तर्कपराहतत्वेनापौरुषेयत्वश्रुतेर्दुर्बलत्वान्न सत्प्रतिपक्षतेत्यत आह **आप्तोक्तत्वस्येति** । अपौरुषेयत्वश्रुतेः तर्कपराहतिमाशङ्क्य परिहरति **प्रामाण्यस्येति** । **प्रबलश्रुत्यनुसारेणेति** । 'नित्ययाऽनित्यया स्तौमि' इत्यादिश्रुत्यनुसारेणेत्यर्थः । तर्कपराहतिशून्यत्वेन प्रबलत्वादिति भावः ।





**विठ्ठल०— श्रुतयोऽभिदधतीति** । 'ऋचस्सामानि जज्ञिरे', 'ऋग्वेद एवाग्नेरजायते'त्यादिश्रुतय इत्यर्थः । **प्रागुक्तत्वेनेति** । अविप्रलम्भस्तदज्ञानं तत्कृतत्वादयोऽपि चेत्यर्थः । **दुर्बलत्वादिति** । पौरुषेयाभिप्रायकश्रुतीनामिति शेषः । ननु वेदापौरुषेयत्वेऽपि प्रामाण्यकारणस्याप्तिपूर्वकत्वस्याभावात् प्रामाण्यं न स्यादिति प्रसङ्गस्तुल्य इत्यत आह **प्रामाण्यस्येति** । स्वतस्त्वेन हेतुना भासत्वादिति सम्बन्धः । तर्हि 'ऋचस्सामानि जज्ञिर' इत्यादि श्रुतीनां का गतिरित्यत आह **प्रबलेति** । **अनेककर्तृकमिति** । ऋचस्सामानीत्यादौ ऋगादीनां भगवत्कर्तृकत्वश्रवणात् तेषामेव ऋग्वेद इत्यग्न्यादिकर्तृकताश्रवणादिति भावः ।

**चषकः— श्रुतयः** 'ऋचः सामानि जज्ञिरे' इत्याद्याः । **प्रागुक्तत्वेनेति** । 'अविप्रलम्भस्तज्ज्ञानमि'त्यत्रोक्तत्वेनेत्यर्थः । **प्रामाण्यस्य स्वतस्त्वेनेति** । गुणनैरपेक्ष्यलक्षणेनेत्यर्थः ।

**॥ इति वेदपौरुषेयताभिधायिश्रुतीनां दौर्बल्यम् ॥**

**॥ इति श्रुत्युक्तत्वाच्च वेदनित्यत्वसिद्धिः ॥**

* * *

**॥ ततश्च तत्र श्रुतेः पिपीलिकालिपिवदबुद्धिपूर्वकत्वमूलकाप्रामाण्यशङ्कानिरसनम् ॥**

३३ **सु०— यदपि पिपीलिकालिपिवदबुद्धिपूर्वकत्वादप्रामाण्यं श्रुतेरिति, तन्निराकरोति पिपीलिकेति ।**

## अनु०— पिपीलिकालिपिश्चापि प्रमाणमविरोधतः ।

**चो यस्मादित्यर्थे, बोधकत्वसमुच्चये वा । तस्मात् दृष्टान्तस्य साध्यविकलत्वात् असदनुमानमिति शेषः । न केवलं श्रुतिः किन्तु पिपीलिकालिपिरपीति अपेरर्थः ।**

**परि०— बोधकत्वसमुच्चये वेति** । पिपीलिकालिपिश्च बोधिकेत्यर्थः ।

**शे०वा०—** अपिशब्देनैव समुच्चयसिद्धेश्चशब्दवैयर्थ्यमित्यतोऽर्थान्तरसमर्पणार्थत्वान्न वैयर्थमित्याह **चेति** । प्रमाणं चेति भिन्नक्रमत्वमाश्रित्य समुच्चयार्थश्चशब्द इत्यभिप्रेत्य समुचेतव्यं दर्शयति **बोधकत्वसमुच्चये वेति** । अनेन मूलेऽविरोधमात्रेण कथं प्रामाण्यवर्णनमिति शङ्का निरस्ता भवति । बोधकस्य सतोऽविरोधे प्रामाण्यावश्यम्भावादिति द्रष्टव्यम् । तर्हि समुच्चयस्य चशब्देनैव सिद्धेरपिशब्दवैयर्थ्यमित्यतः चशब्दोक्तसमुच्चयभिन्नसमुच्चयप्रतिपादनार्थत्वात् तस्य नानर्थक्यमित्यभिप्रेत्य समुच्चेतव्यप्रदर्शनपूर्वकमपिशब्दोक्तसमुच्चयं दर्शयति **न केवलमिति** ।





**वा०र०— प्रमाणं चेति । भिन्नक्रमत्वमिति ।** ननु अनेन मूल इत्यादि तमुपपादयतीत्यन्तटीकाग्रन्थे प्रामाण्येऽविरोधस्येव बोधकत्वस्यापि उपयोगितया व्याख्यानदर्शनेन तदनुसारेण विरोधतश्च इति चशब्द-सम्बन्धप्रदर्शनं कार्यम् । तत्कथं प्रमाणं चेति सम्बन्धप्रदर्शनमिति चेत् न । अविरोधतः इत्यनन्तरं वक्तव्यतया प्राप्तस्य ततःपूर्वमुक्तिमात्रस्य सत्त्वेन प्रामाण्ये समुच्चयोपपत्तेः । अवश्यं च प्रथमतो बोधकत्वोक्तिः तथैव प्राक् प्रयोगात् अतो बोधकत्वस्य प्रथमतो वचनार्थमुक्तरीत्या सम्बन्धप्रदर्शनं इति ध्येयम् । पुरुषलिपाविति एवमादिप्रयोगस्थले लिपिस्थले इत्यादिरर्थः । तेन तत्रेत्यादि प्रयोगोपपत्तिः । पिपीलिकालिपौ लेखकस्येति पाठः । मध्ये तुशब्दो लेखकागतः ।

**स०व्र०— चो यस्मादित्यर्थ इति ।** उद्देश्यसमर्पको यच्छब्दः । अपिशब्दस्य दृष्टान्तान्तरसमुच्चाय-कत्वाभावाद्वैयर्थमित्यत आह **न केवलं श्रुतिरिति ।**

**विठ्ठल०— बोधकत्वसमुच्चय इति ।** प्रमाणं बोधकश्चेति समुच्चय इत्यर्थः ।

* * *

**॥ तत्र लिपेः स्मरणहेतुत्वात् प्रामाण्यम् ॥**

**३४ सु०— अप्रामाण्यं खलु पिपीलिकालिपेः अबोधकत्वेन वा स्याद्विपरीतबोधक-त्वेन वा ।**

**नाद्यः, अनुभवविरुद्धत्वात् । अन्यथा पुरुषलिपेरप्यबोधकत्वं स्यात्, तथा च तद्वैयर्थ्यमापद्येत । अपि चैवं सत्याकाशादिकमेवोदाहियेत, तत्किं पिपीलिकालिपि-गवेषणया ।**

**न द्वितीयः । तद्धि बलवत्प्रमाणविरोधतः कल्पनीयम्, अन्यथाऽतिप्रसङ्गात् । न च पिपीलिकालिपिबोधितेऽर्थे प्रमाणविरोधोऽस्ति, अतः कथमसावप्रमाणं स्यात् ।**

**स्यादेतत् । लिपिस्तावन्न प्रमाणं पृथक्, अनुप्रमाणत्रित्वाभ्युपगमात् । न च प्रत्यक्षागमयोरन्तर्भवति, अतल्लक्षणत्वात् । अतोऽनुमानमेवेति वाच्यम् । तच्च लेखक-बुद्धिस्थशब्दविषयं वा तदवबुद्धार्थविषयं वा स्यात् । न चैतत्पिपीलिकालिपौ सम्भवति, प्रमाणबाधितत्वात् । तत्कथमसौ प्रमाणमिति । मैवम् । तथा सत्येडमूकलिपेरप्यप्रामाण्य-**





**प्रसङ्गात् । भवतु साऽप्रमाणमितरा त्वनुमानमिति चेन्न, एडमूकलिपेरपि सांव्यावहारिकत्वदर्शनात् ।**

**किञ्चेतरत्राप्यनुमाने किमेडमूकव्यावृत्त्यर्थं किमपि विशेषणमुपादेयमुत नेति वाच्यम् ॥ नाद्यः, सन्दिग्धासिद्धिप्रसङ्गात् । निर्णीतलेखकैव लिपिरनुमानमिति चेन्न, अनिर्णीतलेखकाया अपि सांव्यावहारिकत्वात् ॥ न द्वितीयः, एडमूकलिपावनैकान्त्यात् ।**

**अथ मूललेखकबुद्धिस्थशब्दार्थानुमाने न कोऽपि दोष इति मतम् । तदपि न, पिपीलिकालिपावनैकान्त्यात्, तद्व्यावर्तने च सन्दिग्धासिद्धेः । न हि पिपीलिकालिपेः पुरुषलिपेरस्ति कश्चिद्विशेषो येन नेयं पिपीलिकालिपिरिति निश्चिनुयात् ।**

**तस्मात्पुरुषलिपिरपि पदमिव पदार्थस्य वर्णानां स्मरणहेतुरेष्टव्या, तत्समं पिपीलिकालिपावपि ।**

**स्मृतेश्च प्रमितित्वं वक्ष्यामः ।**

**परि०— अपि चैवं सतीति** । पिपीलिकालिपेः सर्वथैवाबोधकत्वे सतीत्यर्थः । लिपीनां वर्णस्मृतिजनकत्वेन प्रामाण्यं स्वाभिमतं स्फुटीकर्तुं पराभिप्रेतमनूद्य निराह **स्यादेतदित्यादिना** । **लेखकबुद्धिस्थेत्यादि** । इयं लिपिः कर्तृबुद्धिस्थशब्दपूर्विका तदवगतार्थपूर्विका वा लिपित्वाचैत्रलिखितलिपिवदित्येवमिति भावः । **एडमूकलिपेरिति** । प्राज्ञलिखितलिपिं दृष्ट्वा लिखत्येडमूक इति नाश्रयासिद्धिरिति भावः । **किमपि विशेषणमिति** । अनेडमूकलिपित्वादित्यादिरूपविशेषणमित्यर्थः । **सन्दिग्धासिद्धीति** । पक्षीकृतलिपिरेडमूकलिपिर्वा तदन्या वेति सन्देहावस्कन्दनेन तदन्यैवेति निर्णयासम्भवादिति भावः । **मूललेखकेति** । यदीयलिपिं दृष्ट्वा एडमूको लिखितवान् तद्बुद्धिस्थेत्यर्थः । न कोऽपि दोष इति विभागः । ननु स्मरणहेतुत्वेऽपि स्मृतेरप्रमितित्वेन लिपेः अप्रामाण्यमेवेत्यत आह **स्मृतेश्चेति** । 'अनुभूतिः प्रमाणं चेत्केन स्मृतिरपोद्यते । पूर्वानुभूते किं मानमित्युक्ते स्यात्किमुत्तरम् ।' इति उत्तरत्रैतदधिकरण एव वक्ष्याम इत्यर्थः ।

**गु०दी०— न हि पिपीलिकालिपेः पुरुषलिपेः** इत्यत्र पुरुषलिपिपदेन मिश्रिताद्भिः श्रीतालीपत्रे लिखितमषीलिपिः गृह्यते । कण्ठलिखितलिपौ पिपीलिकालिपितो व्यावृत्तेः सर्वानुभवसिद्धत्वेनोक्तसन्दिग्धासिद्ध्यनुपपत्तेः ।





**यादु०— तच्च लेखकबुद्धिस्थेति** । विप्रतिपन्ना लिपिः स्वसङ्केतितशब्दज्ञानपूर्विका स्वसङ्केतितशब्दप्रतिपाद्यार्थज्ञानपूर्विका वा शब्दस्मारकलिपित्वात् सम्प्रतिपन्नलिपिवदित्यनुमानं लेखकस्य शब्दविषयमर्थविषयं वा ज्ञानमादाय पर्यवस्यतीत्यर्थः । **एडमूकलिपेरपीति** । स्वस्य लिपिसङ्केतितशब्दज्ञानाद्यभावेऽपि तज्ज्ञ-अन्यलिखितलिपिदर्शनमात्रेणैडमूकलिखितलिपेरपीत्यर्थः । **इतरत्रापीति** । अमूकपुरुषलिपावपीत्यर्थः । **एडमूकव्यावृत्त्यर्थमिति** । एडमूकलिखितलिपिव्यावृत्त्यर्थमित्यर्थः । **किमपि विशेषणमिति** । एडमूकालिखितत्वं लिपिविशेषणमित्यर्थः । **सन्दिग्धासिद्धीति** । पक्षीकृतलिपावप्येडमूकलिखितत्वसन्देहादिति भावः । **अथ मूललेखकेति** । एडमूकलिपिर्यस्य पुरुषस्य लिपिं दृष्ट्वा लिखिता स मूललेखकस्तद्बुद्धिस्थशब्दार्थयोरनुमानेनेत्यर्थः । **तत्सममिति** । तथा च पिपीलिकालिपेः स्मरणसाधनत्वेन प्रत्यक्षान्तर्भावान्न पृथक्प्रामाण्यमिति भावः । ननु स्मृतेरप्रामाण्यात् कथं तत्साधनत्वेन लिपेः प्रामाण्यमित्यत आह **स्मृतेश्चेति** । 'प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते' इत्यादाविति शेषः ।

**वं०प०— अन्यथेति** । अनुभवविरुद्धमप्यबोधकत्वं यद्यङ्गीक्रियत इत्यर्थः । इष्टापत्तिरिति चेत्तत्राह **तथा चेति** । **तदिति** । पुरुषलिपीत्यर्थः । **एवं सति** लिपेः सर्वथाऽबोधकत्वे । **आकाशादिकम्** अबोधकत्वेनोभयसिद्धम् । तथा च श्रुतिरबोधकतयाऽप्रमाणमित्यत्राकाशनिभेति वाच्यम् । किं पिपीलिकालिपिनिभेति विप्रतिपन्नबोधकत्वोपेतपिपीलिकालिपिग्रहणेनेति भावः । **अन्यथा** बलवत्प्रमाणविरोधाभावेऽपि यदि तद्विपरीतबोधकत्वं कल्प्यत इत्यर्थः । **अतदिति** । प्रत्यक्षागमलक्षणाक्रान्तत्वाभावादित्यर्थः । प्रसङ्गादुक्तरीत्या प्रमाणबाधस्य तत्रापि साम्यादिति ज्ञेयम् । **सा** एडमूकलिपिः । **इतरेति** । एडमूकातिरिक्तपुरुषलिपिरित्यर्थः । तत्रोक्तबाधाभावादिति हृदयम् । ननु पुरुषलिपिपक्षीकारेण तत्र मूललेखकबुद्धिस्थशब्दार्थानुमानकरणादेडमूकलिपौ साक्षाल्लेखकबुद्धिस्थशब्दार्थविषयकत्वाभावेऽप्युक्तसाध्यसत्त्वान्न लिपित्वहेतोर्व्यभिचार इति शङ्कते **अथेति** । ननु पिपीलिकालिपिव्यतिरिक्तत्वं हेतुविशेषणं विवक्षितमतो न व्यभिचार इत्यत आह **तद्व्यावर्तने चेति** । तामेवोपपादयति **न हीति** ।

**कं०रा०— अपि चैवमिति** । पिपीलिकालिपेरबोधकत्वेनाप्रामाण्ये सति अबोधकत्वप्रयुक्ताप्रामाण्यस्याकाशादौ सुप्रसिद्धत्वाद्वेदः प्रमाणं न भवति अबुद्धिपूर्वकत्वादित्यत्र आकाशादिकमेव दृष्टान्तीक्रियेत किं पिपीलिकालिपिगवेषणयेत्यर्थः । **प्रमाणबाधितत्वादिति** । पिपीलिकायाः शब्दानुसन्धानमर्थानुसन्धानं च नास्तीति निश्चितत्वेन प्रमाणबाध इति भावः । **तथा सतीति** । लिपेर्लेखकबुद्धिस्थशब्दविषयत्वे तदवबुद्धार्थविषयत्वे वाऽन्यलिखितलिपिदर्शनमात्रेण लिखितलिपेरेडमूकस्य शब्दानुसन्धानार्थानुसन्धानयोरभावेन तल्लिखितलिपेर्लेखकबुद्धिस्थशब्दविषयत्वस्य तदवबुद्धार्थविषयत्वस्य वा अयोगादप्रामाण्यप्रसङ्ग इति भावः । एडमूकलिपेरप्रामाण्यमिष्टमेवेति शङ्कते **भवत्विति** । **निर्णीतलेखकैवेति** । तथा चेडमूककर्तृकलिपिव्यावृत्त्यर्थमनेडमूककर्तृकत्वादिविशेषणोपादानेन सन्दिग्धासिद्धिरिति भावः । निर्णीतोल्लेखको यस्याः सेति बहुव्रीहिसमासानन्तरनिष्पन्नस्यापः सुषरत्वेन बहुपरिव्राजकेत्यादिवदकारस्येत्वाभावः । मूललेखकेति मूललेखस्य बुद्धित्वस्थापः





शब्दोऽर्थो वा तदनुमाने एडमूकलिपेरप्रामाण्यप्रसङ्गः तत्रानैकान्त्यं वा नास्ति मूललेखकबुद्धिस्थशब्दस्य तादृशार्थस्य वा तत्रापि सत्त्वादिति भावः । **पिपीलिकालिपावनैकान्त्यादिति** । पिपीलिकालिपौ मूललेखिकायाः पिपीलिकायाः बुद्धिस्थस्य शब्दस्यार्थस्य चाभावादिति भावः । **तद्व्यावर्तन इति** । पिपीलिकालिपिभिन्नत्वादिविशेषणदानेन तद्व्यावर्तने च पिपीलिकालिपिभिन्नत्वस्य निश्चेतुमशक्यत्वेन सन्दिग्धासिद्धेरनुमानमयुक्तमिति भावः । ननु पुरुषलिपिगतेन विशेषेण पिपीलिकालिपिभिन्नत्वस्य निश्चेतुं शक्यत्वात् कथं सन्दिग्धासिद्धिरित्यत आह **न हीति** । **तस्मादिति** । लेखकबुद्धिस्थशब्दाद्यनुमानकत्व-स्यायोगाद्यथापदमर्थस्य स्मरणे हेतुः, तथा पुरुषलिपिरपि वर्णानां स्मरणे हेतुरेष्टव्येत्यर्थः । **तत्सममिति** । वर्णस्मृतिहेतुत्वं पिपीलिकालिपावपि सममित्यर्थः । ननु पिपीलिकालिपेर्वर्णस्मृतिहेतुत्वेऽपि स्मृतेरप्रमितत्वेन प्रमितिसाधनत्वाभावात् कथं प्रामाण्यमित्यत आह **स्मृतेश्चेति** ।

**श्रीनिधि०— अपि चैवं सत्याकाशादिकमेवेति** । उभयोरप्यबोधकत्वाविशेषादिति भावः । **अतल्लक्षणत्वादिति** । तयोः प्रत्यक्षागमयोर्लक्षणं यस्मिन् तत्तल्लक्षणं तद्भिन्नं अतल्लक्षणं तत्त्वादित्यर्थः । **सांव्यावहारिकत्वदर्शनात्** समीचीनव्यवहारजनकत्वदर्शनात् । **निर्णीतलेखकैवेति** । तथा च सन्दिग्धा-सिद्धिरिति भावः । **एडमूकलिपावनैकान्त्यादिति** । तद्रीत्येति भावः ।

**श०वा०—** चशब्दोक्तबोधकत्वस्याविरोधपदसूचितविपरीतबोधकत्वाभावस्य च कथं प्रामाण्यसाधने उपयोग इत्यतस्तमुपपादयति **अप्रामाण्यं खल्विति** । **अन्यथेति** । पिपीलिकालिपेरबोधकत्व इत्यर्थः । इष्टापत्तिं परिहरति **तथा चेति** । पुरुषलिपेरबोधकत्वे चेत्यर्थः । पिपीलिकालिपेरबोधकत्वाङ्गीकारेऽबोधकस्यानेकस्य गगनादेरेवाबुद्धिपूर्वकत्वेनाप्रामाण्यानुमाने दृष्टान्ततयोदाहरणसम्भवात् तदनुदाहृत्य पिपीलिकालिपिमेकामेव दृष्टान्ततयोदाहरतः परस्य कथमचातुर्यं न स्यादित्याह **अपि चेति** । **अन्यथेति** । बलवत्प्रमाणविरोधादे-रभावेऽपि विपरीतबोधकत्वकल्पने पुरुषलिपेरपि विपरीतबोधकत्वप्रसङ्गादित्यर्थः । तर्ह्यस्तु बलवत्प्रमाण-विरोधादेव पिपीलिकालिपेर्विपरीतबोधकत्वमित्यत आह **न चेति** । लिपिः प्रमाणमिति वदन् प्रष्टव्यः किं सा स्वतन्त्रं प्रमाणं किं वा प्रत्यक्षाद्यन्तर्गतमिति विकल्पद्वयं मनसि निधायाद्यमनूद्य दूषयति **लिपिस्तावदिति** । लिपेः स्वातन्त्र्येण प्रामाण्येऽनुप्रमाणचातुर्विध्यप्रसक्त्या तत्त्रित्वाभ्युपगमो बाधितः स्यादित्यर्थः । द्वितीयेऽपि किं प्रत्यक्षागमयोरन्तर्भाव किं वाऽनुमाने इति विकल्प्याद्यं प्रत्याह **न चेति** । **अतल्लक्षणत्वादिति** । निर्दोषार्थेन्द्रियसन्निकर्षत्वनिर्दोषशब्दत्वरूपप्रत्यक्षागमलक्षणानाक्रान्तत्वादित्यर्थः । अतो द्वितीय एवाङ्गीकार्य इत्याह **अत इति** । अस्तु तर्हि पुरुषलिपिवत्पिपीलिकालिपिरप्यनुमानमेवेत्यत आह **तच्चेति** । विप्रतिपन्ना लिपिः स्वसङ्केतितशब्दज्ञानपूर्विका स्वसङ्केतितशब्दप्रतिपाद्यार्थज्ञानपूर्विका वा शब्दस्मारकलिपित्वादित्यनुमानं लेखकस्य शब्दविषयमर्थविषयं वा ज्ञानमादाय पर्यवस्यतीत्यर्थः । ततश्च पुरुषलिपौ लेखकपुरुषस्य शब्दार्थविषयज्ञानवत्त्वेन





पर्यवसन्नार्थस्य तत्राबाधितत्वात् पुरुषलिपेरनुमानत्वेऽपि पिपीलिकालिपौ लेखकस्य तदुभयज्ञानवत्त्वाभावेन पर्यवसन्नार्थस्य तत्र बाधितत्वान्नास्या अनुमानत्वमिति भावः । **एडमूकलिपेरपीति** । 'स्यादेडे बधिरः प्रज्ञौ गडुलः कुकरे कुणिरि'त्यभिधानात् एडो बधिरश्चासौ मूकश्चैडमूकस्तल्लिपेरित्यर्थः । स्वस्य लिपिसङ्केतित-शब्दज्ञानाद्यभावेऽपि तदभिज्ञपुरुषान्तरलिखितलिपिदर्शनमात्रेण लिखिततल्लिपेरपीति यावत् । तत्राप्युक्तन्यायेन लेखकस्यैडमूकतया शब्दादिविषयकज्ञानाभावेन पर्यवसन्नार्थस्य तत्र बाधितत्वादिति भावः । **इतरा त्विति** । अनेडमूकपुरुषलिपिरित्यर्थः । तत्र लेखकपुरुषस्य शब्दादिज्ञानवत्तया पर्यवसन्नार्थस्य तत्राबाधितत्वादिति भावः । **सांव्यावहारिकत्वेति** । तथा च न तस्या अप्रामाण्यमिति नेष्टापत्तिरिति भावः । **इतरत्राप्यनुमान इति** । इतरद्यदनुमानमनेडमूकपुरुषलिपिरूपमिति सामानाधिकरण्येनान्वयः । **एडमूकव्यावृत्त्यर्थमिति** । एडमूक-लिखितलिपिव्यावृत्त्यर्थमित्यर्थः । **विशेषणमिति** । अनेडमूकलिखितत्वरूपमित्यर्थः । **सन्दिग्धासिद्धि-प्रसङ्गादिति** । पक्षीभूतपुरुषलिपावेडमूकलिपिव्यतिरिक्तत्वरूपहेतुविशेषणस्य निश्चायकप्रमाणाभावेन निश्चेतु-मशक्यत्वादिति भावः । **निर्णीतेति** । तथा च तल्लिपावेडमूकलिपिव्यतिरिक्तत्वनिश्चयोपपत्तेर्न सन्दिग्धासिद्धिरिति भावः । **सांव्यावहारिकत्वादिति** । तथा च तत्रोक्तनिश्चयानुपपत्त्या सन्दिग्धासिद्धितादवस्थ्यमिति भावः । **शब्दार्थानुमान इति** । शब्दार्थयोरनुमान इत्यर्थः । **न कोऽपि दोष इति** । एडमूकलिपिव्यतिरिक्तत्वस्य लिपि-विशेषणस्यानुपादानान्न सन्दिग्धासिद्धिः । एडमूकलिपौ साक्षाल्लेखकबुद्धिस्थशब्दार्थविषयत्वाभावेऽपि एडमूको यस्य लेखकस्य लिपिं दृष्ट्वा लिखति तल्लेखकबुद्धिस्थशब्दार्थविषयवत्तायाः सत्त्वेन विवक्षितसाध्यस्य तत्रापि सत्त्वान्न व्यभिचारोऽपीत्येवं पक्षद्वयोक्तदोषो नेत्यर्थः । **अनैकान्त्यादिति** । तत्र मूललेखकबुद्धिस्थशब्दार्थ-विषयत्वाभावादिति भावः । ननु च पिपीलिकालिपिव्यतिरिक्तत्वेन लिपिविशेषणान्न पिपीलिकालिपावपि व्यभिचार इत्यत आह **तद्व्यावर्तने चेति** । सन्दिग्धासिद्धिमेवोपपादयति **न हीति** । **तत्सममिति** । तथा च पुरुषलिपेरिव पिपीलिकालिपेरपि स्मरणसाधनत्वेन प्रत्यक्षान्तर्भावसम्भवेन पृथक् प्रामाण्याभावान्नानुप्रमाण-त्रित्वविरोध इति भावः । ननु च न लिपेः स्मरणसाधनत्वमात्रेण प्रामाण्यं स्मृतेः प्रमात्वाभावेन प्रमाकरण-त्वाभावादित्यत आह **स्मृतेश्चेति** । **वक्ष्याम इति** । 'प्रामाण्यं नानुवादस्य स्मृतेरपि विहीयते' इत्यादिना साधकबाधकभावाभावव्युत्पादनेनेति शेषः ।

**वा०र०— तदुभयेति** । शब्दोऽर्थश्चेत्येतत् उभयेत्यर्थः । गडुलः कुकुरः इत्यपि कोशान्तरे पाठः । एडमूकोऽपीत्येतद्व्याख्याने विस्तृतमेतत् प्राक् । **एडमूकलिखितलिपीति** । अनेन एडमूकशब्दः तल्लिपिपरः इत्युक्तं भवति । हेतौ लिपिपदसत्त्वेन लिपिव्यावर्तकविशेषणत्वोक्तेरेव श्लिष्टत्वादिति भावः । एकमुखेति क्वचित् एकपदं टीकायां लेखकप्रयुक्तम् । शब्दस्य योऽर्थ इति प्रतीतिनिरासाय आह **शब्दार्थयोरिति** ।

**स०व्र०— अनुप्रमाणत्रित्वाभ्युपगमादिति** । लिपेर्ज्ञानरूपत्वाभावेन न केवलप्रमाणत्वप्रसक्तिरिति भावः । **तथा सति एडमूकलिपेरपीति** । एडश्चासौ मूकश्चेति विग्रहः । **इतरा त्विति** । एडमूकाति-रिक्तपुरुषलिपिरित्यर्थः । **इतरत्राप्यनुमाने इति** । इतरत् एडमूकलिपिव्यतिरिक्तं यदनुमानं पुरुषलिपिरूपो यो हेतुः





तत्रेत्यर्थः । **सन्दिग्धासिद्धीति** । एडमूकलिपिव्यावृत्त्यर्थं विशेषणोपादाने विमता पुरुषलिपिः लेखकबुद्धिस्थ-शब्दादिविषयज्ञानपूर्विका एडमूकलिपिव्यतिरिक्तलिपित्वादिति वक्तव्यम् । तत्र च लिपौ एडमूकलिपिव्यति-रिक्तत्वरूपविशेषणनिश्चायकप्रमाणाभावेन सन्दिग्धासिद्धिप्रसङ्गादिति भावः ।

ननु पुरुषलिपिपक्षीकारेण तत्र मूललेखकबुद्धिस्थशब्दार्थानुमानकरणात् एडमूकलिपौ साक्षाल्लेखक-बुद्धिस्थशब्दार्थविषयत्वाभावेऽपि विवक्षितसाध्यस्य सत्त्वान्न व्यभिचार इति शङ्कते **अथेति** । यस्य लिपिं दृष्ट्वा कोऽपि लिखति स मूललेखकः । ननु पिपीलिकालिपिव्यतिरिक्तत्वं हेतुविशेषणमिति न व्यभिचारः तत्राह **तद्व्यावर्तने चेति** । सन्दिग्धासिद्धिमेव व्युत्पादयति **न हीति** । **वक्ष्याम इति** । 'केन स्मृतिरपोद्यते । पूर्वानुभूते किं मानमित्युक्ते स्यात्किमुत्तरम्' इत्यादिना अस्मिन्नेव पादे वक्ष्याम इति ।

**विठ्ठल०**— पिपीलिकालिपेः प्रामाण्यमेव कुतस्सिद्धमित्यत आह **आप्रामाण्यं खल्विति** । तच्च लेखकबुद्धिस्थेति विप्रतिपन्ना लिपिः स्वसङ्केतितशब्दज्ञानपूर्विका तदर्थज्ञानपूर्विका वा शब्दस्मारकलिपित्वात् । सम्प्रतिपन्नवदित्यनुमानं लेखकावबुद्धशब्दविषयसमर्थविषयं वा पर्यवस्यतीत्यर्थः । **तथा सतीति** । लिपेः लेखिकावबुद्धशब्दाद्यनुमापकत्व इत्यर्थः । **एडमूकलिपेरिति** । शब्दादिज्ञानवता अन्येन लिखिता लिपिं दृष्ट्वा एडमूकेन लिखितलिपेरपीत्यर्थः । **सन्दिग्धेति** । एडमूकलिपिव्यतिरिक्तत्वस्य निश्चेतुमशक्यत्वादित्यर्थः । **तत्सममिति** । ततश्च पिपीलिकालिपिः स्मरणसाधनं प्रत्यक्षान्तर्भावा न पृथक्प्रमाणमित्यर्थः । ननु स्मृतेरप्रमात्वात् कथं तत्साधनत्वेन लिपेः प्रामाण्यमित्यत आह **स्मृतेरिति** । प्रामाण्यं नानुवादस्येत्यादा-विति शेषः ।

**चषकः**— **अतल्लक्षणत्वादिति** । निर्दोषार्थेन्द्रियसन्निकर्षत्वनिर्दोषशब्दत्वरूपप्रत्यक्षागमलक्षणाना-क्रान्तत्वादित्यर्थः । **तच्चेति** । विप्रतिपन्ना लिपिः स्वसङ्केतितशब्दज्ञानपूर्विका तादृशशब्दप्रतिपाद्यार्थज्ञान-पूर्विका वा शब्दस्मारकलिपित्वादित्यनुमानं लेखकस्य शब्दविषयमर्थविषयं वा ज्ञानमादाय पर्यवस्यतीत्यर्थः । **एडमूकलिपेरपीति** । एडो बधिरश्चासौ मूकश्चेति विग्रहः । स्वस्य लिपिसङ्केतितशब्दस्य तत्प्रतिपाद्यार्थस्य वा ज्ञानवैधुर्येऽपि तत्प्रतिसन्दधानपुरुषान्तरलिखितलिपिदर्शनैकनिबन्धनैडमूकलिखितलिपेरित्यर्थः । **किमपीति** । अनेडमूकलिपित्वादिरूपविशेषणमित्यर्थः । **सन्दिग्धेति** । पक्षीकृतलिपौ उक्तव्यतिरिक्तत्वविशेषणावधारका-भावेन तन्निश्चयाभावादिति भावः । **मूललेखकेति** । एडमूकलिपिर्यदीयलिपिदर्शनपूर्विका स मूललेखक-स्तद्बुद्धिस्थशब्दार्थयोरनुमानेनेत्यर्थः । **तत्सममिति** । तथा च पुरुषलिपिवत्पिपीलिकालिपेरपि स्मृतिसाधनतया प्रत्यक्षान्तर्गत्या पृथक् प्रामाण्याभावो 'नानुवादस्य स्मृतेरपि विहीयते' इत्यादिनेति पूरणीयः ।

* * *





**॥ अथ अत्र स्मरणहेतुत्वञ्च स्मरणसाधनत्वम् ॥**

३५ **सु०— ननु प्रमात्वेऽपि स्मृतेर्न तद्धेतुमात्रस्य प्रामाण्यम्, प्रमात्रादीनामपि तत्प्रसङ्गात्, किन्तु साधकतमस्यैव । तच्च मन एवेति सिद्धान्तः । लिपिदर्शनादिकं तु संस्कारोद्बोधाभिधसहकारिसम्पादनेनैव चरितार्थमिति कथं तस्य प्रामाण्यम् । मैवम् । अर्थसन्निकर्षलक्षणावान्तरव्यापारसहितं हि इन्द्रियं प्रत्यक्षं न इन्द्रियमात्रम् । मनसश्च स्मरणोदये संस्कारोद्बोध एवार्थसन्निकर्षः । तथा च चक्षुष इवार्थोपसर्पणतत्संयोग-सहितस्य प्रामाण्यम् । एवं लिपिदर्शनतदुद्बुद्धसंस्कारसहितस्यैव मनस, इति कथं न लिपेः प्रामाण्यम् ।**

**केवलायास्तु नास्तीति चेत्, श्रुतेरपि तन्नाङ्गीक्रियत एवेति ।**

**परि०— इति सिद्धान्त इति** । 'मानसप्रत्यक्षजा स्मृतिरि'ति प्रमाणलक्षणाद्युक्तेरिति भावः ।

**गु०दी०— श्रुतेरपि नाङ्गीक्रियत** इत्यत्र प्रमाजननयोग्यत्वरूपप्रामाण्यस्य । श्रुतेः स्वभावेनैव सत्त्वेऽपि प्रमाख्यफलोपहितप्रामाण्यस्य सङ्केतग्रहणसापेक्षत्वादित्यर्थः । यद्यपि स्मरणजनकमनसस्तद्व्यापार-रूपसंस्कारोद्बोधस्य च प्रामाण्यसम्भवेऽपि संस्कारोद्बोधकलिप्यादेर्न प्रामाण्यम् । अतिप्रसङ्गात् । तथापि यथा द्रौणेरित्यनुमापकदृष्टान्तं वदतो भाष्यकारस्य रेखारूपपिपीलिकालिपिरपि स्वसङ्केतितवर्णानुमापकत्वादनुमान-रूपप्रमाणमिति हृदयम् । अतो न कश्चित्क्षुद्रोपद्रवः । टीकाकारस्य त्वसाधारण्येन प्रमाणसचिवस्यापि प्रामाण्यमिति भावः ।

**यादु०— चक्षुष इवेति** । चक्षुषा यथेत्यर्थः । करणफलमध्यवर्तिनां सर्वेषामप्यवान्तरव्यापारत्वमेवेति मतमाश्रित्येदमुक्तमित्यवधेयम् । यदाह । 'यावन्ति त्वान्तरालिकानि तानि सर्वाण्यवान्तरव्यापार' इति ।

**वं०प०— तद्धेत्विति** । स्मृतिहेत्वित्यर्थः । **तदिति** । प्रामाण्येत्यर्थः । **तच्चेति** । साधकतमं करणमित्यर्थः । **चरितार्थम्** अन्यथासिद्धमिति भावः । **एवं लिपिदर्शनेत्यादि** । ततश्च विशिष्टस्यैव मनसः करणत्वाल्लिपेरपि करणकोटौ प्रवेशाद्युक्तो मनोरूपप्रत्यक्षेऽन्तर्भाव इति हृदयम् । **केवलाया इति** । करणकोटिनिविष्टतयैव प्रामाण्यं प्राप्तं न तु केवलायाः संस्कारोद्बोधकताशून्यायाः लिपेः प्रामाण्यमित्यर्थः । **श्रुतेरपि** केवलाया इति शेषः । **तत्** प्रामाण्यम् । ततश्च शक्तिस्मृत्यादिसहिताया एव श्रुतेः प्रामाण्यं न केवलाया इत्यर्थः ।

**कं०रा०— तच्चेति** । स्मृतिं प्रति साधकतमं च मन एवेति सिद्धान्त इत्यर्थः ।





**श्रीनिधि०— अर्थोपसर्पणम्** अर्थं प्रति गमनम् ।

**शे०वा०—** शिष्यः शङ्कते **नन्विति । चक्षुष इवेति** । चक्षुषो यथेत्यर्थः । यद्यप्यर्थोपसर्पणस्यार्थ-संयोगजनकत्वेनान्यथासिद्धत्वान्न तस्य व्यापारकोटौ निवेशो युक्तस्तथाऽपि कदाचिदिन्द्रियं कदाचिदिन्द्रियार्थ-सन्निकर्षः कदाचिज्ज्ञानं चेति करणभेदमुक्त्वा सर्वेषामपीन्द्रियमेव करणं यावन्ति त्वान्तरालिकानि तानि सर्वाण्यवान्तरव्यापार इति करणफलमध्यवर्तिनां सर्वेषामप्यवान्तरव्यापारत्वस्य परैरभिधानात् सुखसाधनशरीर-जनकत्वेनान्यथासिद्धस्याप्यपूर्वस्य यागस्वर्गमध्यवर्तितया व्यापारत्ववत् धानादिबुद्धिजनकसविकल्पकजनकत्वे-नान्यथासिद्धस्येन्द्रियसन्निकर्षस्य करणफलमध्यवर्तितया व्यापारकोटिनिवेशवच्चार्थसंयोगजनकत्वेनान्यथासिद्ध-स्याप्यर्थोपसर्पणस्य करणफलमध्यवर्तित्वेन व्यापारकोटिनिवेशो युक्त इत्यवधेयम् । एवं **लिपिदर्शनेति** । ननु चोद्बुद्धसंस्कारस्यैव स्मृतिजनकत्वात् कथं लिपिदर्शनस्य व्यापारकोटौ निवेश इति चेन्न । उद्बुद्धसंस्कारस्य स्मृतिजनकत्ववादिना न तावदुद्बुद्धत्वं जातिरिति वक्तुं शक्यम् । संस्कारत्वादिना सङ्करप्रसङ्गात्; उपाधित्वे चोद्बुद्धत्वं सहकारिलाभो वक्तव्यः तत्साहित्यमिति यावत् । सहकारिभूतं च लिपिदर्शनमेवेति युज्यते तस्य संस्कारोद्बोधान्तर्गतत्वेन व्यापारकोटिनिवेश इत्याहुः । वस्तुतोऽर्थोपसर्पणादिवत्करणमध्यफलवर्तित्वाल्लिपि-दर्शनस्य *व्यापारत्वोक्तिरित्यवधेयम्* ।

**वा०र०—** चक्षुष इवेति इवशब्दस्य यथाश्रुतार्थत्वे एवंशब्दस्य वैयर्थ्यापत्तेः इत्यतो व्याचष्टे **चक्षुषो यथेत्यर्थ इति** । यथेत्युक्ते च एवंशब्दस्यावश्यकतेति भावः । .........रेणाशङ्क्य निराकरोति **यद्यपीति** ।

**स०व्र०— केवलाया इति** । संस्कारोद्बोधलक्षणावान्तरव्यापाररहिताया इत्यर्थः । **श्रुतेरपीति** । शब्दश्रवणसङ्केतस्मरणाद्यवान्तरव्यापाररहिताया इत्यर्थः । तथा च केवललिपिदृष्टान्तेन केवलश्रुतेरप्रामाण्ये साध्ये सिद्धसाधनमित्यर्थः ।

**विठ्ठल०— चक्षुष इवेति** । चक्षुषो यथेत्यर्थः । **श्रुतेरपीति** । न्यायानुसन्धानरहितायाः ज्ञातताया-मेव प्रमासाधकत्वाङ्गीकारादिति भावः ।

**चषकः— चक्षुष इवेति** । चक्षुषो यथेत्यर्थः । अर्थसंयोगजनकत्वेनान्यथासिद्धस्याप्यर्थोपसर्पणस्य यावन्त्यान्तरालिकानि तानि सर्वाण्यवान्तरव्यापार इति करणफलमध्यवर्तिनां सर्वेषामप्यवान्तरव्यापारत्वस्य परोपगत्या सुखसाधनशरीरजनकत्वेनान्यथासिद्धस्याप्यपूर्वस्य यागस्वर्गमध्यवर्तितया व्यापारत्ववत् हानादि-बुद्धिजनकसविकल्पकजनकत्वेनान्यथासिद्धस्येन्द्रियसन्निकर्षस्य करणफलमध्यवर्तितया तद्वच्च व्यापारत्वोक्तिरिति ध्येयम् ।

**॥ इति अत्र स्मरणहेतुत्वञ्च स्मरणसाधनत्वम् ॥**

**॥ इति लिपेः स्मरणहेतुत्वात् प्रामाण्यम् ॥**

* * *





**॥ अथ 'लिपिः प्रमाणम्' इत्यनुव्याख्यानप्रयोगस्य व्याकरणशुद्धिः ॥**
**॥ तत्र च प्रमाणशब्दस्य भावसाधनत्वम् ॥**

**३६ सु०— नन्वत्र प्रमाणशब्दो भावसाधनो वा स्यात्करणसाधनो वा । आद्ये पिपीलिकालिपिः प्रमाणमिति सामानाधिकरण्यं न स्यात् । द्वितीये तु प्रमाणीति भवितव्यम्, कथं 'वेदाः प्रमाणं', 'स्मृतिः प्रमाणमि'ति । प्रमाणमिति सामान्येनोद्दिश्य वेदादित्वविधानात् । अन्यथा तत्रापि दौर्घस्त्यमेवेति । मैवम् । भावसाधनत्वाभ्युपगमात् । सामानाधिकरण्यं तु भाक्तमिति ।**

**परि०— सामानाधिकरण्यं न स्यादिति** । पिपीलिकालिपिः प्रमितिरित्यभेदस्य बाधादिति भावः । **इति भवितव्यमिति** । ल्युटष्टित्करणसामर्थ्येन करणाधिकरणयोस्त्रिलिङ्गतायाः अवश्यम्भावादिति भावः । **भाक्तमिति** । 'आयुर्घृतमि'त्यादिवत् तत्साधने तद्व्यपदेशो गौण इत्यर्थः ।

**गु०दी०— भाक्तम्** इत्यस्य प्रमितिकरणे प्रमितिपदप्रयोगः 'कार्यकारणशब्दाश्चान्योन्यं सङ्कीर्यन्त' इति वचनादौपचारिक इत्यर्थः । भाक्तमित्यङ्गीकृत्योदितम् । वस्तुगत्या वेदाः प्रमाणमितिवदत्राप्युद्देश्यव्यत्ययेन प्रयोगसम्भवे न प्रमाणीति प्रयोगस्य आवश्यकता । टित्करणमहिम्ना नारायण इत्यादिप्रयोगनिर्वाहाय अगत्या अधिकरणे त्रिलिङ्गत्वाङ्गीकारेऽपि करणसाधनतायां 'नान्तं नपुंसकमि'ति वचनेन नित्यनपुंसकत्वान्न कोऽपि दोषः ।

**यादु०— भावसाधन इति** । भावो धात्वर्थः तं साधयति प्रतिपादयतीति भावसाधनो भावप्रतिपादक इति यावत् । एवं करणसाधन इत्यत्रापि करणप्रतिपादक इत्यर्थोऽवगन्तव्यः । **द्वितीये त्विति** । करणार्थकल्युडन्तस्य त्रिलिङ्गत्वेन विशेष्यनिघ्नत्वाद्विशेष्यस्य च स्त्रीलिङ्गत्वाट्टिड्ढाणेत्यादिना ङीपा भवितव्यमिति भावः । अयं च दोषो नाद्यपक्षे । भावार्थकल्युडन्तस्य नित्यनपुंसकत्वादिति ज्ञातव्यम् । **प्रमाणमिति सामान्येनेति** । यदत्र प्रमाणमिष्टं स वेदादिरिति विधीयत इत्यर्थः । ननु करणसाधनस्य प्रमाणशब्दस्य त्रिलिङ्गत्वात् प्रमाणः प्रमाणीति वा कस्मान्नोद्दिश्यत इत्यत उक्तं **सामान्येनेति** । तथा च सामान्ये नपुंसकमिति वचनात् प्रमाणमित्येवोद्दिश्यत इति भावः । **वेदादित्वेति** । तथा च अनियतलिङ्गस्यैव विधेयस्योद्देश्यसमानलिङ्गत्वनियमेऽपि विधेयवचनयोर्वेदस्मृतिशब्दयोर्नियतलिङ्गत्वान्नोद्देश्यसमानलिङ्गताप्राप्तिरिति भावः । प्रकृते तु लिपिरप्रमाणमित्याक्षेपे लिपिमुद्दिश्याप्रामाण्यमेव विधेयमिति नैतत्समाधानावकाश इति भावः । **अन्यथेति** । वेदादिकमुद्दिश्य प्रमाणमिति विधान इत्यर्थः । **दौर्घस्त्यमिति** । करणे प्रमाणशब्दस्य





अनियतलिङ्गत्वेन विधेयवाचकस्य तस्योद्देश्यसमानलिङ्गतानियमेन प्रमाणः प्रमाणीति वा प्रयोगप्रसङ्गेन प्रमाणमित्यस्य दौर्घट्यमेवेत्यर्थः । **भाक्तमिति** । सादृश्यपरतयाऽमुख्यमित्यर्थः ।

**वं०प०—** भावं साधयति प्रतिपादयतीति भावसाधनः । **न स्यादिति** । लिपेः प्रमितित्वाभावादिति भावः । करणाधिकरणयोर्ल्युडन्तस्य त्रिलिङ्गत्वात् । इध्मप्रव्रश्चना गोदोहन इत्यादिप्रयोगदर्शनात् प्रमाणीति स्यादिति यदुक्तं तन्न । करणसाधनत्वेऽपि नपुंसकत्वदर्शनादित्याशयेन शङ्कते **कथं तर्हीति** । **अन्यथेति** । वेदादिकमुद्दिश्य यदि प्रामाण्यमेव विधेयमित्युच्यत इत्यर्थः । **दौर्घट्यमिति** । ततश्च वेदाः प्रमाणाः स्मृतिः प्रमाणीत्येव प्रयोगापत्त्या प्रमाणमिति नपुंसकप्रयोगस्य दौर्घट्यमेवेति भावः । **भाक्तमिति** । तथा च प्रमिति-रूपत्वाभावेऽपि प्रमितिसाधनत्वात् प्रमाणमिति व्यपदेशो गौण इत्यर्थः । **प्रमितिः** यथार्थज्ञानम् ।

**कं०रा०— आद्य इति** । प्रमाणशब्दस्य भावसाधनत्वेऽपि पिपीलिकालिपेः प्रमितित्वरूपत्वाभावेन पिपीलिकालिपेः प्रमाणमिति सामानाधिकरण्यं न स्यादित्यर्थः । **द्वितीय इति** । प्रमाणशब्दस्य करणसाधनत्वे करणार्थे ल्युडन्तस्य त्रिलिङ्गत्वेन लिपिविशेषणस्य प्रमाणशब्दस्य त्रिलिङ्गत्वात् टिड्ढाणञित्यादिना ङीपि सति प्रमाणीति भवितव्यमित्यर्थः । **सामान्येनेति** । तथा च 'सामान्ये नपुंसकं प्रयोक्तव्यमि'ति तत्र नपुंसक-लिङ्गत्वोपपत्तिरिति भावः । **अन्यथेति** । वेदः प्रमाणं स्मृतिप्रमाणमित्यादौ प्रमाणमिति सामान्येनोद्दिश्य वेदादित्वस्याविधाने वेदादिकमेवोद्दिश्य प्रमाणत्वविधाने तत्रापि नपुंसकलिङ्गस्य दौर्घट्यमेवेत्यर्थः । पिपी-लिकालिपिश्च प्रमाणमित्यत्र प्रमाणशब्दो भावसाधनः । तथा च भावे तस्य नपुंसकत्वनियमात् प्रमाणमिति निर्देशोपपत्तिः । न चैवं लिपेः प्रमितिरूपत्वाभावेन पिपीलिकालिपिः प्रमाणमिति सामानाधिकरण्यानुपपत्तिरिति वाच्यम्, आयुर्घृतमित्यादिवत् प्रमितिसाधने प्रमितित्वोपचारेण तस्य सम्भवादित्याशयेन परिहरति **मैवमिति** ।

**श्रीनिधि०— प्रमाणीति भवितव्यमिति** । टित्वात् ङीपा भवितव्यम् । ल्युटः टित्वात् स्त्रीलिङ्गं च । **लिपिपदमिति** । तत्समानाधिकरणत्वेन स्त्रीत्वेन स्त्रीत्वविवक्षा चावश्यकीति भावः । **सामान्येनो-द्दिश्येति** । अत्रापि लिङ्गव्यत्यासः कुतो नेति चेत् उच्यते । यदि विशेषेणोद्दिश्य सामान्येन प्रमाणत्वं विधीयेत । तदा उद्देश्यस्य यल्लिङ्गं तदेव विधेयस्यापि प्राप्नोति । उद्देश्यलिङ्गस्य प्रथममुपस्थितत्वान्नियत-त्वाच्च । विधेयसामान्यशब्दस्य विशेष्यनिघ्नत्वाच्च । यदि च सामान्येनोद्दिश्यविशेषविधानं तदा उद्देश्य-लिङ्गस्य प्रथममुपस्थितत्वेऽपि विधेयस्य नियतलिङ्गतया नोद्देश्यलिङ्गप्राप्तिरिति विशेषादिति । इदं च विशेष्यनिघ्नस्थले । नियतलिङ्गस्थले तु न कापि शङ्केति द्रष्टव्यम् ।

**शे०वा०— भावसाधन इति** । **भावा** धात्वर्थः, **साधनम्** अभिधेयं, यस्य स तथोक्तः । एवं करणं साधनं यस्य स करणसाधन इति द्रष्टव्यम् । तथा च भाववाचकः करणवाचको वेत्यर्थः । किमत्र भावे ल्युट् किं वा करण इति प्रश्नाशयः । **सामानाधिकरण्यं न स्यादिति** । लिपेः प्रमितिरूपत्वाभावादिति भावः ।





**द्वितीये त्विति** । भावे ल्युडन्तस्य नित्यनपुंसकत्वेऽपि करणे ल्युडन्तस्य विशेष्यनिघ्नत्वेन त्रिलिङ्गतया नित्यनपुंसकत्वाभावात् प्रमाणशब्दस्यापि करणे ल्युडन्तत्वे विशेष्यभूतलिपिनिघ्नत्वेन टिड्ढाणञित्यादिना ङीपि सति प्रमाणीति भवितव्यमित्यर्थः । **कथं तर्हीति** । तत्रापि भावसाधनत्वे सामानाधिकरण्यानुपपत्तेः करण-साधनत्वे च त्रिलिङ्गत्वेन विशेष्यनिघ्नत्वाद्विशेष्यलिङ्गानुसारेण प्रमाण इति प्रमाणीति च भवितव्यत्वादिति भावः । 'यदत्र प्रमाणमिष्टं स वेदादिरि'ति प्रमाणमुद्दिश्य वेदादित्वस्यैव विधानादुद्देश्यवाचकप्रमाणशब्दस्य नपुंसकत्वेऽप्यनियतलिङ्गस्यैव विधेयस्योद्देश्यसमानलिङ्गतानियमात् वेदस्मृतिशब्दयोश्च विधेयसमर्पकयोर्नित्य-पुल्लिङ्गस्त्रीलिङ्गत्वेनोद्देश्यसमानलिङ्गत्वाप्राप्तेर्नानुपपत्तिरित्याशयेन परिहरति **प्रमाणमितीति** । ननु करणे ल्युडन्तस्य प्रमाणशब्दस्य त्रिलिङ्गतया प्रमाण इति प्रमाणीति चोद्देशसम्भवात् प्रमाणमिति नपुंसकेनोद्देश्यसमर्पणं निर्नि-बन्धनमित्यतः करणे ल्युडन्तस्यापि सामान्ये नपुंसकमिति नपुंसकत्वानुशासनात् प्रमाणशब्दस्यापि सामान्य-परत्वे नपुंसकत्वोपपत्तेर्नानुपपत्तिरित्याशयेनोक्तं **सामान्येनेति** । प्रकृते तु लिपिर्न प्रमाणमित्याक्षेपपरिहाराय लिपिमुद्दिश्य प्रामाण्यस्यैव विधेयत्वान्नैतत्समाधानावकाश इति हृदयम् । **अन्यथेति** । वेदादिकमुद्दिश्य प्रमाणमिति विधान इत्यर्थः । **दौर्घट्यमेवेति** । करणे ल्युडन्तस्य प्रमाणशब्दस्यानियतलिङ्गत्वेन विधेयवाचकस्य तस्योद्देश्यसमानलिङ्गतानियमात् प्रमाणः प्रमाणीत्येव वक्तव्यतया प्रमाणमित्यस्य दौर्घट्यमेवेत्यर्थः । तर्हि लिपेः प्रमितिरूपत्वाभावात् सामानाधिकरण्यानुपपत्तिरित्यत आह **सामानाधिकरण्यं त्विति** । **भाक्तमिति** । गौण-मित्यर्थः । प्रमितिसाधनत्वात् प्रमितिरिति व्यपदेश इति भावः । एवमेव वेदोद्देशेन प्रमाणमिति प्रयोगोऽपि समाहितो वेदितव्यः ।

**वा०र०— भावो धात्वर्थ इत्यादि** । 'तुल्यास्यप्रयत्नं सवर्णमि'त्येतद्भाष्यगतप्रपूर्वात् नयतेः भावसाधनो नप्रत्ययः । इत्युक्तिव्याख्यावसरे कैयटे भावेऽभिधेयेन प्रत्ययः क्रियते । तेन नशब्दस्य भावः साधनं भवतीति इत्युक्तमप्युक्तमेवार्थं गमयतीति ज्ञातव्यम् । भावे ल्युट् इत्यङ्गीकारे प्रमितिप्रमाणमिति व्युत्पत्तिप्राप्तिरित्याशयेनाह **लिपेः प्रमितीति** । **भावे ल्युडन्तस्य नित्येति** । ल्युट् चेति सूत्रीयतदन्तश्च नपुंसक इति कौमुदीवाक्यव्याख्यावसरे यो ल्युट् तदन्त इत्यर्थः । तथा चामरः । क्तल्युट् नपुंसके भाव इति शेष्यामुक्तम् । तथा तत्रैवात एव भाष्येऽपि प्रयोगः । कोऽसावनुमानानामित्यपि उक्तम् । न चैवं साधनादिशब्दानां नियतलिङ्गत्वाभावप्रसङ्गः इति वाच्यम् । वृत्ताविध्मप्रव्रश्चन इति पुल्लिङ्गोदाहरणात् । भूवादयो धातवः इत्येतत्सूत्रीय कोऽसौ अनुमान इति भाष्यप्रयोगाच्च तदभावस्येष्टत्वात् । किञ्च नपुंसके भावे नपुंसक इत्यस्यानुवृत्तिः ल्युट् चेत्यत्र नास्तीत्यपि पक्षस्य सद्भावेन तत्पक्षेऽपि त्रिलिङ्गताया एव सम्भवः । यदना-न्तमकर्तरीत्यस्य विशेषविषयत्वेऽपि तदपेक्षया उक्तल्युट्नपुंसके भावे इत्यमरोक्तेर्विशेषविषयतया भावे ल्युडन्त-स्यैव नपुंसकत्वमिति प्राप्तेश्च । अत एव नामरवाक्ययोर्विरोधः । यदनान्तमित्यस्य भावकरणाधिकरणेषु अना-न्तस्य नपुंसकत्वमित्येतद्विषयत्वेनोक्तल्युट् इत्यस्यैव नियमविषयत्वाभावात् । अत एव च 'विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानमि'ति स्मृतिपादीयाधिकरणसम्बन्धिशाबरभाष्ये प्रमायां स्मृतौ 'स्पर्शनं व्यामोहः'





इत्युक्तस्य निर्वाहाय प्रवृत्तेन वार्तिककृता प्रमाणशब्दस्य ज्ञानसामानाधिकरण्येन भावोत्पन्नल्युडन्तत्वेन वा नपुंसकलिङ्गत्वात् वेदाः प्रमाणं स्मृतयः प्रमाणं इतिवत् प्रमाणे स्मृतौ च स्पर्शनव्यामोह इति भवितव्यम् । करणविशेषविवक्षायां वाऽभिधेयवल्लिङ्गवचनानुवृत्तौ ल्युडन्तात् टिड्ढाणञिति ङीपि प्राप्ते प्रामाण्यं स्मृतौ इति प्रयोक्तव्यं इत्याद्युक्तमित्याशयः । सामान्येन उद्देश्यादिकमेव स्पष्टयन् विधेयपदेऽपि उद्देश्यलिङ्गमिव प्राप्नोतीति शङ्कां च वारयति **यदत्र प्रमाणमिष्टमित्यादिना** । नित्यपुलिङ्गेत्यादेः क्रमेण सम्बन्धः । **सामान्ये नपुंसकमिति** । सामान्यविवक्षायां नपुंसकमित्यर्थः । उक्तं च मञ्जर्याम् । सामान्यविवक्षायामेकशब्दत्वं एकवचनं नपुंसकत्वं च भविष्यतीति प्रधाने कार्यसम्प्रत्ययात् शेषो भविष्यति । किं प्रधानं इत्यादि भाष्ये हि नपुंसकमेव प्रधानम् । एवं हि दृश्यते लोके अविज्ञातार्थगुणसन्देहे नपुंसकं प्रयुज्यते । किं जातमित्युच्यते स्त्री वा पुमान् वा इत्यादि भाष्ये चोक्तम् । यद्येवं तदिदमिति माञ्जरीककुसुमविकासे तु नपुंसकस्य व्यापित्वात् प्राधान्यम् । स्थितिर्हि नपुंसकशब्दार्थः इत्यादि उक्त्वा तथा च स्थितिरूपत्वेनैव स्त्रीपुंसयोर्विवक्षायां सिद्धो नपुंसकशब्दप्रयोगः इत्यादीति ज्ञेयम् । अधिकं तच्चाविशेषमानेनेति जिज्ञासाधिकरणानुभाष्ये मूलटीकायां तद्व्याख्याने चास्मदीये द्रष्टव्यम् । ननु एवं प्रकृते प्रमाणमित्युद्दिश्य समर्पकमित्यङ्गीकृत्य लिपिरिति नियतलिङ्गेन लिपित्वविधानं इत्यङ्गीकारेण समाधानं भविष्यति इत्यतः तथा समाधानस्य प्रकृतेऽसम्भवमाह **प्रकृते त्विति** । **प्रमितिसाधनत्वादिति** । दधित्रपुसमप्रत्यक्षो आयुर्घृतं ज्वर इत्यादौ तत्साधने तद्व्यपदेशदर्शनादिति भावः ।

**स०व्र०— प्रमाणानीति** । प्रमीयते अनेनेति वा अनयेति वा प्रमाणमिति करणे निष्पन्नल्युडन्तप्रमाणशब्दस्य विशेष्यलिङ्गत्वेन नित्यनपुंसकत्वाभावादित्यर्थः । **प्रमाणमिति सामान्येति** । यदत्र प्रमाणत्वेन पृष्टं, स वेदादिरित्यर्थः । तथा च प्रमाणशब्दस्य सामान्यपरत्वात् 'सामान्ये नपुंसकम्' इति नपुंसकत्वोपपत्तिरिति भावः । प्रमाणमुद्दिश्य वेदादित्वस्यैवात्र विधेयत्वेन विशेष्यभूतप्रमाणशब्दस्य नपुंसकत्वेऽपि वेदस्मृतिशब्दयोर्नित्यपुलिङ्गस्त्रीलिङ्गत्वेन विशेष्यलिङ्गानापत्त्या वेदः प्रमाणं, स्मृतिः प्रमाणमिति प्रयोगोपपत्तिरिति भावः । नन्वत्र प्रमाणमुद्दिश्य वेदादित्वं न विधेयम्, किं तु वेदादिकमुद्दिश्य प्रमाणत्वमेवेत्यत आह **अन्यथेति** । तथा सति प्रमाणशब्दस्य विशेष्यपरत्वेन वेदः प्रमाणः स्मृतिः प्रमाणीति प्रयोगापत्त्या प्रमाणमित्यस्य दौर्घट्यमित्यर्थः । **भाक्तमिति** । प्रमि(म)तिसाधनत्वात् प्रमि(मे)तिरिति व्यपदेशो गौण इत्यर्थः ।

**विठ्ठल०— भावसाधनेति** । भावो धात्वर्थः । धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयत इत्युक्तेः । तं साधयति प्रतिपादयतीति भावसाधनः । एवं करणसाधन इत्यत्रापीति करणप्रतिपादक इत्यर्थो ज्ञातव्यः । **द्वितीये त्विति** । करणार्थे ल्युडन्तस्य त्रिलिङ्गत्वेन विशेष्यनिघ्नस्य लिपिशब्दस्य स्त्रीलिङ्गत्वात् टिड्ढाणेत्यादिना ङीपा भवितव्यमिति भावः । करणसाधनस्य प्रमाणशब्दस्य त्रिलिङ्गत्वे वेदाः प्रमाणमित्यादि प्रयोगो न स्यादिति । **स्मृतिरिति** । मन्वादिस्मृतिरित्यर्थः । स्वयमेव शङ्कते **कथमिति** । शङ्कः स्वयं परिहरति **प्रमाणमितीति** । **सामान्येनेति** । तथा च सामान्ये नपुंसकमित्युक्तेः प्रमाणमित्येवोद्दिश्य नियत-





लिङ्गयोः स्मृतिवेदयोर्विधानान्नोद्देश्यसमानलिङ्गतापत्तिरिति भावः । प्रकृते तु लिपिमेवोद्दिश्याप्रामाण्यमेव विधीयत इति नैतत्साधनावकाश इति भावः । **अन्यथेति** । वेदादिकमेवोद्दिश्य प्रामाण्यविधाने करणे प्रमाणशब्दस्य त्रिलिङ्गत्वान्नपुंसकलिङ्गस्य दौर्घट्यमेवेति भावः । **भावसाधनत्वेति** । भावसाधनत्वे च नियतनपुंसकत्वान्न दोष इति भावः । **भाक्तमिति** । 'आयुर्घृतमि'त्यादिवत्साधने तद्व्यपदेशो गौण इति भावः ।

**॥ इति प्रमाणशब्दस्य भावसाधनत्वम् ॥**

**॥ इति 'लिपिः प्रमाणम्' इत्यनुव्याख्यानप्रयोगस्य व्याकरणशुद्धिः ॥**

**॥ इति श्रुतेः पिपीलिकालिपिवदबुद्धिपूर्वकत्वमूलकाप्रामाण्यशङ्कानिरसनम् ॥**

* * *

**॥ अन्ते च तत्र श्रुतेः अबुद्धिपूर्वकत्वमूलकसम्यगनुभवसाधनत्वाभावद्वारक-अप्रामाण्यशङ्कायाः निरसनम् ॥**

**॥ अथ 'शब्दत्वे सत्यबुद्धिपूर्वकत्व'स्यापि हेतोः प्रमाणाविरुद्धत्वे सति सम्यगनुभवसाधनत्वमस्त्येव ॥**

३७ **सु०—** ननु च श्रुतेः सम्यगनुभवसाधनत्वेन प्रामाण्यमिष्टं न तु स्मारकत्वेन । तथा च 'न श्रुतिः सम्यगनुभवसाधनमबुद्धिपूर्वकत्वात्पिपीलिकालिपिवदित्यनुमास्यत' इत्यत आह **यथेति** ।

**अनु०—** यथा द्रौणेरुलूकेन कृतमप्यास बोधकम् ।
अविरुद्धम्

**यथा** अबुद्धिपूर्वकमपि **एकेनोलूकेन कृतम्** अनेककाकनाशनमश्वत्थाम्नोऽहमेक एवानेकान् वधिष्यामीत्यस्यार्थस्य **बोधकं** सम्यगनुभवं प्रति साधनं, जातम् । तथा श्रुतिरबुद्धिपूर्वाऽपि सम्यगनुभवसाधनम् ।

एतदुक्तं भवति । अबुद्धिपूर्वकत्वं किमनादित्वं विवक्षितम्, सादित्वेऽपि बुद्धिजन्यत्वाभावो वा प्रतिपाद्यार्थबुद्धिपूर्वकत्वाभावो वाऽनेनैतदेवं प्रतिपादयिष्यामीत्यभिसन्धिपूर्वकतावैधुर्यं वा ॥ नाद्यः, पिपीलिकालिपावभावात् । गगनमेव दृष्टान्तो भविष्यतीति चेत्, तथाऽपि श्रुतेरनादित्वस्य परेणानङ्गीकृतत्वेनासिद्धेः ॥ न द्वितीयः, उत्पद्यमानं बुद्धिजन्यमेवेति मयाऽङ्गीकृतत्वात् ॥ न तृतीयचतुर्थौ, उलूककृतव्यापारे





**व्यभिचारादिति । यद्यपि प्रत्यक्षे व्यभिचारोऽत्र वक्तुं शक्यते, तथाऽपि ज्ञातकरण-सजातीयत्वेन शक्यपरिहारोऽसाविति नोदितः । अनुमानमात्रे सुवचोऽपि चेतनव्यापार-विषयस्य तथाभूत एव शाकुने प्रदर्शयितुमुचित इति न प्रदर्शितः ।**

**ननु शाकुनमर्थविसंवाद्यपि दृश्यते । सत्यम् । यत्तु प्रमाण-अविरुद्धं तद्व्यभि-चारस्थलं भविष्यतीति भावेनोक्तम्— अविरुद्धमिति । शाकुनमात्रे व्यभिचारस्य दर्शयितुं शक्यत्वेऽप्यागमिकत्वेन विसंवादानर्हतयेदमुदाहृतम् ।**

**परि०— पिपीलिकालिपावभावादिति** । तथा च श्रुतिरप्रमाणं अबुद्धिपूर्वकत्वात् पिपीलिकालिपिवदिति प्रागुक्तप्रयोगे दृष्टान्तसिद्धिरिति भावः । **परेणेति** । अप्रामाण्यवादिना बौद्धेन तार्किकादिनेति वार्थः । **मयेति** । 'स्वमतिप्रभवं जगदस्य यतः' इत्युक्तेरिति भावः । **अत्रेति** । तृतीयचतुर्थपक्षयोरित्यर्थः । **असाविति** । प्रत्यक्षे व्यभिचारः ज्ञातकरणजातीयत्वविशेषणदानेन शक्यपरिहार इत्यर्थः । **सुवचोऽपीति** । व्यभिचार इत्यनुकर्षः । **शाकुनमात्र इति** । लौकिका-गमिकसाधारणशाकुनमात्र इत्यर्थः । **आगमिकत्वेनेति** । भारतसिद्धत्वेनेत्यर्थः । तथा चोक्तं भारततात्पर्यनिर्णयेऽष्टाविंशेऽध्याये 'नाऽगान्निद्रा निशीथे च ध्वाङ्क्षान्न्यग्रोधवासिनः । हतान् सबहु-साहस्रानेकेनातिबलेन तु । कौशिकेन निरीक्ष्यैव प्राह तौ कृपसात्वतौ । निदर्शनिन ह्येतेन प्रेरितः परमात्मना । यामि पाण्डुसुतान् हन्तुमित्युक्त्वाऽऽरुरुहे रथमि'त्यादि ।

**यादु०— बुद्धिजन्यमेवेति** । ईश्वरबुद्धिजन्यत्वस्य सर्वत्रापि कार्ये सत्त्वादिति भावः । **ज्ञात-करणसजातीयत्वेनेति** । यद्यप्यत्र ज्ञातकरणत्वेनेत्येव वक्तुमुचितं तथाऽपि सर्वज्ञज्ञातकरणत्वस्येन्द्रियेऽपि सत्त्वेनास्मदादिज्ञातकरणत्वस्य विवक्षणीयत्वे वेदानामनन्तत्वेनास्माभिर्ज्ञातुमशक्यत्वेन भागासिद्धिः स्यात् । अतस्तत्परिहाराय ज्ञातकरणजातीयत्वेनेत्युक्तमित्यवधेयम् । **चेतनव्यापारविषयस्येति** । चेतनव्यापारो बुद्धि-रभिसन्धिर्वा तद्विषयस्य तद्घटितस्य हेतोरित्यर्थः । **शाकुनमात्र इति** । वायसदक्षिणगमनादिरूपे चेतन-व्यापारघटिते शाकुनमात्र इत्यर्थः । **आगमिकत्वेनेति** । भारताद्यागमसिद्धत्वादिति भावः ।

**वं०प०—** वक्ष्यमाणानुमाने सिद्धसाधनता श्रुतेः स्मारकत्वेनैव प्रामाण्याङ्गीकारादित्याशङ्कापरिहारायाह **ननु च श्रुतेरिति** । **असिद्धेः** अन्यतरासिद्धेः । **उत्पद्यमानमिति** । तथा च पिपीलिकालिपेरपि ईश्वर-बुद्धिजन्यत्वात् साधनवैकल्यम् । अबुद्धिजन्यस्य कस्याप्यभावेन बुद्धीति विशेषणवैयर्थ्यं चेति भावः । ज्ञातकरणजातीयत्वेनाबुद्धिपूर्वकत्वहेतौ विशेषणेन दत्तेनेति शेषः । अत्र ज्ञातकरणत्वविशेषणेनैव प्रत्यक्षे





व्यभिचारपरिहारः । जातीयपदं तु वेदानामनन्तत्वेन ज्ञातकरणताया अयोगेन भागासिद्धिपरिहारायेति ध्येयम् । **सुवच इति** । प्रतिपाद्यार्थबुद्धिपूर्वकतावैधुर्यरूपस्यानेनैतदेवं प्रतिपादयिष्यामीत्यभिसन्धिपूर्वकतावैधुर्यरूपस्य चाबुद्धिपूर्वकत्वरूपहेतोरनुमाने सत्त्वादिति भावः । **चेतनव्यापारो** बुद्धिरभिसन्धिर्वा । **तद्विषयस्य** तद्घटितस्य । तथा चानुमाने बुद्ध्यभिसन्ध्योः प्रसक्तेरेवाभावेन तन्निषेधायोगादुलूकादौ तत्प्रसक्तेः सत्त्वेन तन्निषेधसम्भवाद्युक्तं तत्रैव व्यभिचारप्रदर्शनमिति ध्येयम् । **शाकुनमात्रे** प्रमाणाविरुद्धशाकुनमात्रे । **इदं** यथा द्रौणेरित्येतच्छाकुनम् ।

**कं०रा०— पिपीलिकालिपावभावादिति** । तथा च श्रुतिप्रमाणं अबुद्धिपूर्वकप्रणीतत्वात् पिपीलिकालिपिवदिति प्रागुक्तप्रयोगे दृष्टान्तासिद्धिरिति भावः । **परेणेति** । अप्रमाणवादिनां बौद्धेन तार्किकादिनेति चार्थः । **बुद्धिजन्यमेवेति** । सर्वस्यापि कार्यस्येश्वरकर्तृकत्वेन तदीयबुद्धिजन्यत्वादिति भावः ।

**श्रीनिधि०— सम्यगनुभवसाधनत्वेन प्रामाण्यमिष्टमिति** । अहमेक एवानेकदुर्बलपाण्डवसेनाहननसमर्थः । प्रबलेन एकेन उलूकेन दुर्बलानेककाकानां हननात् । यस्तु प्रबलः सः एकोऽपि विरोधिनो दुर्बलानेकहननसमर्थः । **यथा उलूक इति** । सम्यगनुभवं प्रति साधनं जातमित्यर्थः । **तथाभूत एव** चेतनव्यापारविषय एव ।

**शे०वा०—** ननु दृष्टान्तस्य साध्यविकलत्वेन श्रुत्यप्रामाण्यानुमानस्य दूषितत्वादुलूककृतव्यापारे अबुद्धिपूर्वकत्वस्य व्यभिचारप्रदर्शनपरोत्तरवाक्यानर्थक्यमित्यतो न सम्यगनुभवसाधनमिति प्रतिज्ञार्थपरिष्कारेण साध्यवैकल्यस्य परेण परिहारेण तद्दुष्टत्वासिद्ध्या व्यभिचारोपदर्शिनि तद्दुष्टत्वसमर्थनार्थत्वान्नानर्थक्यमित्याशयेन प्रतिज्ञार्थपरिष्कारेण साध्यवैकल्यपरिहारशङ्कामुत्थापयति **ननु चेति** । वक्ष्यमाणरीत्या प्रतिज्ञार्थपरिष्कारे नियामकमाह **श्रुतेरिति** । **इत्यनुमास्यत इति** । तथा च लिपेः स्मारकत्वेऽप्युक्तरीत्या सम्यगनुभवसाधनत्वाभावेनोक्तसाध्यस्यापि सत्त्वान्न दृष्टान्ते साध्यवैकल्यमिति भावः । ननु कथमनेन वाक्येनोलूककृतव्यापारे व्यभिचारसमर्थनं घटते । तदौपयिकसाध्याभावोपपादनेऽपि तदौपयिकहेतुसत्त्वानुपपादनादित्यतः स्पष्टत्वात् तस्यानुपपादनमित्याशयेन स्वयं तत्र हेतुसद्भावमाह **अबुद्धिपूर्वकमपीति** । ननूलूककृतव्यापारस्यापि बुद्धिपूर्वकत्वेनाबुद्धिपूर्वकत्वरूपहेत्वगमनान्न तत्र व्यभिचार इत्यतो बुद्धिपूर्वकत्वं विकल्प्य पक्षान्तरं बहिरेव प्रदूष्य परिशिष्टपक्षे व्यभिचारप्रदर्शनपरतया मूलं योजयति **एतदुक्तं भवतीति** । **किमनादित्वमित्यादि** । अत्र अबुद्धिपूर्वकत्वस्य सर्वथा अजन्यत्वेन वा जन्यत्वेऽपि बुद्ध्यजन्यत्वेन वा सम्भवादाद्यपक्षद्वयप्रसक्तिः । बुद्धावेवावान्तरविवक्षया चोत्तरपक्षद्वयप्रसक्तिरिति द्रष्टव्यम् । किमत्र पिपीलिकालिपिरेव दृष्टान्तः किं वा गगनादिकमिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **पिपीलिकालिपाविति** । तथा च साध्यवैकल्यस्यात्राप्रसङ्गेऽपि साधनवैकल्यमवर्जनीयमिति भावः । द्वितीयमाशङ्कते **गगनादिकमिति** । तथा च न साध्यसाधनवैकल्यप्रसङ्गोऽत्रेति भावः । एवं तर्हि माऽस्तु दृष्टान्तदोषेणानुमानस्याभासत्वसिद्धिर्वादिनो हेत्वसिद्ध्या तु भविष्यतीत्याह **तथाऽपीति** । **बुद्ध्यजन्यत्वमेवेति** । इदं च जन्यमात्रस्येश्वरबुद्धिजन्यत्वमित्यभिप्रायेणोक्तम् ।





ततश्च पिपीलिकालिपेरपि बुद्धिजन्यत्वाद् दृष्टान्तस्य साधनवैकल्यं गगनादेरेव दृष्टान्तत्वाश्रयणे च श्रुतेरपि परेण जन्यत्वाङ्गीकारेणोक्तव्याप्तिबलाद् बुद्धिजन्यत्वप्राप्त्याऽन्यतरासिद्धिरिति भावः । ननु मूले प्रत्यक्षानुमान-मात्रं विहायानुमानविशेषे शाकुने व्यभिचारोद्भावनं किमिति कृतमित्यतः प्रत्यक्षे तस्यानुद्भावनीयतामाह **यद्यपीत्यादिना । ज्ञातकरणसजातीयत्वेनेति ।** श्रुतिर्न सम्यगनुभवसाधनं ज्ञातकरणजातीयत्वे सत्यबुद्धि-पूर्वकत्वादित्येवं हेतुविशेषणदानेनाज्ञातकरणे प्रत्यक्षे व्यभिचारस्य परिहर्तुं शक्यत्वान्न तत्र व्यभिचारोद्भावनं कृतमित्यर्थः । यद्यप्यत्र ज्ञातकरणत्वमात्रविवक्षयाऽप्यज्ञातकरणे प्रत्यक्षे व्यभिचारस्य परिहारसिद्धेस्तावदेव वक्तुमुचितं तथाऽपि भागासिद्धिपरिहारार्थं ज्ञातकरणजातीयत्वपर्यन्तं धावनं कृतमिति द्रष्टव्यम् । ननु ज्ञात-करणजातीयत्वविवक्षया प्रत्यक्षे व्यभिचारपरिहारेऽप्यनुमानमात्रस्य तद्रूपत्वात् तत्र व्यभिचारः सुवच एवेति किमिति तदुपेक्षणमित्यत आह **अनुमानमात्र इति । चेतनव्यापारेति ।** उच्चारणादिरूपचेतनव्यापारविषयस्य बुद्धिपूर्वकत्वाभावेन सम्यगनुभवसाधनत्वाभावे परेण साधिते तथाभूत एव चेतनव्यापारविषय एव शाकुने व्यभिचारः प्रदर्शयितुमुचितः । अन्यथा चेतनव्यापारविषयत्वे सति इत्यपि परेण विशेषणस्य ग्रहीतुं शक्यत्वेन व्यभिचारपरिहारप्रसक्तेरिति भावः । यद्वा चेतनव्यापारो बुद्धिरभिसन्धिर्वा तद्विषयस्य तद्घटितस्य हेतोरित्यर्थः । **तथाभूत एवेति ।** चेतनव्यापारीभूतबुद्ध्यादिप्रसक्तिमत्येवेत्यर्थः । प्रतियोगिप्रसक्तिमत्येव तदभावस्य प्रतिपादन-दर्शनेनाभिसन्ध्यादिपूर्वकत्वप्रसक्तिमत्येव तदभावो वाच्यः । चेतनव्यापार एव चाभिसन्ध्यादिपूर्वकत्वप्रसक्तिर्न त्वन्यत्रेति चेतनव्यापारप्रसक्तिमत्त्वात् तत्रैव व्यभिचारश्चोदित इति भावः । तथाऽपि प्रमाणाविरुद्धशाकुनमात्रे व्यभिचारमनुक्त्वा तद्विशेषभूतोलूककृतव्यापारे तत्प्रदर्शनं किमिति मूले कृतमित्यत आह **शाकुनमात्र इति । आगमिकत्वेनेति ।** भारताद्यागमसिद्धत्वेनेत्यर्थः ।

**वा०र०— उत्तरवाक्येति ।** उत्तरभाष्येत्यर्थः । एवमुत्तरत्रापि । **प्रतिज्ञार्थेति ।** वेदो न प्रमाणं इति प्राक्कृतप्रतिज्ञायां योऽर्थः तत् परिष्कारः । तत्र विवक्षिताधिकमेलनेन कीर्तनं तेनेत्यर्थः । **दुष्टत्वासिद्ध्येति ।** दुष्टत्वासिद्धिरिति शङ्कायामित्यर्थः । वक्ष्यति च **अवैकल्यपरिहारशङ्कामिति । व्यभिचारेति ।** उलूकव्यापार-रूपस्थलान्तरे इति शेषः । **अत्रेति ।** उक्तसाध्यपरिष्कारपक्षेत्यर्थः । अनेन दृष्टान्तदूषण एव भारः । न तु द्रष्टव्यविशेषेण तद्दूषण इति मूलकाराशयः सूचितः । अस्मदादिबुद्धेः जन्यत्वमात्रे हेतुत्वायोगादाह **इदं चेति । उक्तव्याप्तीति ।** उत्पद्यमानं बुद्धिजन्यमेवेति व्याप्तीत्यर्थः । **प्रत्यक्षे तस्येति ।** तावदिति पूरणीयम् । **तदुपेक्षणमिति ।** यद्यपि अनुमानं विहायेत्यादिना प्राक् विशिष्टविषयशङ्का प्रदर्शिता तथापि प्रत्यक्षपक्षे उक्तदूषणस्य अनुमानमात्रपक्षेऽसम्भवं वक्तुं पुनराशङ्केति ज्ञेयम् । तथाभूत एवेत्येतद् व्याख्यातं **चेतनेति । तद्घटितस्येति ।** प्रतिपाद्यार्थे इत्याद्युक्तहेतुद्वयस्येत्यर्थः । तथाभूत इति हेत्वभावप्रतिपादकं कथमुपयुक्तं इत्यतस्तदुपयोगो यथा स्यात् तथा व्याख्याति **चेतनेति ।** क्रमाविवक्षयाऽभिसन्ध्यादीत्युक्तम् । **चेतनव्यापार एव चेति ।** चेतनेन कृते एव इष्टीरूपव्यापार एवेत्यर्थः । **अन्यत्रेति ।** अचेतनरथादिव्यापारेत्यर्थः ।





**स०व्र०— असिद्धेरिति** । अन्यतरासिद्धेरित्यर्थः । **उत्पद्यमानमिति** । तथा च सादित्वे सति बुद्धिजन्यत्वाभावादिति हेतुपदयोर्विरोध इति भावः ।

ननु ज्ञातकरणजातीयत्वविवक्षया प्रत्यक्षव्यभिचारपरिहारेऽपि अनुमानमात्रस्य तद्रूपत्वात् तत्र च प्रतिपाद्यार्थबुद्धिपूर्वकत्वाभावस्य 'अनेनैतत्प्रतिपादयिष्यामि' इत्यभिसन्धिपूर्वकतावैधुर्यस्य सद्भावेऽपि सम्यग्नुभवसाधनत्वेन व्यभिचार इत्यत आह **अनुमानमात्र इति** । चेतनव्यापारो बुद्धिः अभिसन्धिर्वा तद्विषयस्य तद्घटितस्य हेतोरित्यर्थः । यद्वा चेतनव्यापारो विषयो यस्य स तथोक्तः अभिसन्ध्यादिः तस्य भावः । तथाभूते चेतनव्यापारे एवेत्यर्थः । प्रतियोगिप्रसक्तिमत्येव तदभावस्य वाच्यत्वात् चेतनव्यापारस्यैवाभिसन्ध्यादिपूर्वकत्वरूपप्रतियोगिप्रसक्तिमत्त्वात् तत्रैव तदभावो वाच्य इति भावेन स्थलविशेषोदाहरणमिति भावः ।

ननु संवादिशाकुनमात्र एव व्यभिचारः किं नोच्यते । किं 'यथा द्रौणेरुलूकेन' इति 'कृतमप्यास बोधकम्' इति तद्विशेषोदाहरणेनेत्यत आह **शाकुनमात्र इति** ।

**विठ्ठल०—** ननु किमनेनोक्तमनुमानस्य दूषणम् । न च उलूककृतविदासनेर्व्यभिचार इति वाच्यम् । तस्याप्युलूकबुद्धिपूर्वकत्वेन हेतोरेवाभावादित्यतो हेतुं विकल्प्य दूषणं व्यनक्ति **एतदुक्तं भवतीति** । **पिपीलिकालिपावभावादिति** । तथा च दृष्टान्तस्य साधनवैकल्यमिति भावः । **परेण** पूर्वपक्षिणा । **बुद्धिजन्यमेवेति** । सर्वस्यापीश्वरं बुद्धजन्यत्वाङ्गीकारात्पिपीलिकालिपौ साधनवैकल्यं स्यादिति भावः । स्वमतिप्रभवं जगदस्य यतः इत्युक्तेः । **अत्रेति** । तृतीये पक्षे चतुर्थपक्षे चेत्यर्थः । **ज्ञातकरणेति** । ज्ञातकरणजातीयत्वे सत्यबुद्धिपूर्वकत्वादिति हेतुविशेषणेत्यर्थः । नन्वनुमानमात्रेऽप्ययं व्यभिचारः शक्यते वक्तुम् । तत्कुतो नोक्तं इत्यत आह **अनुमानेति** । सुवचो व्यापारो न प्रदर्शित इति सम्बन्धः । कुत इत्यत उक्तं **चेतनव्यापारेति** । प्रतिपाद्यार्थबुद्धिपूर्वकताविरहादेव हेतोश्चेतनव्यापारविषयरूपत्वात् तादृशस्य च तादृश एव शकुने व्यभिचारः प्रदर्शयितुमुचित इति हेतोरित्यर्थः । **शाकुनमात्र इति** । अविरुद्धे लौकिकागमिकधारणशकुनमात्र इत्यर्थः ।

* * *

**॥ तत्र च 'आस' इत्यनुव्याख्यानप्रयोगस्य व्याकरणशुद्धिः ॥**

**३८ सु०— नन्वासेति कथम्, 'अस्तेर्भूः' इत्यस्य नित्यत्वात् । 'विभक्तिप्रतिरूपकं चाव्ययं भवती'ति वचनादव्ययमेतदिति न दोषः । विभक्तिप्रतिरूपकमित्युच्यते, न चैवं विभक्तिरस्ति । न नास्ति, आमन्तानुप्रयोगस्य विद्यमानत्वात् ।**





**परि०— अस्तेरिति** । असभुवीतिधातोरार्धधातुके परतो भूरित्ययमादेशो भवतीति पाणिनीयसूत्रार्थः । तथा च बभूवेति स्यादिति भावः । **इति वचनादिति** । 'चादयोऽसत्त्वे' इत्यत्र चादिगणपाठमध्ये 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः' इति पाठादिति भावः । शङ्कते **विभक्तिप्रतिरूपकमित्युच्यत इत्यादि** । केवलस्यासेति तिङ्विभक्त्यन्तस्याभावेऽपि कारयामास इत्यादिप्रयोगेषु आम्प्रत्ययान्तादव्ययादनुप्रयुज्यमानं त्वासेति विभक्त्यन्तमस्त्येवेति भावेन समाधत्ते **न नास्तीति** । 'कृञ्चानुप्रयुज्यते लिटी'ति सूत्रेण कृभ्वस्तीनामामन्तादनुप्रयोगस्योक्तत्वादिति भावः ।

**गु०दी०— आमन्तानुप्रयोगस्य** इत्यत्र कारयामास पातयामासेत्यादौ कारयां पातयामित्याद्या-मन्तोपपदमनुसृत्य प्रयोगस्येत्यर्थः । अङ्गीकृत्येदमुदितम् । वस्तुतस्तु 'लावण्यमुत्पत्तुमिवास यत्नः' 'तस्माद्धान्यन्नपरः किञ्चनासे'ति लोकवेदयोः प्रयोगदर्शनात् । 'अस्तेर्भूरि'त्यस्य लटीव लिट्यप्यनित्यत्वं द्रष्टव्यम् ।

**यादु०— अस्तेर्भूरित्यस्येति** । अस्तेर्भूरादेशः स्यादार्धधातुक इति सूत्रार्थः । तथा च बभूवेति भवितव्यमिति भावः । **विभक्तिप्रतिरूपकमिति** । चिरायेत्यादिवद्विभक्त्यन्तसदृशमित्यर्थः । **न चैवं विभक्ति-रिति** । बहुव्रीहिविवक्षयाऽतिचिरायेति यद्विभक्त्यन्तं पदं तत्प्रतिरूपकं चिरायेत्यादेः । न चैवं प्रकृते । अस्तेर्भूरित्यस्य नित्यत्वेनाऽसेति विभक्तेः कदाऽप्यनुपपत्तेरिति भावः । **आमन्तेति** । इन्दामासेत्यादावित्यर्थः । 'कृञ्चानुप्रयुज्यते लिटी'त्यस्तेरामन्तानुप्रयोगविधानात् । तत्र च विधानसामर्थ्यादस्तेर्भूभावो नेति वैया-करणैरुक्तत्वादिति भावः ।

**वं०प०—** उत्तरमाह **विभक्तीति** । पुनश्शङ्कते **विभक्तीति** । एकवचनादिरूपा विभक्तिरित्यर्थः । उत्तरमाह **न नास्तीति** । अस्तीत्यर्थः । **आमन्तेति** । कारयामासेत्यादावाम्प्रत्ययान्ताव्ययमनु आसेत्येक-वचनरूपविभक्तिप्रयोगस्य सत्त्वादित्यर्थः । अनु प्रयुज्यते लिटीति विधानसामर्थ्यादामन्तानुप्रयोगेऽस्तेर्भूभावो नेति भावः ।

**कं०रा०— नन्वासेति कथमिति** । अस्तेर्भूरित्यार्धधातुकविषये । अस्तेर्भूभावविधानस्य नित्यत्वेन अस्तेर्लिटि तदादेशस्य तिटः लिड्चेत्यार्धधातुकतया भूभावपरस्मैपदानां णलतुसुस्थलथुसणलवमा इति लिडादेशे तिपो णलादेशे लिटिधातोरनभ्यासस्येति द्विर्वचने अभ्यासे चर्चेति जस्त्वे भवतेर इत्यभ्यासोऽकारस्याकारे भुवोवुग्लुङ्लिटोविति तुगागमे च बभूवेति भवितव्यमासेति तु कथमित्यर्थः । **विभक्तीति** । विभक्तिप्रतिरूपकं चाव्ययं भवतीति वचनाद् आसेत्येतद्धि विभक्तिप्रतिरूपकमव्ययमेव नत्वस्तेर्लिटि रूपं येनोक्तशङ्कावकाश इति





भावः । नन्वासेत्येतद्धि विभक्त्यन्तप्रतिरूपकमव्ययमित्युच्यते कारयामासेति तिट विभक्त्यन्तं क्वचित्क्वचिदस्ति अतो न तत्प्रतिरूपकाव्ययत्वमेतस्येति शङ्कते **विभक्तिप्रतिरूपकमुच्यत इति** । परिहरति **न नास्तीति** । आत्मेति तिङ्विभक्त्यन्तं क्वचिदपि नास्तीति न । कारयामास शरयामासेत्यादौ कृभूत्वानुप्रयुज्यते लिटीति विहितस्य आम्प्रत्ययान्तादनुप्रयुज्यमानस्य तिङ्विभक्त्यन्तस्यासेत्यस्य रूपस्य सत्त्वादित्यर्थः । विभक्तिप्रतिरूपकमव्ययमेतदित्युपलक्षणम् । असगतिदीस्यादि दानेष्विति धात्वन्तरस्य लिटि रूपमेतदित्यपि समाधानं द्रष्टव्यम् ।

**श्रो०वा०—** नन्वस्तेर्लिटि द्वित्वे हलादिशेषे अत आदेरि'ति दीर्घत्वे द्विहल्त्वाभावान्नुडभावे सवर्णदीर्घत्वे च सत्यासेति रूपनिष्पत्तिर्भवतीति काऽत्र कथन्तेत्यत आर्धधातुके परे 'अस्तेर्भूः' इत्यस्तेर्भूरादेशविधानेन बभूवेत्येव लिटि तद्रूपनिष्पत्तेर्न लिटि आसेति रूपनिष्पत्तिः सम्भवतीत्याशयेनाह **अस्तेर्भूरित्यस्येति** । परिहरति **विभक्तीति** । विभक्त्यन्तसदृशमित्यर्थः । बभूवार्थ इति शेषः । यथा चिरायेत्यादिकमिति भावः । **न चैवमिति** । अतिचिरायेत्यादिबहुव्रीहिसमासस्य साक्षाद्विभक्त्यन्तत्वमस्तीति युक्तं तत्प्रतिरूपकत्वं चिरायेत्यादेः । प्रकृते च सर्वत्रार्धधातुकेऽस्तेर्भूरादेशविधानेन आसेति विभक्त्यन्तशब्दस्यैवाभावान्न तत्प्रतिरूपकत्वमस्येति भावः । **आमन्तेति** । 'कृञ् चानुप्रयुज्यते लिटि' इत्यस्तेरामन्तानुप्रयोगविधानात् । इदामित्याद्यामन्तं पदम् । अनु पश्चात्प्रयुज्यमानस्य लिङन्तस्यासेत्यस्य विद्यमानत्वाद्युक्तं तिङन्तप्रतिरूपकाव्ययत्वमासेत्यस्येति भावः । ननु चास्तेर्भूभावस्य नित्यतयेन्दामासेत्यादावपि तत्प्रसङ्गोऽवर्जनीय इति चेत् । कृञ् चानुप्रयुज्यते लिटित्यत्र कृञिति प्रत्याहारग्रहणसामर्थ्येन तत्र भूरादेशाभावोपपत्तेः । अन्यथा हि प्रतिपत्तिलाघवाय कृम्वनुप्रयुज्यत इत्येव ब्रूयादित्याशयः । यद्यपि च चान्द्रैरनुप्रयोगादन्यत्रापि क्वचित्क्वचिद्भूरादेशमनभ्युपगम्यैव प्रादुरास, बहुलक्ष्यपाच्छविरित्यादिमहाकाव्यप्रयोगसमर्थनादत्रापि तदभावव्युत्पादनसम्भवादनुप्रयोगपर्यन्तधावनानर्थक्यं तथाऽप्युक्तयुक्त्याऽनुप्रयोगे भूरादेशाभावसिद्धावपि ततोऽन्यत्रापि भूरादेशाभावे निमित्ताभावेन तदसिद्ध्याऽनुप्रयोगपर्यन्तं धावनम् । अत एवोक्तप्रयोगोऽपि विस्तरे बभूवार्थे विभक्तिप्रतिरूपकनिपातत्वेनैव समाहितः । एतदेवाभिप्रेत्योक्तं धातुवृत्तिकृता 'अत्र युक्तिर्न दृश्यत इती'ति सर्वमनवद्यम् ।

**वा०र०—** **नन्वस्तेरित्यादि** । लिटि परोक्षे लिट् इत्यनेन । द्वित्वे लिटिधातोरनभ्यासस्य इति सूत्रेण । **दीर्घत्व इति** । अभ्यासस्यादेः अतो दीर्घस्य तेन विधानादिति भावः । **नुडभाव इति** । तस्मान्नुट् द्विहल इत्यनेन दीर्घीभूतात् आकारात् परस्परद्विहलो धातोः लुट्विधानात् अत्र दीर्घभूतात् आकारात् परधातुत्वेन प्रसक्तस्य लुटो भावः इत्यर्थः । **आर्धधातुके परे इति** । नन्वस्तेर्भूरित्यत्रार्धधातुक इति अधिकारसूत्रात् प्राप्तार्धधातुक इत्यत्र या सप्तमी स्वविषयसप्तम्येव भवति न तु परसप्तमी ततश्चार्धधातुकविवक्षायामस्तेर्भूरादेशविधायकत्वात् आर्धधातुकत्वविवक्षायां इत्येव वक्तव्यं तत् कथं परत्वोक्तम् । न चास्य परसप्तमीत्वमेव किं न स्यादिति वाच्यम् । तथा सति भाव्यमिति रूपापत्तेः । तथा हि । परत्वविवक्षायां हि धातोरार्धधातुके





भूते परस्मिन् विधीयमाने एव आदेशादिकं भवतीति एष्टव्यम् । एवं हि यस्मजाध्यादेः आदेशस्य परवत्वेन उपपत्तिः तत्रानुपपत्तेभविऽपि केवलस्यास्तेरार्धधातुकपूर्वत्वाभावेन भूरादेशो न स्यादेव । यदि च प्रथमत एव प्रत्यय उत्पाद्यते तर्हि अस्तेर्हलन्तत्वेन ऋहलोर्ण्यत् इति ण्यति सति आर्धधातुक तस्मिन् परतो भूरादेशे तदनन्तरं णित्वादचो ञ्णिति इति वृद्धौ धातोस्तन्निमित्तस्यैवेति सूत्रेण आवादेशे च भाव्यमिति प्राप्तेः । ततः उभयतः पाशारज्जुः । एवं प्रवैयं आख्याय्यं इति रूपापत्तिः बोध्या । प्रपूर्वक अजधातोश्चक्षिङश्च हलन्तत्वात् ण्यतिपश्चात्तयोः क्रमेण वीख्या इत्यादेशे वीत्यस्य वृद्धौ ख्या इत्यस्मात् आतो युक् चिण् कृतोरिति युकि प्रवैयं इत्यादेः प्राप्तेः । ततश्च भव्यं प्रवेयं आख्येयं इति रूपानुपपत्तिरिति । तत्परिहारार्थं विषयसप्तमीत्वमेव वाच्यम् । न चैवं सति ह्युक्तदोषप्रसङ्गोऽस्ति । आर्धधातुकस्य परत्वाभावेऽपि अस्तेरार्धधातुकविषयत्वेन तन्मात्रेण प्रथमत एव भूरादेरोततो हलन्तत्वाभावेन ण्यदप्रसक्त्या अचो यत् इति यदि गुणे वान्तोऽपि प्रत्यय इत्यवादेशे भव्यमिति रुपसिद्ध्युपपत्तेः । एवं अज् चक्षिणोरार्धधातुकविषये वीख्या इति च प्रथम एव आदेशे हलन्तत्वाभावेन ण्यदप्रसङ्गात् अचो यत् इति आद्यस्य सार्वधातुकेत्यनेन गुणे द्वितीयस्य धातोरीद्यतीति सूत्रेण यतिपरतः इदागमे गुणे च प्रवेयं आख्येयमिति रूपोपपत्तिः । ब्रुवस्तु क्यादेशानन्तरं एव ण्यदङ्गीकारात् वाच्यमित्येव रूपं न तु तदादेशात् पूर्वं अचो यत् आश्रयणमिति वाच्यमिति रूपापत्तिः । आर्धधातुक इति द्वितीयचतुर्थसूत्रमञ्जर्यां स्पष्टमेतत् । ततश्च विषयसप्तमीत्वात् पर इति व्याख्यानं अनुपपन्नमिति चेत् । अत्र ब्रूमः । यद्युक्तं विषयसप्तम्येवार्धधातुक इति सप्तमीति । तत्तथैव । न च एतावता परत्वोक्तिरयुक्ता । स हि तदा स्यात् यदि आर्धधातुके परे इति सूत्रानुवृत्तस्य व्याख्यानं स्यात् न चैवम् । किन्तु अस्तेर्भूरादेशे निमित्तभूतार्धधातुकविषयत्वोपदर्शनार्थं आर्धधातुके परे इति उक्तम् । न च तर्हि सूत्रानुसारेण तद्विषय इत्येव कुतो नोक्तमिति वाच्यम् । न हि आर्धधातुकेऽपरतोऽपि आदेशादि सम्भवार्थं अङ्गीकृते विषयत्वे परतो आर्धधातुके शून्यमात्रविषयम् । तथा सति यदादीनां ल्यबादावार्धधातुके परतो जातानां जग्व्याद्यादेशादीनां अनुपपत्तिप्रसङ्गात् । अपि तर्हि यत्र प्रत्ययस्य प्रथममेवोत्पादेऽपि विवक्षितरूपोपपत्तिः तत्र तथात्वं यत्र तु प्रत्यस्य प्रथममुत्पादे विवक्षितरूपसिद्धिः तदभावेऽपि प्रत्ययाश्रितं कार्यं भवत्येव । एवं च विषयत्वविवक्षायाः उक्तोभयसाधारण्यात् सामान्यत्वेन तदविरोधात् न प्रकृते परत्वोक्तेरयुक्तेति दिक् । अस्तेरूपेत्यर्थः । अव्ययगणे विभक्तिप्रतिरूपका इत्युक्तविभक्त्यन्तसदृशाः इति तट्टीकाकारीयं व्याख्यानमनुसृत्याह **विभक्त्यन्तेति** । जातमिति मूलाभिप्रेतं अर्थविशेषं दर्शयति **बभूवेति** । **यथेति** । एतच्चातिचिरायेत्यादि उत्तरटीकायां स्पष्टं भविष्यति । **कृञ्चानुप्रयुज्यन्ते लिटीत्यादि** । अत्र इदामित्यादेव व्याख्यानम् । तत्रास्तेरामन्तानुप्रयोगः केन सिद्धः इत्यतः कृञ्चानुप्रयुज्यते लिटि इत्यतः आमन्तानुप्रयोगविधानादिति । कथमत्र विधानमिति चेत् । उच्यते । कृञ् इति हि न स्वरूपमात्रग्रहणम् । कृञ्धातुमात्रग्रहणं न भवतीति यावत् । तथा सति कृञः एवानुप्रयोगप्राप्त्या भ्वस्त्योस्तदभावेन तद्व्यावृत्त्यर्थं आम् प्रत्ययवत् कृञोऽनुप्रयोगस्य इत्यत्र सूत्रे कृञ्ग्रहणं अनर्थकं स्यात् । तत्र हि भ्वस्तिव्यावृत्त्यर्थमेव कृत् इति स्वरूपग्रहणम् । न चात्रापि स्वरूपग्रहणे भ्वस्त्योः





अनुप्रयोगप्रसक्तिरस्ति । ततश्च तन्निषेधायोगः । न चाम् प्रत्यय इति सूत्रे कृञ् इति प्रत्याहारग्रहणं कृञ् चेति सूत्रे तु स्वरूपग्रहणमेव । न चैवं सति उक्तानुपपत्तिरस्तीति वाच्यम् । तथा सति कृभ्वस्तीनां ग्रहणप्राप्त्या तेषां च त्रयाणां अनुप्रयोगस्य केनाप्यप्राप्तत्वेनात्र तदनुवादेनात्मनेपदविधानानुपपत्तिप्रसङ्गात् । किं च कृञोऽनु-प्रयोगस्यात्मनेपदसद्भावेऽपि ईक्षाम्बभूव-ईक्षामासेभ्वस्त्योः परस्मैपदस्यैव सत्त्वेनात्मनेपदाभावात् आमिति सूत्रे कृभ्वस्तिग्रहणायोगः । अत एव उभयत्र प्रत्याहारग्रहणपक्षोऽप्यपास्तः । किन्तु कृञ् चेति सूत्रे एव कृञ् प्रत्याहारग्रहणम् । क्वसन्निविष्टानां प्रत्याहारः । अभूततद्भावे कृभ्वस्तियोगः इत्यत्रत्यकृशब्दादारभ्य कृञो द्वितीयतृतीयेत्यत्रत्य कृञ् ञकारेण प्रत्याहारः । ननु ञकारस्येत्वाभावात् कथमनेन प्रत्याहार इति चेत् सत्यम् । कृञो द्वितीयेत्यत्रस्येत्वाभावेऽपि क्वचित् इत्संज्ञो दृष्टः इति युक्तं प्रत्याहारत्वं इत्याहुः । अस्य प्रत्याहारत्वे च कृञ्ग्रहणेन कृभ्वस्तीनां गृहीतत्वेनानुप्रयोगसिद्धेः भ्वस्तिव्यावृत्तार्थं कृञ्ग्रहणं युक्तमिति आम्-प्रत्ययवत् इत्येतत् सूत्रीयकृञ्ग्रहणान्यथानुपपत्तिः । एवं कृञ् चेति सूत्रे प्रत्याहारग्रहणे प्रमाणं भवति । शिष्टं कैयटादौ अवधेयम् । ततश्चास्तेरनुप्रयोगसिद्धिः इति । अनुशब्दमनूद्य व्याचष्टे **अनु पश्चादिति** । प्रयोगस्येत्येत् व्याख्यानं **प्रयुज्यमानस्येति** । अस्तेर्भूरित्येतत्सूत्रीय कृञ् चानुप्रयुज्यते लिटीति प्रत्याहारे-त्यादिकाशिकादिकमनुस्मृत्य समाधत्ते **प्रत्याहारग्रहणसामर्थ्येनेति** । कृञ् इति प्रत्याहारेण भ्वस्तीनां ग्रहणात् अस्तेः पृथग्ग्रहणसामर्थ्येनेत्यर्थः । तदेवोपपादयति **अन्यथा हीति** । यदि लिट्यपि अस्तेर्भूरादेशः तर्हि भूग्रहणेनैव भ्वस्त्योर्ग्रहणसिद्धेः कृभ्वित्येव वक्तव्यं स्यात् । तदैव लिट्यपि भूरादेशनिश्चयसम्भवी कृञ्ग्रहणे च कृभ्वस्तीनां त्रयाणां प्राप्त्या अस्तेरस्तित्वेन ग्रहणं न किन्तु भुत्वेनेति निश्चयायोगः । तेन एवं ज्ञायते लुटि भूरादेशो नास्तीति भावः । **उक्तयुक्त्येति** । कृभ्वनुप्रयुज्यते इत्यनुक्त्वा कृञ्ग्रहणेन भुरादेशाभाव इति उक्त-युक्त्येत्यर्थः । **ततोऽन्यत्रापीति** । यदि हि अनुप्रयोगस्थलेऽपि भूरादेशः स्यात् तर्हि उक्तनिमित्तमनादृत्य क्वचित् भूरादेशतदभावौ इच्छाधीनौ स्वीकर्तव्यौ । न चैवं विद्यमानत्वेऽपि नोदाहरणमात्रस्य तत्र उक्तनिमित्ताभावेन आदेशाभावानुपपत्तिरेव । तथा चानुप्रयोग एव आदेशाभावे निमित्तमिति चान्द्रोक्तं अनुपपन्नमिति भावः । कथं तर्हि प्रादुरासेति प्रयोगसमर्थनं भवत्पक्षेऽपीत्यत आह **अत एवेति** । उपलक्षणं चैतत् । अस्गताविति धातोः प्रयोगोऽप्यस्तीपि द्रष्टव्यम् । शेषीकृतायैवोक्तत्वात् । **विस्तर इति** । इत्येतन्नामकग्रन्थेत्यर्थः । **वृत्तिकृतेति** । अदादि गुणेऽस्भुवीति धातुविचार इति शेषः ।

**स०व्र०— नित्यत्वादिति** । आर्धधातुके परत इति शेषः । **विभक्तिप्रतिरूपकमिति** । विभक्त्यन्तसदृशमित्यर्थः । **आमन्तेति** । इन्द्रामास कारणयामासेत्याद्यामन्तप्रयोगस्य सत्त्वादित्यर्थः ।

**विट्ठल०— अस्तेर्भूरित्यस्येति** । अस भुवीत्यस्य धातोर्भूरित्यादेशो भवत्यार्धधातुके पर इति सूत्रार्थः । **बभूवेति** । भवितव्यमिति भावः । शङ्कते **विभक्तीति** । **आमन्तानुप्रयोगस्येति** । केवलमासे-त्यादावाप्रत्ययानुप्रयोगस्य विद्यमानत्वादित्यर्थः ।





**एतदुक्तं भवति । अनुमानं हि धर्म्यादिप्रमितिमपेक्षते, न च धर्म्यादिरूपं ब्रह्मादिकं वेदादृते सिद्ध्यतीति तदनपेक्षायामाश्रयासिद्ध्यादिकम्, अपेक्षायां तु विरोधिनो धर्म्यादि-ग्राहकविरोधः; इत्येवं वैदिकेऽर्थेऽनुमानस्यावकाशोऽभिधित्सितः ।**

**मीमांसायां तु क्वचिद् आगमस्य** आगमान्तरेण **विरोध एव** अर्थनिर्णयार्थं **युक्तिः उपादीयते । सा खलु अन्यतरागम(प्रामाण्य)मुपोद्बलयन्त्यन्यतरागमबाधयाऽर्थनिर्णयाय प्रभवति, अन्यतरागमसिद्धधर्म्याद्याश्रयणेन(येण)ाश्रयासिद्ध्याद्यनवकाशात् । अन्यतरा-गमस्य धर्म्यादिग्राहकत्वाभावेनाप्रबलस्य,(?) आगमसचिवतया उपपत्तेः, ततो दुर्बलस्य (,?) अकिञ्चित्करत्वात् । तदेवमेवंविधोपपत्तेरागमिकेऽप्यर्थे सावकाशत्वात् उपपन्ना मीमांसेति ।**

**परि०**— कथमनेनोक्तशङ्कानिरासः । क्वचिदागमार्थस्य युक्त्या बाधे सर्वत्र तद्बाधस्या-वर्जनादित्यत आह **एतदुक्तमिति** । **धर्म्यादीति** । पक्षलिङ्गादीत्यर्थः । सिद्ध्यतीतीतिशब्दो हेत्वर्थः । **विरोधेन इति** । अनुमानस्येति योज्यम् । **अभिधित्सितः** अभिधातुमिष्टः । **आगम-बाधयेति** । आगमस्य प्रतीतार्थबाधयेत्यर्थः ।

**गु०दी०**— **आगमसचिवतयोपपत्तेस्ततो दुर्बलस्याकिञ्चित्करत्वात्** इत्यत्रोपपत्तेरागमसचिवतया कारणेन तत उपपत्तितः दुर्बलस्यान्यतरागमस्येति सम्बन्धः ।

**वं०प०**— **एवं** यदि वैदिकेऽर्थेऽनुमानस्यानवकाशस्तर्हीत्यर्थः । **तदिति** । धर्म्यादिप्रमितीत्यर्थः । विरोधिनोऽसार्वज्ञप्रतिपादकस्यानुमानस्येत्यर्थः । नन्वितरागमस्यापि धर्म्यादिग्राहकत्वेनोपजीव्यत्वात् कथं युक्तेस्तद्बाधकत्वमित्यत आह **अन्यतरागमस्येति** । **सचिवतयेति** । युक्त्यनुगृहीतप्रबलागमानुकूलत्वेनेत्यर्थः । **ततः** युक्त्युपेतागमात् । **एवंविधेति** । आगमसहकृतेत्यर्थः ।

**कं०रा०**— नन्वागमस्यागमान्तरेण यत्र विरोधस्तत्रान्यतरागममुपोद्बलयन्त्या उपपत्तेरन्यतरागम-सिद्धधर्माद्याश्रयणेन प्रवृत्ततया आश्रयासिद्धिधर्मिग्राहकविरोधयोरनवकाशेऽप्यागमान्तरस्य प्रबलत्वेन कथं तद्बाधनेनार्थनिर्णायकत्वमित्यत आह **अन्यतरागमस्येति** । नन्वागमान्तरस्य धर्म्यादिग्राहकत्वाभावेनाप्रबलत्वेऽपि समबलतया प्रतिपक्षत्वेनोपपत्तिकर्तव्यनिर्णयप्रतिबन्धकत्वं किं न स्यादित्यत आह **आगमसचिवतयेति** । उपपत्तीतरागमसचिवतया ततो दुर्बलस्यागमान्तरस्य अकिञ्चित्करत्वादित्यर्थः ।

**श्रीनिधि०**— **असिद्ध्यादिकं** आश्रयासिद्ध्यादिकम् । **सावकाशत्वात्** साश्रयत्वात् ।





**शे०वा०**— एवमुपयुक्तमभिधायोत्तरवाक्यं सङ्गमयति **नन्विति । एवं तर्हीति** । वैदिकेऽर्थेऽनुमानस्यानवकाश इत्यर्थः । ब्रह्मादिवस्तुष्वित्यादिना वैदिकेऽर्थे युक्तेर्निरवकाशत्वस्य वक्ष्यमाणत्वादिह तस्यास्तत्र सावकाशत्ववर्णनं तद्विरुद्धमित्याशङ्क्याह **विरोध इत्यतःपर इति** । नन्वेतावताऽपि कथमुक्तशङ्कापरिहार इत्यतो वैदिकेऽनुमानस्यानवकाशाङ्गीकारे ब्रह्मादिष्वित्यादिना वक्ष्यमाणं नियामकं दर्शयन्नेव मीमांसायां तदवकाशे मूले 'विरोधे निर्णयार्थं युक्तिरिष्यते' इत्यनेन सूचितं नियामकमाह **एतदुक्तं भवतीत्यादिना । इत्येवमिति** । तथा च धर्म्यादिप्रमित्यसम्भव एव तत्रानुमानाप्रवृत्तौ नियामक इति भावः । अस्तु तर्हि प्रकृतेऽपि धर्म्यादिप्रमित्यसम्भवादेव मीमांसायामप्यनुमानाप्रवृत्तिरित्यतः प्रकृते तदभावमुपपादयति **मीमांसायां त्विति । आगमसचिवतयेति** । अत्रागमसचिवतयेत्यतःपरं प्रबलत्वादिति शेषः । 'ततः' इत्यस्योपपत्तेः सकाशादित्यर्थः ।

**वा०र०**— **विरोधे निर्णयार्थमिति** । विरोधे एव निर्णयार्थमिति एवकारघटितत्वमूलानुसारेण तथैवोत्तरग्रन्थं अवतारयतीति । प्रघटकावतारोऽयम् । ननु तावता उपजीव्यविरोधस्याप्रामाण्ये प्रयोजकत्वात् प्रकृते न प्रामाण्यं इत्येतत्समर्पणस्य उपजीव्यविरोधः इत्येतावतैव भाष्येण पूर्तेः वेदस्यान्यार्थकल्पनेति भाष्यखण्डस्यानर्थक्यम् । उपजीव्यविरोधः इत्यनेनोक्तार्थप्रतिपादनानन्तरं प्राप्तायाः प्रकृतेऽपि उपजीव्यविरोधस्य सत्त्वात् श्रुतेरप्रामाण्यं प्रसज्येत इत्येतट्टीकायास्तु निवारकत्वेन प्रत्यक्षमुपजीव्यं स्यात् इत्युत्तरभाष्यं योजनीयं इति समानमेव । अन्यार्थकल्पनारूपमेवाप्रामाण्यं वेदस्य न तु सर्वथाऽप्रामाण्यमिति प्रतिपादनप्रसक्तिमूलभूतं वेदस्याप्युपजीव्यविरोधेऽप्रामाण्यमस्तीति यत् प्रमेयं तस्य पूर्वपक्षिणा आपादितत्वाभावेन सिद्धान्तिना तदप्यस्त्येवेति चाङ्गीकाराभावेन तदप्रामाण्याप्रसक्तौ तर्हि वेदोऽपि अप्रमाणमिति प्राप्तमिति शङ्कानुदयेन तत्परिहाराय तच्चाप्रामाण्यं भवन्न सर्वथा इत्यादि व्यवस्थायाः अवक्तव्यत्वेन तदर्थतया वेदस्यान्यार्थेत्यादिभाष्यप्रवृत्त्ययोगात् । अत एव उपजीव्यविरोधेन चाप्रामाण्यं भवत् इत्यवतारोऽपि मूलकारस्य कथन्तामर्हतीति चेत् अत्र ब्रूमः । यत्तावदुक्तं उपजीव्यविरोध इत्येव भाष्येण पूर्तेरिति । तत्तथैवेति ब्रूमः । न च तर्हि प्रकृतेऽपि उपजीव्यविरोधसत्त्वशङ्कावारणाय प्रत्यक्षमुपजीव्यं स्यात् इति भाष्यमेव सङ्गतं इति मध्येऽप्रामाण्यव्यवस्थापरं वेदस्य इत्यादिभाष्यं अनर्थकं इत्युक्तमिति वाच्यम् । भावानवबोधात् । अत्र हि भाष्यकारेण उपजीव्यविरोध इत्यंशेन अप्रामाण्यप्रयोजकउपजीव्यविरोधः इत्युक्ते तर्हि 'जनितोत विष्णोः' इत्यादि वेदस्यापि उपजीव्य 'निरनिष्टो निरवद्यः' इत्यादिविरोधात् अप्रामाण्यं स्यात् । मध्ये शङ्कायाः इष्टापत्तिरेव समाधानं बहिरेव 'उपजीव्यविरोधे तु न प्रामाण्यममुष्य च' इति ब्रह्मतर्कानुसारेण वाच्यम् । तदुपरि च तर्हि वेदस्याप्रामाण्याङ्गीकारात् अपसिद्धान्त इति शङ्कान्तरं यत् प्राप्तं तत्परिहाराय वास्तवस्थितिप्रदर्शनस्यावश्यकतया तदर्थं वेदस्यान्यार्थकल्पनेति भाष्यमावश्यकमेव इत्येतावतोऽर्थस्य प्रतिपादनक्रमेण प्राप्ते विज्ञानात् । तथा च एतावन्तं प्रतिपाद्यमर्थं सिद्धवत्कृत्यैव मूलात् सुज्ञेयमिति नासङ्गतिशङ्का कार्येति सुज्ञैः परिभावनीयम् ।

**स०व्र०**— **आश्रयासिद्ध्याद्यनवकाशादिति** । धर्म्याद्यस्य मानान्तराविरोधेन तस्य सिद्धत्वात् असिद्धत्वे च धर्म्यासिद्ध्या ऐक्यबोधकत्वमपि न स्यादिति भावः । **अन्यतरागमस्येति** । धर्म्यादि-





ग्राहकत्वाभावेनेत्यन्तम् अप्राबल्यहेतुः । **ततो दुर्बलस्य** । **तत** उपपत्तेः, **आगमसचिवतया** उपपत्तेः आगमसहकारित्वेन निमित्तेनेति योज्यम् । **तदेवंविधेति** । आगमसहकारिण्या इत्यर्थः ।

**विठ्ठल०—** क्वचिदागमस्यार्थस्य युक्त्या बाधे सति तदन्यत्रेति दृष्ट्वा धनस्य अविशेषणीयावर्जनीयत्वादित्यत आह **एतदुक्तमिति** । **विरोध इति** । अनुमानस्येति योज्यम् । **अभिधित्सितः** अभिधातुमिष्टः । **आगमसचिवतयेति** । न केवलमप्रबलस्य आगमसचिवतया कारणतया कारणेन तत उपपत्तेर्दुर्बलस्य चान्यतरागमस्येति योज्यम् ।

**॥ इति मीमांसारूपयुक्तेरुपयोगस्तु आगमेनागमस्य विरोधे सत्येव तदर्थनिर्णयार्थम् ॥**

* * *

**॥ अथ उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना ॥**

**४९ सु०— अपि च प्रत्यक्षागमविरोधोऽपि न स्वरूपेणाप्रामाण्यं प्रयोजयति किन्तु तयोरुपजीव्यत्वादिना प्राबल्ये सत्येव; दुर्बलयोः स्वयं बाधितत्वेन, समबलयोः प्रतिबन्धमात्रहेतुत्वेनाप्रामाण्यनिश्चयानुपपत्तेः । उपजीव्यादिविरोधेन चाप्रामाण्यं भवद्वेदस्य न सर्वथा अयथार्थत्वलक्षणम्, किन्नाम प्रतीतार्थप्रच्यावनमात्रम्; अपौरुषेयतया निर्दोषस्य सर्वथा अप्रामाण्यानुपपत्तेः; तथा चान्यार्थकल्पनाऽवश्यं कार्येत्याशयवानाह उपजीव्येति ।**

**अनु०— उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना ॥**

**उपलक्षणमेतत् । निरवकाशत्वादिकमपि ग्राह्यम् ।**

**भवत्वेवं ततः किम् । वेदोपजीव्यत्वादिकं च प्रत्यक्षागमयोरेव प्रायेण सम्भवति, युक्तेस्तु क्वचिदेव, पुरुषत्वादियुक्तेस्तु नास्त्येव । अतश्च न तद्विरोधेन वेदस्याप्रामाण्यं मन्तव्यमित्याशयेनाह प्रत्यक्षमिति ।**

**प्रत्यक्षमुपजीव्यं स्यात्प्रायो युक्तिरपि क्वचित् ।**
**आगमैकप्रमाणेषु तस्यैव ह्युपजीव्यता ॥**





वेदस्येत्यनुवर्तते । **स्यात्** इत्यतःपरम् 'इति'शब्दोऽध्याहार्यः । **तत्त्वमसीत्यादिवेदस्य प्रत्यक्षमुपजीव्यम्, युक्तिरपि क्वचित्** वेदस्य **उपजीव्या** इति सम्बन्धः । **यथा 'प्राणा वा अणव' इत्यादेः । आगमैकप्रमाणकेषु विष्णवादिविषयेषु प्रवर्तमानं 'जनितोत विष्णोः' इत्यादिवेदं प्रति 'निरनिष्टो निरवद्य' इत्यादेस्तस्य वेदो(दस्यो)पजीव्यतेत्यर्थः ।**

**एवं निरवकाशत्वादिकमपि प्रत्यक्षागमयोरेव प्रायेण सम्भवति, युक्तेस्तु क्वचिदेव । तच्च न प्रकृतयुक्तेरित्यपि द्रष्टव्यम् ।**

**परि०—** कैमुत्यन्यायेनाप्यागमस्यानुमानविरोधोऽकिञ्चित्कर इत्याह **अपि चेति** । **उपजीव्यत्वादिनेति** । निरवकाशत्वादिरादिपदार्थः । प्राबल्ये सत्येवेत्येतदुपपादयति **दुर्बलयोरिति** । **वेदेति** । वेद प्रत्युपजीव्यत्वादिकं चेत्यर्थः । **क्वचिदेवेति** । एतच्च 'प्राणा वा अणवः' इत्याद्यागमस्थल इत्यग्रे व्यक्तम् । **पुरुषत्वादिति** । ईश्वरो न सर्वज्ञः पुरुषत्वाद्यज्ञदत्तवदिति प्रागुक्तयुक्तेरित्यर्थः । **इतिशब्दोऽध्याहार्य इति** । स च हेत्वर्थः । प्रायः प्रत्यक्षमुपजीव्यं स्यादिति हेतोः पुरुषत्वयुक्तेस्तदभावात् तद्विरोधो वेदस्याकिञ्चित्कर इति योज्यमिति भावः । **इत्यादिवेदस्येति** । प्रत्यक्षसिद्धं जीवं त्वमित्युद्दिश्य तदसीति ब्रह्माभेदस्य वाच्यत्वादिति भावः । **यथा प्राणा वा अणव इति** । रूपाद्युपलब्धयः करणसाध्याः क्रियात्वात् छिदिक्रियावदित्यादियुक्तिसिद्धानि प्रमाणसिद्धेन्द्रियाण्युद्दिश्य अणुत्वस्य विधेयत्वादिति भावः । **जनितेति** । जनयिता विष्णोरित्यर्थः । **न प्रकृतेति** । पुरुषत्वादियुक्तेरित्यर्थः ।

**यादु०—** पूर्वं प्रत्यक्षागमविरोध एवाप्रामाण्यप्रयोजको न युक्तिविरोधः, तथा च तद्व्युत्पादनं प्रकृतासङ्गतमित्युक्तम् । इदानीमुपजीव्यत्वादिना प्रबलप्रत्यक्षादिविरोध एवाप्रामाण्यप्रयोजकतयाऽवश्यं वाच्यस्तथा प्राबल्यं च न पुरुषत्वादियुक्तेरस्तीति वक्तुमाह **अपि चेत्यादिना** । प्रसङ्गादाह **उपजीव्यादिविरोधेन चेति** । **इतिशब्द इति** । तथा च वेदस्य प्रत्यक्षमुपजीव्यं स्यादिति योऽर्थः स प्रायो बहुस्थलसम्बन्धीत्यर्थः । इतिशब्दाध्याहाराभावे त्वनन्वय इति ज्ञातव्यम् । **यथा प्राणा वा इति** । अत्र प्राणपदेनानुमानसिद्धानि चक्षुरादीन्यनूद्य तेषामणुत्वं विधीयत इति भावः ।

**वं०प०— दुर्बलयोरिति** । प्रत्यक्षागमयोः । बाधितत्वेनागमेनैव । **प्रतिबन्धेति** । अत्र प्रत्यक्षागमविरोधो यस्यागमस्योच्यते तदागमोक्तार्थप्रतिबन्धेत्यर्थः । **निश्चयेति** । तद्विरोधो नेति शेषः । ननूपजीव्यतद्विरोधेनाप्यपौरुषेयस्याप्रामाण्यं नाम कीदृशमित्यत आह **उपजीव्यादीति** । **सर्वथा** निर्विषयत्वेन ।





**ग्राह्यमिति** । **तथा च** उपजीव्यविरोधे निरवकाशप्रत्यक्षागमविरोधे चेत्यर्थः । **प्रायेण** बाहुल्येन । क्वचिदेवोपजीव्यत्वमिति वर्तते । नास्त्येवेत्यत्राप्येतदनुवर्तते । **इतिशब्द इति** । वेदस्य प्रत्यक्षमुपजीव्यं स्यादित्येतत्प्राय इत्यर्थः । यथा प्राणा वा इत्यनेन युक्तेस्तु क्वचिदेवेत्येतद्विवृतं भवति । निरवकाश-प्रत्यक्षागमविरोधे चेत्यर्थः । **प्रायेण** बाहुल्येन । **युक्तेः** मृन्न वक्ति जडत्वादित्येवंरूपायाः । **तच्च** निरव-काशत्वम् । **प्रकृतयुक्तेः** पुरुषत्वादियुक्तेरित्यर्थः ।

**कं०रा०— उपलक्षणमिति** । 'उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पने'त्युपलक्षणम् । निरवकाश-प्रमाणविरोधेऽन्यार्थकल्पना । तथोपसंहारविरोधे उपक्रमस्यान्यार्थकल्पनेत्यादिकं च ग्राह्यमित्यर्थः । यदा निरवकाशत्वादिकमित्यादिशब्देन जात्या प्राबल्यं गृह्यते तथा च निरवकाशप्रमाणविरोधे वेदस्यान्यार्थकल्पना जात्या यत्प्रबलं तद्विरोधे चान्यार्थकल्पनेति ग्राह्यमित्यर्थः । **पुरुषत्वादीति** । ईश्वरो न सर्वज्ञः पुरुषत्वादित्यादि युक्तेस्तूपजीव्यत्वादिकं नास्त्येवेत्यर्थः । **स्यादित्यतःपरं इतिशब्दोऽध्याहार्य इति** । तथा च वेदस्य प्रत्यक्ष-मुपजीव्यं स्यादित्येतत्प्रायं इति योजनोक्ता भवति । **तत्त्वमसीत्यादीति** । तत्त्वमसीत्यनेन त्वम्पदार्थभूतं जीवरूपधर्मिणमुद्दिश्य ब्रह्मैक्यं विधीयते । जीवग्राहकं प्रत्यक्षं धर्मिग्राहकत्वेन तद्वाक्यस्योपजीव्यमिति भावः । युक्तिः कस्य वेदस्योपजीव्येति जिज्ञासायामाह **यथेति** । प्राणा वा अणवः । इति वाक्येन प्राणशब्दितेन्द्रि-याणि धर्मीकृत्याणुत्वं विधेयमिन्द्रियरूपधर्मिसिद्धिश्च रूपाद्युपलब्धयः करणसाध्याः क्रियात्वादिति युक्त्या अतः सा युक्तिर्धर्मिग्राहकत्वेन तद्वाक्यस्योपजीव्येति भावः । **निरनिष्टो निरवद्य इत्यादेरिति** । 'निरनिष्टो निरवद्य' इत्यादिवेदसिद्धस्य विष्णोः 'जनितोत विष्णोरि'त्यादि वेदेन 'सोमः पवते जनिता मतीनामि'त्युक्तसोमाज्जनिमत्वं प्रतिपादनीयमिति निरनिष्ट इत्यादेर्जनितोत विष्णोरित्यादिकं प्रत्युपजीव्यत्वमिति भावः । **एवमिति** । उपजी-व्यत्वप्रयुक्तप्राबल्यमिव निरवकाशत्वप्रयुक्तप्राबल्यं आप्तप्राबल्यं च प्रत्यक्षागमयोरेव प्रायेण सम्भवति । युक्तेस्तु क्वचिदेव । तच्चेश्वरो न सर्वज्ञः पुरुषत्वादिति युक्तेर्नेत्यपि द्रष्टव्यमित्यर्थः ।

**शे०वा०—** ननु वक्तव्यस्य सर्वस्याप्युक्तत्वात् किमुपजीव्यविरोधे तु इत्यादिनेत्यतो, युक्तिविरोधेन श्रुतेरप्रामाण्यशङ्कायाः प्रत्यक्षागमविरोधस्यैवाप्रामाण्यप्रयोजकत्वेन युक्तिविरोधस्य तदभावान्न युक्तिविरोधेन श्रुतेरप्रामाण्यप्रसङ्ग इति 'विरोधोऽपि स एवोक्तः' इत्येवं समाधानमुक्तं; तत्रैवोत्तरग्रन्थेन तूपजीव्यविरोधस्यैव तत्प्रयोजकत्वात् प्रकृतयुक्तेश्चानुपजीव्यत्वेनोपजीव्यविरोधाभावान्नाप्रामाण्यप्रसङ्ग इति समाधानान्तरमुच्यत इति नानर्थक्यमिति भावेन तथैवोत्तरग्रन्थमवतारयति **अपि चेत्यादिना** । **स्वरूपेण** प्रत्यक्षागमविरोधत्वेनेत्यर्थः । यदि स्वरूपेण प्रत्यक्षागमविरोधस्याप्रामाण्यप्रयोजकत्वं केन तर्हि रूपेण प्रयोजकत्वमिति पृच्छति **किन्त्विति** । उत्तरमाह **तयोरिति** । उपजीव्यत्वादिनेत्यादिपदेन निरवकाशत्वपरिग्रहः । स्वरूपेणैव तद्विरोधस्य प्रयोजक-त्वोपपत्तौ किं रूपान्तराश्रयणेनेत्यत आह **दुर्बलयोरिति** । नन्वस्त्वेवमुपजीव्यविरोधस्यैवाप्रामाण्यप्रयोजक-त्वसिद्धिस्तथाऽपि भाष्ये वेदस्यान्यार्थकल्पनावर्णनमनर्थकमुपजीव्यविरोधेन वेदाप्रामाण्यस्यैव वर्णनीयत्वात् । न चोपजीव्यविरोधप्रयुक्तमप्रामाण्यमेतदेवेति दर्शयितुमन्यार्थकल्पनावर्णनमिति वाच्यम् । अन्यत्र क्लृप्तायाथार्थ्य-





रूपाप्रामाण्यस्यैव वेदेऽपि तत्प्रयुक्तत्वस्य सम्भवेन तत्परित्यागायोगादित्यत आह **उपजीव्यादिविरोधेनेति** । **सर्वथाऽप्रामाण्येति** । अयथार्थत्वलक्षणाप्रामाण्येत्यर्थः । निरवकाशत्वादिकमित्यादिपदेन बहुत्वपरिग्रहः । तथाऽपि वेदं प्रति प्रत्यक्षागमयोरेव प्रायेणोपजीव्यत्वस्य युक्तेस्तु क्वचिदेव तदुपजीव्यत्वस्य पुरुषत्वादित्युक्तेश्च सर्वथाऽनुपजीव्यत्वस्य च वर्णनपरोत्तरवाक्यानर्थक्यमित्यत उपजीव्यविरोधस्यापि प्रकृते सत्त्वेन साधन-व्यापकतयोपजीव्यविरोधस्य नोपाधित्वमित्याशङ्कापरिहारार्थं तदिति भावेन तां शङ्कामुत्थापयति **भवत्त्वेवमिति** । उपजीव्यविरोधस्यैवाप्रामाण्यप्रयोजकत्वं भवत्वित्यर्थः । **तत इति** । प्रकृतेऽप्युपजीव्यविरोधाच्छ्रुतेरप्रामाण्य-मुपपन्नमिति भावः । **अतश्चेति** । न केवलं प्रत्यक्षागमविरोधस्यैवाप्रामाण्यप्रयोजकत्वेन युक्तिविरोधस्य तदभावान्न पुरुषत्वादियुक्तिविरोधेन श्रुतेरप्रामाण्यमित्येव किन्नामोपजीव्यविरोधस्यैवाप्रामाण्यप्रयोजकत्वेन पुरुष-त्वादियुक्तेश्चानुपजीव्यत्वेन तद्विरोधस्याप्रामाण्याप्रयोजकत्वाच्च न तद्विरोधेन श्रुतेरप्रामाण्यं वक्तुं शक्यमित्यर्थः । **अनुवर्तत इति** । वेदस्यान्यार्थकल्पनेति पूर्ववाक्यादिति शेषः । अत्र प्राय इत्यस्य युक्तिशब्देन सन्निहितत्वात् तेनैवान्वयः प्रतीयते न चासौ युक्तः । तथा सति वेदं प्रति युक्तेरेव बाहुल्येनोपजीव्यत्वमित्यापातात् । न चागमं प्रति युक्तेर्बाहुल्येनोपजीव्यत्वं सम्भवति । क्वचिदित्युक्तक्वाचित्कत्वेन विरुद्धत्वाच्च । न च क्वचिदित्यस्य प्रत्यक्षं प्राय उपजीव्यं स्यादित्यन्वये न दोष इति । तथा सति सन्निहितान्वयपरित्यागापत्तेः । प्रत्यक्षस्य वेदं प्रत्युपजीव्यतानियमस्य प्रायिकत्वालाभाच्चेत्यत आह **स्यादित्यतःपरमितिशब्दोऽध्याहार्य इति** । अनेन प्रत्यक्षमुपजीव्य स्यादित्येतत्प्रायो बाहुल्येनेत्यन्वय इत्युक्तं भवति । **प्राणा वा अणव इत्यादेरिति** । अत्र रूपाद्युपलब्धिः सकरणिका क्रियात्वाच्छिदिक्रियावदित्यनुमानसिद्धचक्षुरादीनि प्राणपदेनानूद्य तेषामणुत्वविधाना-द्युक्तेरागमं प्रत्युपजीव्यत्वमिति द्रष्टव्यम् । 'युक्तोऽयुक्तश्च यद्यर्थ आगमस्य' इत्युत्तरग्रन्थस्याव्यवहितपूर्वग्रन्थेन सङ्गतिर्न प्रतीयत इत्यतस्तं सङ्गमयति **आगमयोरित्यादि** ।

**वा०र०— तेनैवेति** । सन्निहितयुक्तिशब्देन एव इत्यर्थः । **बाहुल्येनोपजीव्यत्वमिति** । बहुस्थलाव-च्छेदेनोपजीव्यत्वमित्यापातादित्यर्थः । अत्र च युक्तिबाहुल्येनोपजीव्येत्युक्ते समानसंवित्संवेद्यतयोपजीव्यत्वे बाहुल्यस्य भानेऽपि न दोषः । तद्यथा घटत्वेन घटं जानाति घटत्वेन कार्यता तेन कारणतेत्यादौ घटत्वादीनां घटेन वा ज्ञानादिना वा सम्बन्धेऽपि उभयत्रापि अर्थसम्बन्धप्रत्ययः । सर्वानुभवसिद्धं चेदम् । परन्तु घटः कथं ज्ञानविषयः इत्येवमाकाङ्क्षानिवृत्तये प्रयुक्तस्य घटत्वेनेत्यस्य घट एव प्रकारान्तरव्यावृत्तिबुद्धिजनकता इत्यादि कश्चित् विशेषोऽपि आश्रयत एव । एवं च प्रकृते बाहुल्येन उपजीव्यत्वं इत्येतत् वाक्यार्थतया बाहुल्ये उपजीव्यत्वसम्बन्धश्चेति कश्चित् ब्रूयात् तदा सोऽपि न दुष्यत्येव । युक्तिशब्देनान्वयं मूलीकृत्य युक्ति-विशेषणत्वेनैव बोध इति पक्षे तु समानसंवित्संवेद्यतयोपजीव्यत्वेऽपि बाहुल्यभावेऽपि आकाङ्क्षानुसारेण युक्तेरेव बाहुल्येन इत्यनेन युक्तिगतरूपान्तरव्यावृत्तिः बाहुल्येन भवतीति युक्तेरेवात्र बाहुल्यप्रतिपादनं नोपजीव्यत्वस्य इति मन्तव्यम् । एतेन युक्तिशब्देन प्रायःपदस्यान्वये युक्तेरेव बाहुल्यप्राप्तावपि उपजीव्यत्वस्य तदप्राप्तिरिति कथं बाहुल्येन उपजीव्यत्वमिति बाहुल्यं उपजीव्यत्वविशेषणतया आश्रितमित्यपास्तम् । उक्तरीत्या उभयत्र बाहुल्य-





भावेन एकैकविशेषणत्वपक्षेऽपि प्रतीतौ उभयत्रार्थान्वयभानस्यावर्जनीयतया च तथोक्तावपि दोषाभावात् । वस्तुतः आकाङ्क्षायाः अनुसर्तव्यत्वात् उभयत्रापि अन्वयबोधेऽपि युक्तावेव बाहुल्यं विशेषणीभूततया अङ्गीकृतमिति न कश्चित् क्षुद्रोपद्रवः । **क्काचित्कत्वेनेति** । युक्तिरपि क्कचित् इति हि आकाङ्क्षानुसारेण युक्तेः क्काचित्कत्वं प्राप्तम् । तत्र प्रायस्त्वस्याप्युक्तौ युक्तिः क्कचित् बाहुल्येन उपजीव्येत्यर्थप्राप्त्या विरोध इत्यर्थः । न च क्कचिदित्यस्य उपजीव्येत्यनेनान्वये विरोधानवकाशः इति वाच्यम् । तावतापि समानसंवित्संवेद्यतया युक्तिगतक्काचित्कतायाः अपि भानेनान्ततः युक्तिबाहुल्येनोपजीव्ययुक्तेः उपजीव्यत्वं क्कचिदिति तयोरपि विरोधस्य सर्वसम्मतत्वेन विधोक्तेः उपपन्नतरत्वात् । क्कचिदित्यस्योपजीव्यपदान्वयस्य मूले टीकायां च उक्तत्वे तथा शङ्कामात्रावकाशोऽपि तयोस्तथानुक्तत्वेन सन्निधानेनैवान्वयस्य प्राप्त्या विरोधस्य सुकरत्वाच्च युक्तिपदेन अनन्वयादिति । सन्निधानेन हि युक्तिपदेनान्वयमङ्गीकृत्य विरोधः शङ्कितः । अस्माभिस्तु सन्निधानमाश्रित्य युक्तिपदेनान्वयस्यानङ्गीकारात् । योग्यतया उपजीव्यमित्यनेनान्वयाङ्गीकाराच्च न विरोधः इत्याशयात् न कश्चिद्दोषः । न हि सम्भावितान्वयाशङ्कनेन ग्रन्थप्रसक्तौ सत्यां क्कचिदित्युक्तक्काचित्कत्वेन विरोधाच्चेति विशेषान्वये स्पष्टीकृते च सति पूर्वं युक्तिपदेनान्वयानुक्तेः अत्र निषिधे करणानुपपत्तिरिति शङ्कावकाशमासादयतीति ध्येयम् । **व्यवहितेति** । न च सन्निहितान्वये बाधकसद्भावे व्यवहितान्वयाङ्गीकारोऽयुक्त एवेति वाच्यम् । तथा सति सन्निहितासन्निहितान्वयकरणं कुत्राप्यसङ्गतं स्यात् । सर्वत्रापि शङ्कित्रा सन्निहिता च ये दूषिते व्यवहितान्वयापादिते तं प्रति इष्टत्वेन समाधानं सुलभं स्यात् । व्यवहितान्वयस्यायोग्यत्वे वा प्रतिपादयित्रानभिप्रेतत्वे वा तदङ्गीकारायोगेन सन्निहितान्वये बाधकमात्रेण तदङ्गीकारायोगाच्च । अत एव व्यवहितान्वये बाधकान्तरमुक्तं **प्रत्यक्षस्येति** । वस्तुतः प्रत्यक्षस्य बाहुल्येन उपजीव्यत्वेनेत्यर्थः । **सन्निहितान्वयेति** । एतदपि पूर्ववत् समाधेयम् । **नियमस्येति** । न च प्रत्यक्षस्य बाहुल्येन उपजीव्यत्वातिरिक्तं न नियमप्रापकत्वमिति कथं तदलाभाभिधानं इति वाच्यम् । समानसंवित्संवेद्यतया वा आर्थिकलाभाद्वा प्रत्यक्षस्य बाहुल्येन उपजीव्यत्वोक्तौ नियमप्रायिकत्वभानेऽपि प्रत्यक्षस्य बाहुल्येन उपजीव्यत्वस्य नियमाप्रापकतायाश्च भिन्नविशेष्यकत्वादिनैक्यानुपपत्तेः । न हि प्रत्यक्षं प्रायः उपजीव्यं प्रत्यक्षं उपजीव्यं स्यात् इति प्रायः । प्रत्यक्षं उपजीव्यं प्रायः स्यात् इत्युक्तिषु प्रमेयभेदोऽस्ति । बोधवैलक्षण्येन वाचनिकार्थे प्रकारप्रकारिवैलक्षण्यमित्येवेत्यलम् । **स्यादित्येतत् प्राय इति** । ननु व्यवहितान्वयात् बिभ्यता कथमध्याहारो मूलकृतानुसृतः इति चेत् । न । न हि व्यवहितान्वयप्रसङ्गमात्रं बाधकम् । अपि तु सिद्धान्त्यभिप्रेतार्थलाभोऽपि(र्थालाभोऽपि) । एवं चाध्याहारेऽभिप्रेतार्थलाभसौकर्यात् तदङ्गीकारोऽत्र । यदि पुनः व्यवहितान्वयेऽपि अभिप्रेतार्थसिद्धिः तदा तथान्वयं को नु नानुमन्येत इत्याशयादिति सर्वमनवद्यम् ।

**स०व्र०— उपजीव्यत्वादिनेति** । आदिशब्देन निरवकाशत्वं ग्राह्यम् । निरवकाशत्वादिकमित्यत्र आदिपदेन स्वरूपप्राबल्यसङ्ग्रहः । प्राय इत्यस्य न युक्तिरित्यनेनान्वयः । क्कचिदित्यनेन विरोधात् । 'विरोधोऽपि स एवोक्तः प्रत्यक्षेणागमेन वा' इत्युक्तस्यानुवादेन प्रायिकत्वस्यैव विधातव्यत्वात् तस्य च इतिशब्दमन्तरेण





असम्भवात् तदध्याहारेणाह **स्यादित्यतःपरमिति** । तथा च 'प्रत्यक्षमुपजीव्यं स्यात्' इत्येतत् प्रायो बाहुल्यमिति योजना । **यथा प्राणा वेति** । प्राणाः अणव उत्क्रान्त्यादिमत्त्वात् जीववदिति युक्तिः उपजीव्येत्यर्थः ।

**स०ना०— प्रत्यक्षमुपजीव्यं स्यादिति** मूलसुधायां **स्यादित्यतःपरं इतिशब्दोऽध्याहार्य इति** वाक्यमस्ति । तत्तु नात्रत्यं, इतिशब्दाध्याहाराभावेऽपि प्रत्यक्षं प्रायः उपजीव्यं स्यादिति अन्वयसम्भवेन अनावश्यकत्वात् । तत्त्वमसीत्यादि वेदस्येति योजनावसरे इतिशब्दस्यायोजितत्वाच्च । किं तु **स्यात्तत्र युक्त एवार्थ इति** मूलसुधायां द्रष्टव्यम् । तत्रैवं योजना द्रष्टव्या । आगमस्य किमयमर्थः स्यात् उत स इति वस्तुतः युक्तोऽयुक्तश्चार्थो यत्र प्रतीयते तत्र युक्त एवार्थो नायुक्तो ग्राह्य इति ।

**विट्ठल०—** पूर्वप्रत्यक्षागमविरोध एवाप्रामाण्यप्रयोजको न युक्तिविरोधः । अतस्तद्व्युत्पादनं न प्रकृत-सङ्गतमित्युक्तम् । इदानीमुपजीव्यत्वादिना प्रबलप्रत्यक्षागमयोर्विरोधस्यैव वेदप्रतीतार्थमात्रे अप्रामाण्यप्रयोजकत्वं तदुपजीवियुक्तेस्तु क्वचिदेव पुरुषत्वादियुक्तेस्तु सर्वथा नास्त्येवेति वक्तुमाह **अपि चेत्यादिना** । निरवकाश-त्वादिकमित्यादिशब्देन बहुत्वग्रहणम् । ननु प्रत्यक्षं प्राय उपजीव्यं स्यादिति बहुस्थलेषु प्रत्यक्षस्योपजीव्यत्वं क्वचिन्नेति प्रतीयते । सर्वत्र प्रत्यक्षस्यागमस्वरूपग्राहकत्वेन विरुद्धमसङ्गतं चेत्यत आह **स्यादित्यतःपरमिति** । तथा च प्रत्यक्षस्योपजीव्यत्वं स्यादित्यभिप्रायः । **क्वचिद्युक्तिरपीति** । युक्त्यपेक्षया बाहुल्यं लभ्यत इत्यर्थः । **प्राणा वा इति** । अत्र प्राणशब्देनानुमानसिद्धेन्द्रियाण्युच्यन्ते । अतो रूपाद्युपलब्धयः करणसाध्याः कार्यत्वादिति युक्तिरुपजीव्येति ज्ञेयम् ।

**॥ इति उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना ॥**

* * *

**॥ अथ आगमस्य युक्तायुक्तार्थद्वयप्रतीतौ च युक्तार्थस्यैव ग्रहणम् ॥**

**४६ सु०— 'आगमयोः परस्परविरोधे सत्यन्यतरागमाश्रयेण युक्तेरनुप्रवेशोपपत्तेर्युक्ता मीमांसेत्युक्तम् । तदनुपपन्नम्, असार्वत्रिकत्वात् । न हि सर्वत्रागमयोः परस्परविरोध एव मीमांसाऽवतार्यत'; इत्यत आह युक्त इति ।**

**अनु०— युक्तोऽयुक्तश्च यद्यर्थ आगमस्य प्रतीयते ।<br>स्यात्तत्र युक्त एवार्थः**





**तत्र तर्हि । अयमभिसन्धिः । सत्यमेतत्क्वचिदेवायं न्याय इति; तथाऽपि यत्र नैवं तत्रैकस्यैवागमस्यानेकार्थप्रतीतौ युक्त्यनुसारिणमर्थमुपादाय तदननुगुणतद्विरुद्धार्थपरित्यागः क्रियत इति नोक्तनियमभङ्गः, केवलयुक्तेर्वैदिकेऽर्थे अनुप्रवेशस्य अनङ्गीकृतत्वात्; नापि मीमांसाऽनुपपत्तिः, अन्यतरवैदिकार्थानुसारिण्या युक्तेरङ्गीकृतत्वादिति ।**

**परि०— न हि सर्वत्रेति** । जिज्ञासासूत्रादौ । जिज्ञासा न कार्येति विरोधिश्रुतेरभावादिति भावः ।

**यादु०— असार्वत्रिकत्वादिति** । तथा च क्वचिद्वैदिकेऽर्थे केवलयुक्तेः प्रवेशप्राप्त्या 'ब्रह्मादिवस्तुषु । प्रमाणं वेद एवैक' इत्युक्तनियमभङ्ग इति भावः ।

**वं०प०— अयं न्यायः** । आगमेनागमस्यैव विरोधे युक्तिरित्ययमित्यर्थः । **नैवम्** आगमेनागमस्य विरोधो नेत्यर्थः । कुत इत्यतस्तद्विवृणोति **केवलयुक्तेरिति** ।

**कं०रा०— अन्यतरेति** । अन्यतरो यो वैदिकोऽर्थस्तदनुसारिण्या इत्यर्थः ।

**शे०वा०—** असार्वत्रिकत्वमेवोपपादयति **तत्र तर्हीति** । 'युक्तोऽयुक्तश्च यद्यर्थः' इति पूर्वत्र यदीति श्रवणादिति भावः । कथमनेनोक्तशङ्कापरिहार इत्यत आह **अयमभिसन्धिरिति** । **इति नोक्तेति** । इति नोक्तनियमभङ्गो नापि मीमांसारम्भानुपपत्तिरिति सम्बन्धः । न चानेनोक्तनियमभङ्गाभावे मीमांसारम्भानुपपत्त्यभावे च को हेतुरुक्त इत्यत उभयत्रैतन्मूलसूचितौ हेतू दर्शयति **केवलेति** । **अन्यतरेति च** ।

**स०व्र०— असार्वत्रिकत्वादिति** । आगमेनागमस्य विरोधस्येति शेषः । उक्तनियमाभङ्गमेव दर्शयति **केवलयुक्तेरिति** ।

**विठ्ठल०— असार्वत्रिकत्वादिति** । तत्क्वचिद्वैदिकेऽर्थे केवलयुक्तेः श्रौतार्थेऽनुप्रवेशाङ्गीकारादुक्तशङ्का तदवस्थैवेत्यत आह **अयमभिसन्धिरिति** । **युक्त्यनुसारिणमर्थमुपादायेति** । उक्तं सन्न्यायरत्नावल्यां श्रुतेः श्रुत्यन्तरविरुद्धाया युक्त एवार्थः स्वीकार्यो नायुक्तः, तद्यथा 'अन्धो मणिमविन्ददि'त्यादि श्रुतेः । प्रातीतिकार्थो अयुक्तः परित्याज्यः प्राकृतचक्षुरादिरहितस्य चिन्मयचक्षुरादिरहितस्य हरेर्मणिदर्शनादिरूपो युक्तोऽर्थः स्वीकार्य इति । **केवलयुक्तेरिति** । श्रुत्यनुसारि युक्तेरित्यर्थः ।

**॥ इति आगमस्य युक्तायुक्तार्थद्वयप्रतीतौ च युक्तार्थस्यैव ग्रहणम् ॥**

* * *





**॥ अथ युक्तिमूलयुक्त्यपेक्षया प्रत्यक्षागममूलयुक्तेर्बलीयस्त्वम् ॥**
**॥ अथ तत्र युक्तित्रैविध्यम् ॥**

४७ **सु०—** प्राक् पुरुषत्वादियुक्तिविरोधेन आगमस्याप्रामाण्यं न वाच्यमित्युक्तम्, इदानीं तु युक्तिरेवासौ प्रत्यक्षागमविरोधेनाप्रमाणम्, तस्यास्तदुपजीवित्वेन ततो दुर्बलत्वात्; इत्याशयवानाह **युक्तिश्चेति ।**

**अनु०—** युक्तिश्च त्रिविधा मता ॥

यद्वा यत्सिद्धवत्कृत्य तत्र मीमांसारम्भानुपपत्तिः परिहृता, तदिदानीं दर्शयितुमाह **युक्तिश्चेति ।**

**च**शब्दः प्रकृतानुसन्धानार्थः ।

कथं त्रैविध्यमित्यत आह **व्याप्तिरिति ।**

व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा ।

**यस्याः** युक्तेः साध्येन **व्याप्तिः प्रत्यक्षगा** प्रत्यक्षावगता सैका । **युक्तिगा** युक्त्यवगता **यस्या व्याप्तिः** सा द्वितीया । तथा **आगमगा** आगमावगता **यस्या व्याप्तिः** सा तृतीयेति । एवं त्रिविधेति योज्यम् ।

उपलक्षणं चैतत्, ध(र्मा)र्म्यादिग्राहकभेदेनापि त्रैविध्यं द्रष्टव्यम् । एतच्च स्पष्टयिष्यामः ।

**परि०— परिहृतेति** । 'आगमेनागमस्यैवे'त्यत्रेति भावः । **दर्शयितुम्** । 'प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी'त्यत्र । **धर्मादीति** । यस्याः युक्तेः साध्यो धर्मः प्रत्यक्षयोग्यः सैका विधेत्येवंरूपेण द्रष्टव्यमिति भावः । क्वचिद्धर्म्यादीति पाठः । **एतच्च स्पष्टयिष्याम इति** । 'प्रत्यक्षमागमो वापि भवेद्यत्र नियामकः । सैव व्याप्तिर्भवेन्मानं नान्या सन्दिग्धमूलत' इति वैशेषिकनयानुव्याख्यावसरे धूमाग्न्योः प्रत्यक्षावगता व्याप्तिः । ब्राह्मणो न हन्तव्य इत्यत्रागमगृहीता व्याप्तिः । जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादिकेवलव्यतिरेकिण्यनुमानगृहीतव्याप्तिरिति





स्पष्टयिष्याम इत्यर्थः । अत्रैव प्रकरणे 'व्याप्तिरेव तु सा स्मृते'त्येतद्व्याख्यावसरे च स्पष्टयिष्याम इत्यर्थः । तत्र व्यतिरेकिणि व्याप्त्यनुमानप्रकारस्य विवरिष्यमाणत्वात् ।

**यादु०— यत्सिद्धवत्कृत्येति** । **यत्** वैदिकेऽर्थे युक्तेरप्रवेशेनाबाधकत्वम् । **सिद्धवत्कृत्य** अभिप्रेततयोक्त्वेति यावत् । **परिहृता** आगमेनागमस्यैवेत्यत्रेति शेषः । दर्शयितुं 'प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी'त्यत्रेति शेषः । **आह** आदौ तावद्युक्तेस्त्रैविध्यमिति शेषः । **स्पष्टयिष्याम इति** । 'प्रत्यक्षमागमो वाऽपि भवेद्यत्र नियामकः । सैव व्याप्तिर्भवेन्मानं नान्या सन्दिग्धमूलतः' इत्यनुव्याख्यानव्याख्यावसरे, प्रत्यक्षगृहीतव्याप्तिर्यथा, धूमस्याग्निना । आगमगृहीता यथा, ब्राह्मणो न हन्तव्य इति । अनुमानगृहीता यथा, व्यतिरेकप्रयोग इति स्पष्टयिष्याम इत्यर्थः ।

**वं०प०— असौ** पुरुषत्वादिरूपः । **तदिति** । प्रत्यक्षागमेत्यर्थः । **ततः** प्रत्यक्षागमाभ्याम् । **यत्सिद्धवत्कृत्येति** । युक्तेरागमाद्युपजीवित्वप्रकारमित्यर्थः । **धर्म्यादीति** । तथा च प्रत्यक्षगृहीतधर्मिकैका युक्तिः, आगमावगतधर्मिकाऽन्या, युक्त्यवगतधर्मिकाऽपरेत्येवंरूपेणापि युक्तेस्त्रैविध्यं द्रष्टव्यमित्यर्थः । आदिपदेन प्रत्यक्षगृहीतहेतुका, आगमगृहीतहेतुका, युक्तिगृहीतहेतुका इत्यादिरूपेणापि त्रिविधत्वं ग्राह्यम् । तस्यागमादेर्बाधिका भवत्वित्यन्वयः । आगमाद्युपजीव्यत्वे खलु तद्बाधकत्वं स्यात् । इयं च न तथेत्याशयः ।

**श्रीनिधि०— चशब्दः प्रकृतानुसन्धानार्थ इति** । मीमांसोपयोगियुक्त्यनुसन्धानार्थ इत्यर्थः ।

**शे०वा०—** मूले 'युक्तिश्च त्रिविधा मते'ति युक्तित्रैविध्यं किमर्थमुच्यत इत्यतस्तत्प्रयोजनं दर्शयन्नुत्तरमूलमवतारयति **प्रागिति** । **यत्सिद्धवत्कृत्येति** । आगममूलकयुक्तेर्वैदिकेऽप्यर्थेऽवकाशं सिद्धवत्कृत्यागमेन आगमस्यैवेति पूर्ववाक्ये मीमांसारम्भानुपपत्तिः परिहृता । सा तदा स्याद्यद्यागमादिमूलकत्वं युक्तेः स्यात् तदेव नास्तीत्यतस्तन्मूलत्वं दर्शयितुं युक्तेर्विभागमाहेत्यर्थः । अत एव पूर्वमेवंविधोपपत्तेरागमिकेऽप्यर्थे सावकाशत्वादुपपन्ना मीमांसेत्युपसंहृतम् । तत्रत्यस्यैवंविधोपपत्तेरित्यस्य पदस्य समूलोपपत्तेरित्यर्थकत्वात् । **प्रकृतानुसन्धानार्थ इति** । आगमयोः परस्परविरोधे सति निर्णयार्थमनुसृतप्रकृतयुक्त्यनुसन्धानार्थ इत्यर्थः । मूले यस्या युक्तेर्व्याप्तिः प्रत्यक्षगा सा युक्तिस्त्रिविधेत्येव प्रत्येकं त्रैविध्यान्वयभ्रान्तिं निवारयति **यस्या इत्यादिना** । **उपलक्षणमिति** । प्रत्यक्षादिगृहीतव्याप्तिकत्वेन युक्तित्रैविध्यकथनमुपलक्षणं प्रत्यक्षादिगृहीतधर्म्यादिकत्वेनापि युक्तेस्त्रैविध्यं द्रष्टव्यमित्यर्थः । **एतच्च स्पष्टयिष्याम इति** । समयचरणे 'प्रत्यक्षमागमो वाऽपि भवेद्यत्र नियामकः' इत्यनुव्याख्यानव्याख्यावसरे त्रिविधव्याप्तेरुदाहरणप्रदर्शनेन युक्तित्रैविध्यं स्पष्टयिष्याम इत्यर्थः ।

**स०व्र०— युक्तिश्चेतीति** । अत्र 'व्याप्तिः प्रत्यक्षगा यस्या युक्तिगा आगमगा तथा' इत्यनेन युक्तिं प्रति प्रत्यक्षागमयोरुपजीव्यत्वस्य कथितत्वेन ततो दुर्बला युक्तिरेवाप्रमाणमित्युक्तं भवतीत्यनुव्याख्यानतात्पर्यमिति





भावः । **यत्सिद्धवत्कृत्येति** । आगमस्यागमेन विरोधे प्राप्ते अन्यतरागमाश्रयणेन प्रवृत्ताया युक्तेरन्यतरागमबाधेन तदर्थनिर्णायकत्वाद्युक्तः वैदिकेऽप्यर्थे युक्तेः प्रसर इति एतत्सिद्धवत्कृत्येत्यर्थः । 'तच्चागम' इत्यनेन युक्तेरागममूलकत्वकथनेन वैदिकेऽप्यर्थे युक्तेः प्रसरः सम्भवतीति प्रदर्शित इत्यर्थः । यत्सिद्धवत्कृत्येति इति पूर्ववाक्ये मीमांसाऽऽरम्भानुपपत्तिः परिहृता । सा तदा स्यात् । यदि तन्मूलत्वमेव भवेत् । तदेव कुतः इत्यतः तन्मूलत्वं दर्शयितुं युक्तेर्विभागमाहेत्यर्थः इति वा । **चशब्दः प्रकृतानुसन्धानार्थ इति** । पूर्वमन्यप्रमाणत्रैविध्यस्यानुक्तत्वात् समुच्चायकत्वं न सम्भवतीति भावः । अनेन तु-शब्दार्थ इति व्याख्यातं भवति । प्रत्येकं त्रैविध्यपरिहारेण योजयति **प्रत्यक्षगेत्यादिना धर्म्यादीति** । प्रत्यक्षावगतधर्मिका युक्त्यवगतधर्मिका आगमावगतधर्मिका इत्येवं त्रैविध्यमित्यर्थः ।

**विट्ठल०— यत्सिद्धवत्कृत्येति** । धर्मादिग्राहकतयोपजीव्यागमविरोधे सति यद्वैदिकेऽर्थे युक्तेरप्रवेशेनाबाधकत्वं सिद्धवत्कृत्य **तत्र** आगमेनागमस्यैवेत्यत्र परिहृता मीमांसानुपपत्तिस्तदुपजीव्यत्वमित्यर्थः । **धर्मादीति** । यस्यायुक्तेः धर्मिसाध्यधर्मग्रहणं प्रत्यक्षेण सैकाविधेत्यादि द्रष्टव्यम् । **धर्मादीति** । क्वचित्पाटथ्यस्याः साध्यधर्मः प्रत्यक्षयोग्यः सैकेत्यादिस्तत्रोऽर्थः । **स्पष्टयिष्याम इति** । 'प्रत्यक्षमागमो वापि भवेद्यत्र नियामकः । सैव व्याप्तिर्भवेन्मानमि'त्येतद्व्याख्यानावसरे । धूमाग्निव्याप्तिः प्रत्यक्षगा 'गौर्न पदा स्प्रष्टव्ये'त्यागमगा । जीवच्छरीरं सात्मकं प्राणादिमत्वादित्यनुमानगेति स्पष्टयिष्याम इति भावः ।

**॥ इति तत्र युक्तित्रैविध्यम् ॥**

* * *

**॥ अथ तत्र प्रत्यक्षागममूलयुक्तेर्बलीयस्त्वम् ॥**

**४८ सु०— एवं तर्हि या युक्तिमूला युक्तिः सा नागमाद्युपजीविनीति तस्य बाधिका, तदबाध्या च भवत्वित्यत आह प्रत्यक्षेति ।**

## अनु०— प्रत्यक्षागममूला तु युक्तिस्तत्र बलीयसी ॥

**तत्र** तासु त्रिविधासु युक्तिषु । **प्रत्यक्षागममूलेति** । प्रत्यक्षमूला आगममूला चेत्यर्थः । युक्तिमूलाऽपि हि युक्तिरन्ततः प्रत्यक्षागममूलैव (द्र)एष्टव्या, अन्यथा तन्मूलयुक्तेर्निर्मूलत्वमनवस्था वा आपद्येत । तथा च प्रत्यक्षाद्यपेक्षत्वेन साम्येऽपि, बहुसंविधानानपेक्षयोः प्रत्यक्षागममूलयोर्युक्त्योः प्रबलत्वं, तदपेक्षायास्तु युक्तिमूलाया दुर्बलत्वं,





**युक्तमेव । तथा च प्रबलयो(र्युक्त्यो)र्यदीदृशी दशा, तदा का (वार्ता) दुर्बलाया युक्ते-रागमबाधनादाविति ।**

**परि०— अनवस्था वेति** । युक्तिमूलयुक्तेः युक्त्यन्तरमूलतयाऽनवस्थेत्यर्थः । **साम्येऽपीति** । प्रत्यक्षादिप्रमाणत्रयमूलकयुक्तित्रयस्येति योज्यम् । **बहुसंविधानेति** । अनेकमेलनेत्यर्थः । **तदपेक्षेति** । प्रत्यक्षागमान्यतरमूलकयुक्तिसापेक्षयुक्तेरित्यर्थः । **प्रबलयोरिति** । प्रत्यक्षागममूलयोः । **ईदृशी दशा** वैदिकेऽर्थे प्रवेशाभावेन तदबाधकत्वतद्बाध्यत्वावस्थेत्यर्थः ।

**यादु०—** तुशब्दाभिप्रायं तन्निवर्त्याशङ्काप्रदर्शनपूर्वकमाह **युक्तिमूलाऽपीत्यादिना** । बहुसंविधानान-पेक्षत्वरूपोऽर्थो विशेषवाचितुशब्देन लब्ध इति भावः । **संविधानं** व्यवधानम् । **प्रबलयोरिति** । साक्षा-त्प्रत्यक्षागममूलयोरित्यर्थः । **ईदृशी दशेति** । वैदिकेऽर्थे प्रवेशाभावेनाबाधकत्वमित्यर्थः ।

**वं०प०— तदिति** । प्रत्यक्षागमेत्यर्थः । अन्यथाऽन्ततः प्रत्यक्षागममूलत्वाभावे **तन्मूलेति** । युक्तिमूलेत्यर्थः । ननु कथं निर्मूलत्वं, प्रत्यक्षागमयोर्मूलत्वाभावेऽपि युक्तेरेव मूलत्वसम्भवादिति आह **अनवस्था वेति** । युक्तिमूलभूतयुक्तेरपि पुनर्युक्तिरेवम्, तस्या अपि पुनर्मूलं सैवेत्यादिरूपेणेत्यर्थः । **बहुसंविधानेति** । प्रत्यक्षागममूलयुक्त्योः साक्षात्तन्मूलकत्वेन परम्परा नेत्यर्थः । तदपेक्षाया युक्तेरेका युक्तिर्मूलं तस्याः प्रत्यक्षादिकं मूलमिति बहुसंविधानापेक्षाया इत्यर्थः । **युक्तेः** । पुरुषत्वादिरूपायाः ।

**श्रीनिधि०— बहुसंविधानेति** । बहुव्यवधानेत्यर्थः । अपौरुषेयतया निर्दोषस्य सर्वथा प्रामाण्या-नुपपत्तेरिति ।

**शे०वा०—** आगमोपजीवियुक्तेरागमबाध्यत्वेनागमाबाधकत्वेऽपि युक्तिमूलयुक्तेरागमोपजीवित्वाभावेन तस्या आगमबाधकत्वतदबाध्यत्वयोरुपपत्त्या सार्वज्ञ्यादिविरोधित्वेनोच्यमानाया अपि युक्तेर्युक्तिमूलत्वाद्युक्त-मागमबाधकत्वं तदबाध्यत्वं चेति भावेन शङ्कते **एवं तर्हीति** । प्रत्यक्षोऽयमागम इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे **प्रत्यक्षागममूलेतीति** । प्रत्यक्षागममूला त्विति मूले तुशब्दानर्थक्यमित्यतः प्रत्यक्षागममूलयुक्त्योः प्राबल्ये युक्तिमूलकयुक्तेस्ततो दौर्बल्ये च हेतुसूचनार्थत्वान्न तस्यानर्थक्यमिति भावेन तद्व्यावर्त्यसाम्यशङ्का-प्रदर्शनपूर्वकं तुशब्दोक्तं प्राबल्यदौर्बल्यहेतुं निरूपयितुं साम्यशङ्कामुत्थापयति **युक्तिमूलाऽपीति** । ननु युक्ति-मूलयुक्तेर्युक्तिमूलत्वयोरेव सम्भवात्किमिति प्रत्यक्षागममूलकत्वनिर्बन्ध इत्यत आह **अन्यथेति** । **निर्मूलत्व-मिति** । ततश्चाप्रामाण्यप्रसङ्ग इति भावः । **अनवस्था वेति** । युक्तिमूलत्व इति शेषः । अस्त्वेवं तस्याः प्रत्यक्षागममूलकत्वं किं तावतेत्यतः प्रत्यक्षागममूलकत्वे तस्यास्तन्मूलकयुक्तिसाम्यप्रसङ्गात् न तदपेक्षया





दौर्बल्यमित्याशयेनाह **तथा चेति** । एवं साम्यशङ्कामुत्थाप्य तत्परिहारकतया तुशब्दसूचितं प्राबल्यदौर्बल्यहेतुं दर्शयति **बह्विति** । **संविधानं** व्यवधानम् । **तदिति** बहुसंविधानपरामर्शः । ननु युक्तिमूलकयुक्तेरागमाद्यबाध्यत्वशङ्कायां प्रत्यक्षागममूलकयुक्त्यपेक्षया युक्त्यपेक्षयुक्तेर्दौर्बल्यनिरूपणमसङ्गतमित्यतः प्रत्यक्षागममूलकयुक्त्योः स्वोपजीव्यागमाबाधकत्वे तद्बाध्यत्वे वा, कैमुत्येनैव तन्मूलकयुक्तेरपि तदबाधकत्वतद्बाध्यत्वसिद्धिरिति कैमुत्योपपादकत्वान्नासङ्गतिरिति भावेन प्राबल्यदौर्बल्यसिद्धिफलतया कैमुत्यमुपपादयति **तथा चेति** । **ईदृशीति** । वैदिकेऽर्थे अप्रवेशेन तदबाधकत्वादिरूपेत्यर्थः ।

**वा०र०— ननु युक्तिमूलयुक्तेरिति** । युक्तिमूलकयुक्तेरित्यर्थः । विशेषाग्रहणात् कप्रत्ययाभावः । विवाद इति अवधेयमिति पाठः ।

**स०व्र०—** एवं तर्हीत्यादिशङ्काग्रन्थस्य अयमाशयः । आगमोपजीवियुक्तेरागमबाधकत्वानुपपत्त्या तद्बाध्यत्वेऽपि युक्तिमूलयुक्तेरागमोपजीवित्वाभावेन तस्याः आगमबाधकत्वतदबाध्यत्वयोरुपपत्त्या सार्वज्ञ्यादिविरोधित्वेनोच्यमानायाः युक्तेस्तु युक्तिमूलत्वेन आगमबाधकत्वमुपपन्नमिति । प्रत्यक्षागममूलकयुक्त्योः स्वोपजीव्यागमाबाधकत्वे तद्बाध्यत्वे वा, कैमुत्येनैव युक्तिमूलकयुक्तेस्तदबाधकत्वं तद्बाध्यत्वं सिद्ध्यति, युक्तिमूलकयुक्तेः प्रत्यक्षादिमूलकयुक्त्यपेक्षया दुर्बलत्वमित्यभिप्रेत्य प्राबल्यदौर्बल्ययोर्हेतुं निरूपयन्नेवाह **युक्तिमूलाऽपीति** । ननु प्रत्यक्षागमयोर्मूलत्वाभावेऽपि न निर्मूलत्वं, युक्तेरेव तदभ्युपगमादित्यत आह **अनवस्था वेति** । युक्तिमूलत्व इति शेषः । **संविधानं** व्यवधानम् ।

**विठ्ठल०—** ननु प्रत्यक्षमूलकयुक्तेः कुतः प्राबल्यं कुतश्च युक्तिमूलकयुक्तेः दौर्बल्यमित्यत आह **युक्तिमूलापीति** । **निर्मूलत्वमिति** । युक्तिमूलकयुक्तेर्युक्त्यन्तरामूलकत्वे निर्मूलत्वं युक्त्यन्तरमूलत्वे तस्याप्येवमिति अनवस्थेति भावः । **तदपेक्षाया इति** । प्रत्यक्षादिमूलकयुक्त्यपेक्षाया इति प्रत्यक्षादिमूलक इत्यपेक्षायुक्तेरित्यर्थः । **प्रबलयोरिति** । साक्षात्प्रत्यक्षादिमूलयुक्त्योर्यदिदृशी दशा, श्रुतेः प्रतीतार्थप्रच्यावकतामात्रं न तु सर्वथा प्रामाण्यापादकत्वरूपदशा, तदा दुर्बलायाः युक्तेः श्रुतिबाधनादौ का वार्तेत्यर्थः ।

**॥ इति तत्र प्रत्यक्षागममूलयुक्तेर्बलीयस्त्वम् ॥**

**॥ इति युक्तिमूलयुक्त्यपेक्षया प्रत्यक्षागममूलयुक्तेर्बलीयस्त्वम् ॥**

**॥ इति तच्छङ्कानिरसने (वेदादिप्रामाण्यदौर्लभ्यमूलिकायाः श्रुत्यादिसमन्वयाभावशङ्काया निरसने) 'श्रुतिस्मृत्योः प्रमाणविरोधाभावान्नाप्रामाण्यम्' इत्युक्तार्थस्योपपादनम् ॥**

**॥ इति नित्यत्व(रूपापौरुषेयत्व)ात्पुरुषोद्भवसर्वदोषैरुज्झितत्वाच्च बोधकत्वेन सम्प्रतिपन्नानां वेदादीनां स्वत एव प्रामाण्यसिद्ध्या तच्छङ्कानिरसनम् ॥**

* * *





**॥ अथ उक्तार्थस्य सुबोधार्थं प्रमाणाप्रमाणविवेचनम् ॥**

**॥ अथ प्रमाणाप्रमाणविवेचनस्य उद्देशः, सङ्गतिः, वैयर्थ्यपरिहारश्च ॥**

**४९ सु०— तदेवमप्रामाण्ये प्रमाणविरोधस्यैव प्रयोजकत्वात्; श्रुत्यादेश्च प्रत्यक्षागमविरोधाभावात्, अनुमानविरोधस्याप्रयोजकत्वान्नाप्रामाण्यम्, किन्नाम बोधकत्वेन स्वत एव प्रामाण्यमित्युपपादितम् ।**

**तदेतत्प्रमाणाप्रमाणविवेकमविदुषां दुरवधारणम् इत्युद्देशलक्षणविभागपरीक्षाभिः तन्निरूपणार्थम् उत्तरो ग्रन्थसन्दर्भः ।**

**न च सांव्यावहारिकत्वात्प्रमाणादेः किं तन्निरूपणेनेति वाच्यम्, तथाऽपि स्वरूपसङ्ख्याविषयफलगोचराणां वादिविवादानां विद्यमानत्वेन निरूपणार्हत्वात् । यद्यप्येषोऽर्थस्तर्कशास्त्रस्य विषयो न मीमांसाशास्त्रस्य, तथाऽपि शिष्यहितैषिणा भाष्यकृता प्रसङ्गागतो निरूप्यते, यथा पूर्वमीमांसाभाष्यकारेणेत्यदोषः । अत एव प्रमाणलक्षणादौ निरूपितस्यार्थस्य पुनरत्र निरूपणं न दोषाय, एकीकृत्य निरूपणस्यापि शिष्यहितार्थत्वात् ।**

**परि०— स्वरूपसङ्ख्येत्यादि** । अनुभूतिरेव मानं नान्यत् । प्रमाकरणमेव मानं नान्यत् इत्यादिः स्वरूपगोचरो विवादः । प्रत्यक्षमेकमेव प्रमाणमित्यादिः सङ्ख्यागोचरः । धर्माद्यभावः प्रत्यक्षविषयः, कालाकाशवाक्यार्थादिः अनुमानविषयः, आत्मसुखदुःखादिः मनोविषय इत्यादिर्विषयगोचरः, सम्भावनैवानुमा(ना)गमफलं न तु प्रमितिः, हानादिबुद्धयः प्रत्यक्षफलमित्यादिः फलगोचरो, विवादो ध्येयः । **यथा पूर्वमीमांसाभाष्यकारेणेति** । प्रथमपादे । 'अथातो धर्मजिज्ञासे'ति प्रथमसूत्रे निर्दिष्टो धर्मः क इति जिज्ञासायां 'चोदनालक्षणोऽर्थो धर्म' इति द्वितीयसूत्रेण चोदनैकप्रमाणकोऽर्थरूपो धर्म इति धर्मस्य विध्येकप्रमाणकत्वं लक्षणमभिधाय 'तस्य निमित्तपरीष्टिरि'ति तृतीयसूत्रे धर्मे प्रमाणपरीक्षा कार्येत्युक्त्वा तत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मतत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादि'ति चतुर्थसूत्रे प्रत्यक्षस्य एकस्य लक्षणमुक्त्वा धर्मस्य प्रत्यक्षगोचरत्वमुक्तं तदुपलक्षणं मत्वा शाबरभाष्ये अनुमानोपमानादेर्लक्षणादिप्रपञ्चनं कृतं यथा तथेत्यर्थः । अत एवेत्युक्तं व्यनक्ति **एकीकृत्येति** । विक्षिप्य तत्र तत्र निरूपितं सर्वमेकत्रोपसंहृत्य कथनस्येत्यर्थः ।





**यादु०— स्वरूपसङ्ख्येत्यादि** । करणं प्रमाणं फलं वेति स्वरूपगोचरो विवादः । प्रत्यक्षमेकमेव प्रमाणमुत प्रत्यक्षानुमाने द्वे इत्यादिः सङ्ख्यागोचरः । पदार्थसंसर्गः किमनुमितिविषय उतागमविषय इत्यादिर्विषयगोचरः । ज्ञानफलं किं ज्ञाततोत व्यवहार इति, हानादिबुद्धयः किं प्रत्यक्षफलमुतानुमानफलमिति वा फलगोचर इति ज्ञातव्यम् । **यथा पूर्वमीमांसेति** । प्रत्यक्षादीनामनिमित्तत्वं चोदनैव निमित्तमित्येतत्प्रत्यक्षाद्यज्ञाने दुरवधारणमिति तन्निरूपणं यथा कृतमित्यर्थः । **अत एवेति** । शिष्यहितैषित्वादेवेत्यर्थः । ननु कथमनेन शिष्यहितैषिता भाष्यकारस्येत्यत आह **एकीकृत्येति** । मीमांसाविषयेण सहेति शेषः । अन्यथा मीमांसापर्यालोचनदशायां शिष्याणां ग्रन्थान्तरानुसन्धानप्रसङ्ग इति भावः ।

**वं०प०— तर्केति** । ब्रह्मतर्केत्यर्थः । भाष्यकारेण शबरेण यथा प्रमाणलक्षणादि निरूपितमित्यर्थः । अत एवेत्युक्तं विशदयति **एकीकृत्येति** ।

**कं०रा०— स्वरूपेति** । प्रमित्याश्रय ईश्वरः प्रमाणं न चेति स्वरूपविषयो विवादः । प्रमाणानि त्रीणि वाचकत्वादिवेत्यादिसङ्ख्यागोचरो विवादः । सुखादिकं मानसप्रत्यक्षविषयोऽन्यविषयो वेति विषयगोचरो विवादो प्रमाणफलं ज्ञातता वान्यद्वेति फलगोचरो विवादश्च वादिनां विद्यत इति प्रमाणादेर्निरूपणार्हत्वमिति भावः । **यद्यप्येषोऽर्थ इति** । प्रमाणादिरूपोऽर्थः तर्कशास्त्रस्य विषयो न मीमांसाशास्त्रस्य 'प्रमाणन्यायसच्छिक्षा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनमि'त्युक्तरीत्या तर्कशास्त्रव्युत्पादितैः प्रमाणादिभिः प्रमेयशोधनरूपत्वात् तस्यातोऽत्र प्रमाणादिनिरूपणमयुक्तमिति यद्यपि तथापि यथा पूर्वमीमांसाभाष्यकारेण चोदनालक्षणोऽर्थो धर्म इत्यत्र प्रसङ्गादागतः प्रमाणादिरूपोऽर्थः शिष्यहितार्थं निरूप्यते तथा शिष्यहितैषिणा अस्मद्भाष्यकारेणापि न विलक्षणत्वादित्यत्र प्रसङ्गादागतः सोऽर्थो निरूप्यत इति न कश्चिद्दोष इत्यर्थः ।

**श्रीनिधि०— सांव्यावहारिकत्वात्** संव्यवहारसिद्धत्वात् । **सङ्ख्याविषयफलगोचराणामिति** । विषयः प्रतिपाद्यं ज्ञेयमिति यावत् । **अत एवेति** । शिष्यहितैक्षितत्वादेवेत्यर्थः ।

**शे०वा०—** ननु वक्तव्यस्य सर्वस्याप्युक्तत्वात्किमुत्तरेण प्रबन्धेनेत्यतः प्रकृतसङ्गततया तं सङ्गमयितुमेतदधिकरणसिद्धमर्थं तावदनुवदति **तदेवमिति** । इदानीं तत्सङ्गततयोत्तरप्रघट्टकप्रतिपाद्यं दर्शयति **तदेतदिति** । **उद्देशेति** । यद्यपि विभागस्य विशेषोद्देशरूपतयोद्देशरूपत्वेनोद्देशशब्देनैव सङ्गृहीततया पृथग्ग्रहणं न युक्तं तथाऽपि कुरुपाण्डवन्यायेन पृथगुक्तिरिति ध्येयम् । लक्षणशब्दः सामान्यविशेषलक्षणपरः । **सांव्यावहारिकत्वादिति** । इदं प्रमाणमिदमप्रमाणमिति लोकव्यवहारसिद्धिकत्वादित्यर्थः । **तथाऽपीति** । सांव्यावहारिकत्वेऽपीत्यर्थः । करणं प्रमाणं फलं वेति स्वरूपगोचरः, किं प्रत्यक्षमेकमेव प्रमाणं किंवा प्रत्यक्षानुमाने द्वे अपीत्यादिः सङ्ख्यागोचरः, गगनादिकं किमानुमानिकं किंवा प्रात्यक्षिकमित्यादिर्विषयगोचरः, ज्ञानं फलं किंवा ज्ञातता उत व्यवहार इति हानादिबुद्धयः किं प्रत्यक्षफलमुतानुमानफलमिति च फलगोचरो विवाद, इत्यव-





धेयम् । **तर्कशास्त्रस्येति** । ब्रह्मतर्काभिधतर्कशास्त्रस्येत्यर्थः । तस्य प्रमाणशास्त्रत्वादिति भावः । **न मीमांसाशास्त्रस्येति** । तस्य तदन्यप्रमेयव्युत्पादनपरत्वादन्यथा विद्याभेदानुपपत्तिप्रसक्तेरिति भावः । **यथेति** । धर्मे चोदनैव प्रमाणं न प्रत्यक्षादीत्येतत्प्रत्यक्षाद्यज्ञाने दुरवधारणमिति तन्निरूपणं पूर्वमीमांसाभाष्यकारेण शबरस्वामिना यथा कृतमित्यर्थः । ननु प्रमाणलक्षणादौ प्रमाणादिस्वरूपस्याचार्यैः एव निरूपितत्वात् तत एव च प्रमाणाप्रमाणविवेकोपपत्तेः किमर्थमन्यत्र निरूपितस्य पुनरत्र निरूपणमित्यत आह **अत एवेति** । शिष्यहितैषित्वादेवेत्यर्थः । एतदेव विवृणोति **एकीकृत्येति** । तथा च प्रमाणलक्षणादौ प्रमाणादेर्निरूपितत्वेऽपि विक्षिप्य वर्णितत्वेन मन्दैः सुखेन बोद्धुमशक्यत्वात् तदर्थमेकीकृत्य निरूपणमप्यावश्यकमिति भावः ।

**वा०र०— यथेतीति** । यद्यपि विद्यापृथक्त्वात् इत्येतत् जिज्ञासाधिकरणीयभाष्यमूले अनेन जैमिनीयानां प्रमाणलक्षणादिनिरूपणं नातीव मीमांसायां सङ्गतमिति सूचितमित्युक्तत्वात् पूर्वमीमांसाकारीयलक्षणादिनिरूपणस्य असङ्गतत्वसिद्धेः कथं सङ्गतत्वेन दृष्टान्तीकरणं इत्याभाति । तथापि प्रसङ्गसङ्गत्यादिना कथञ्चित् निरूपणस्य सङ्गतत्वमित्यङ्गीकृत्य इह दृष्टान्तीकरणम् । अत्यन्तसङ्गतत्वं तु न परभाष्ये । अत एव नातीवेति प्राक् मूलेऽभिहितम् । अस्मद्भाष्यकारेण तु प्रथमसूत्रस्थातःशब्दार्थत्वेन प्रामाण्यादेः व्याख्यातत्वात् । तत्र तत्र उपयोगानुसारेण प्रमाणविचारकरणं युक्तम् । अधिकमुदाहृतस्थलीयजिज्ञासाधिकरणीयटीकाप्रपञ्चे ज्ञेयम् । प्रमाणलक्षणादौ इत्यादिपदेन तत्त्वनिर्णयपरिग्रहः । **मन्दैः सुखेनेति** । ननु मन्दैः सुखेन बोधार्थं एकीकृत्य निरूपणं, तर्हि पद्धतिनिर्माणं ग्रन्थकारस्य कुत इति चेत् । सत्यम् । मन्देष्वपि तारतम्येनाल्पमन्दानां अनेन बोधेऽपि बहुमन्दानां सुखेन बोधार्थं तन्निर्माणोपपत्तेः । अत एव गम्भीरयेति पद्धतावुक्तमिति ध्येयम् । प्रथमतोऽवक्तव्यत्वात् इति पदच्छेदः ।

**स०व्र०— तथाऽपीति** । **स्वरूपविषयविवादः** चार्वाकस्य अनुमानादिस्वरूपविषयविवादः । **सङ्ख्याविषयः** कणादादीनाम् । **विषयविषयः** ईश्वरादिकम् अनुमानस्यैव विषय इति तार्किकादीनाम् । फलगोचराः हानादिबुद्धयः अनुमानस्येति ।

**विठ्ठल०— स्वरूपेति** । ज्ञानं प्रमाणं करणं प्रमाणमिति स्वरूपगोचरो विवादः प्रत्यक्षमेकमेव प्रमाणमित्यादि सङ्ख्यागोचरो विवादः सुखादिकमानसप्रत्यक्षगोचरं वेति विषयगोचरो विवादः हानादिबुद्धयः किं प्रत्यक्षफलं उतानुमानफलमिति फलगोचरे विवाद इति ज्ञातव्यम् ।

**॥ इति प्रमाणाप्रमाणविवेचनस्य उद्देशः, सङ्गतिः, वैयर्थ्यपरिहारश्च ॥**

* * *





॥ अथ प्रमाणसामान्यलक्षणम् ॥

**५० सु०— तत्र निर्धारित(निर्ज्ञात)स्वरूपस्यैव सङ्ख्यादिजिज्ञासा, लक्षणं च तन्निर्धारणोपायः, न च सामान्यलक्षणेन विना विशेषलक्षण(स्य)ावसरः; इत्यतः प्रमाणसामान्यलक्षणं प्रथमं तावदाह याथार्थ्यमेवेति ।**

## अनु०— याथार्थ्यमेव मानत्वं

**परि०**— तन्निर्धारणोपायो लक्षणं चेत् तर्हि विशेषलक्षणमेवादौ वाच्यमित्यत आह **न च सामान्येति** ।

**वं०प०— निर्ज्ञातेति** । निर्धारितेत्यर्थः ।

**शे०वा०**— ननु प्रयोजनाभावेन लक्षणस्यैवावक्तव्यत्वाद्वक्तव्यत्वे वा नियामकाभावेन प्रथमतोऽवक्तव्यत्वात्प्रथमतो वक्तव्यत्वे वा विशेषलक्षणान्यनभिधाय सामान्यलक्षणस्यैव प्राथमिकत्वे नियामकाभावात् सामान्यलक्षणाभिधानपरोत्तरवाक्यानर्थक्यमित्यतो लक्षणाभिधानप्रयोजनदर्शनपूर्वकं लक्षणस्यैव प्रथममभिधाने नियामकं वदन्नेव नियामकोक्त्या सामान्यलक्षणस्य प्राथमिकत्वं समर्थयमानस्तदभिधानपरतयोत्तरं वाक्यं योजयति **तत्रेति** । स्वरूपसङ्ख्याविषयफलैरनेकधा प्रमाणे निरूपणीय इत्यर्थः । **न च सामान्यलक्षणेन विनेति** । यद्यपि सामान्यलक्षणाभिधानेन विना न विभज्योद्देशावसरः । अवच्छेदकैक्येनैक्यमापन्नस्यैव वस्तुनो विभज्योद्देष्टव्यत्वात् तथाऽपि विभज्योद्देशार्थस्यापि सामान्यलक्षणाभिधानस्य तद्द्वारा तत्कार्यभूतविशेषलक्षणाभिधानार्थत्वमप्यविकलमित्यभिप्रेत्य न विशेषलक्षणावसर इत्युक्तमत एव कथालक्षणटीकायामेवमेव सामान्यलक्षणाभिधानस्यार्थवत्त्वमुपवर्णितमिति ध्येयम् ।

**वा०र०— न विभज्योद्देशावसर इति** । तथा न विभज्योद्देशावसर इति वक्तव्यत्वापत्त्या न विशेषलक्षणावसर इत्युक्त्या सामञ्जस्यमिति भावः ।

* * *

॥ अथ लक्षणोक्तेः प्रयोजनम् ॥

॥ अथ तत्र निष्प्रयोजनत्वशङ्का विकल्पपञ्चकद्वारा ॥

**५१ सु०— अत्र कश्चिदाह । किमर्थं लक्षणमुच्यते । किं सजातीयविजातीयव्यवच्छिन्नलक्ष्यप्रतीत्यर्थम्, उत प्रमाणत्वादिप्रतीतये तच्चिन्होपदर्शनमिदम्, उत व्यवहारार्थम्, उत प्रमाणादिशब्दप्रवृत्तिनिमित्तावधारणार्थम्, अन्यस्मै कस्यैचित्प्रयोजनाय वा ।**





**परि०— कश्चिदिति** । खण्डनकारादिर्लक्षणोक्तिविषये दूषणमाहेत्यर्थः । यद्वाऽत्रोच्यत इत्यतः प्राक्तनेनाशक्यत्वादितीतिशब्दान्तेन आहेत्यस्य इत्याहेत्यन्वयो ध्येयः । **व्यवच्छिन्नेति** । व्यावृत्तेत्यर्थः । विशेषलक्षणोक्तिखण्डनाभिप्रायेणोक्तं प्रमाणत्वादीत्यादिपदम् । प्रत्यक्षत्वादिस्तदर्थः । यद्वा गवादिसामान्यलक्षणदूषणाभिप्रायेणादिपदम् । गोत्वादिरादिपदार्थः । **तच्चिह्नेति** । तज्ज्ञापके-त्यर्थः । **इदमिति** । याथार्थ्यादिलक्षणोपदर्शनमित्यर्थः । **व्यवहारार्थमिति** । इदं प्रमाणं इयं गौरित्यादिव्यवहारार्थं लक्षणमुच्यत इत्यन्वयः । **अवधारणार्थमिति** । याथार्थ्यादिलक्षणरूपं यत्तदेव प्रमाणादिशब्दानां प्रवृत्तिनिमित्तमित्यवधारणार्थमित्यर्थः ।

**यादु०—** लक्षणप्रणेतुरनर्थकं नाम निग्रहस्थानमिति मन्वानं श्रीहर्षं दूषयितुमुत्थापयति **अत्र कश्चि-दिति** । **तच्चिह्नोपदर्शनमिति** । तल्लिङ्गोपदर्शनमित्यर्थः । लक्षणस्य केवलव्यतिरेक्यनुमानत्वादिति भावः । **प्रवृत्तिनिमित्तेति** । प्रमाणादिशब्दप्रवृत्तौ याथार्थ्यादिकमेव निमित्तं नान्यदित्यवधारणार्थमित्यर्थः ।

**वं०प०— प्रमाणत्वादिति** । लक्ष्यतावच्छेदकीभूतेत्यर्थः । **तच्चिह्नेति** । तज्ज्ञापकेत्यर्थः । **इदं** याथार्थ्यम् ।

**शे०वा०—** लक्षणप्रणेतुरनर्थकं नाम निग्रहस्थानमिति लक्षणप्रणयनमाक्षिपन्तं श्रीहर्षं दूषयितु-मुत्थापयति **अत्रेति** । यद्यप्येतल्लक्षणखण्डनं परकीयप्रस्तावानुसारेण प्रत्यक्षलक्षण एवोत्थापयितुमुचितम्, तथाऽपि लक्षणमात्रखण्डनत्वादस्यात्रोत्थापनं कृतमिति द्रष्टव्यम् । आनर्थक्यसिद्ध्यर्थं लक्षणप्रयोजनं विकल्पयति **किमिति** । हृदि कृतान् विकल्पान् विशदयति **किमिति** । अत यथार्थज्ञानतत्साधनरूपस्य प्रमाणस्य ज्ञानं तत्साधनं च सजातीयम् । यन्न ज्ञानं नापि तत्साधनं तद्विजातीयं तेभ्यो व्यवच्छिन्नतया प्रमाणसिद्ध्यर्थमिदं लक्षणप्रणयनम् । सजातीयविजातीयव्यावर्तकधर्मस्य लक्षणत्वादित्यर्थः । साजात्यवैजात्ययोर्लक्ष्यसिद्ध्यधीन-सिद्धिकत्वादन्योन्याश्रयत्वमित्यतः कल्पान्तरमाह **उतेति** । विमतं, प्रमाणत्वादिसमवायि कथितलक्षणयोगित्वा-द्व्यतिरेकेण घटवदिति प्रमाणत्वादिप्रतीतये तल्लिङ्गोपदर्शनमित्यर्थः । प्रमाणं जातिर्न भवति साक्षात्त्वादिना सङ्करात् । अतो यथार्थज्ञानत्वमेव तद्वाच्यमिति साध्यावैशिष्ट्यप्रसङ्ग इत्यतः कल्पान्तरमाह **उतेति** । इदं प्रमाणमिति व्यवहर्तव्यमेतल्लक्षणयोगित्वादिति व्यवहारसिद्ध्यर्थं लक्षणप्रणयनमित्यर्थः । व्यवहारसिद्धौ सिद्ध-साधनताऽसिद्धावप्रसिद्धविशेषणतेति पूर्वत्रापरितोषात्कल्पान्तरमाह **उतेति** । प्रमाणं यथार्थमित्यादिशब्दप्रवृत्ताविदं निमित्तमिति लक्षणकरणमित्यर्थः । न्यूनतापरिहाराय कल्पान्तरमाह **अन्यस्मा इति** । न चैतादृशविकल्प-करणेऽधिकं नाम निग्रहस्थानमन्यस्यासम्भवादिति वाच्यम् । ग्रन्थोक्तदोषेण सम्भावितत्वादन्त्यविकल्पस्याधिक-त्वाभावात् । तस्मादन्यस्य च दूषणस्यानुपलम्भादिति भावः ।





**वा०र०—** खण्डनटीकाभूतविद्यासागराद्यनुसारेणाह **लक्षणप्रणेतुरिति** । **लक्षणप्रयोजनमिति** । लक्षणस्य व्यतिरेक्यनुमानत्वे च व्यतिरेकी लक्षणेत्येवं योजनीयं शङ्काद्यनुसारात् । वक्ष्यति च व्यवहारार्थं व्यतिरेकलक्षणं प्रमाणमिति तृतीयकल्पमिति ज्ञेयम् । **साजात्यवैजात्ययोरिति** । लक्ष्ये सिद्धेन साजात्य-वैजात्यज्ञानसम्भवात् तज्ज्ञाने च सजातीयविजातीयव्यावृत्ततया लक्ष्यसिद्धिरिति अन्योन्याश्रयत्वमित्यर्थः । **विमतमिति** । प्रमाणत्वादिसमवायीति साध्यानुसारेण प्रमाणत्वाभिमतलक्षणान्तरे यल्लक्ष्यं प्रत्यक्षत्वादिनाऽभिमतं तच्च विमतमित्यनेनोच्यते इति ध्येयम् । फलप्रमाणलक्षणांशे दोषमाह **प्रमाणमिति** । **इदमिति** । विमत-मित्यर्थः । अत्र प्रमाणमिति व्यवहार इव उपलक्षणया लक्षणान्तरे प्रत्यक्षमित्यादिव्यवहारोऽपि साधनीयः । अस्य पूर्वोत्तरसाधारण्येन लक्षणमात्रविचारत्वात् । मूलेऽपि आदिपदरहितस्थले उपलक्षणया अन्यस्याभिप्रेतत्वं वा बोध्यम् । अत एव साक्षात्कारप्रदीपः इत्येव खण्डने उक्तेऽपि प्रकृते आदिपदम् । अत एव लक्षणस्य प्रत्यक्षवेद्यतानिराकरणावसरे निर्दोषाक्षोद्भवादेः प्रत्यक्षविशेषणवत्त्वात् इति वक्ष्यति । **एतल्लक्षणत्वादिति** । एतच्छब्दः प्रमाणपरामर्शकः । तथा च प्रमाणलक्षणं विद्यते यस्मिन् इति एतल्लक्षणं तस्य भावः तत्वं एतल्लक्षणकत्वादिति यावत् । तस्मादित्यर्थः । अत्र तल्लक्षणयोगित्वादिति पाठः सुगमः । **प्रमाणं यथार्थ-मित्यादीति** । ननु यथार्थत्वस्य लक्षणत्वात् प्रमाणमिति शब्दप्रवृत्तौ इत्येव वक्तव्यम् । खण्डने तु इन्द्रियार्थसन्निकर्षोत्पन्नं अव्यभिचारिज्ञानं इति लक्षणस्य कृतत्वेन प्रत्यक्षादीत्यादिपदेन साक्षात्कारीत्वस्य उपादानमुचितम् । अत एव प्रत्यक्षादीत्यादिशब्दः । गुण्डराजीये अध्यक्षशब्दार्थत्वेन व्याख्यातः । प्रमाणादि इत्यादिपदेन तु प्रमाणशब्दपर्यायस्य मानशब्दस्य लक्षणान्तराभिप्रायेण प्रत्यक्षादिशब्दस्य वा उपादानं कार्यम् । तत्कथ यथार्थशब्दोपादानमिति चेत् । अत्राहुः । यथार्थशब्दस्य लक्षणया प्रमाणशब्दपर्यायशब्दपरत्वात् । एकार्थत्वेन पर्यायस्य एव ग्रहणं द्योतयितुमेव यथार्थशब्देन लक्षणा कृतेति । वयं तु प्रमाणं यथार्थं इत्येतौ आदिभूतौ एषां इति अतद्गुणसंविज्ञानबहुव्रीहिणा प्रमाणशब्दतत्पर्यायशब्दयोः तथा प्रत्यक्षाध्यक्षसाक्षात्कारि इत्यादि शब्दानां च ग्रहणमित्यर्थ इति वदामः । **निमित्तमिती**त्यत्रत्येतिशब्दस्य इत्यतः इत्यर्थः । **ग्रन्थोक्त-दोषेणेति** । तादृशस्य दर्शयितुं अशक्यत्वात् इति वक्ष्यमाणदोषेणेत्यर्थः । अत्राधिकत्वाभावात् इत्यनन्तरम् अधिकत्वेनान्त्यविकल्पदूषणस्यानुपलम्भापातात् इति पाठः स्वरसः । विद्यासागर्यनुसारात् । समाना जातिर्येषां तानि हि सजातीयानि इति पाठः ।

**स०व्र०—** खण्डनकारकमतमाशङ्कते **अत्रेति** । न च लक्ष्यस्वरूपज्ञानार्थं लक्षणमिति वाच्यम् । तस्य यथायथं प्रत्यक्षादिभिरवगन्तुं शक्यत्वेन लक्षणप्रयोजनाभावात् । छलप्रसङ्गपरिहाराय हृदि कृतान् विकल्पान् विशदयति **किं सजातीयेति** । अत्र साजात्यं पदार्थताऽवच्छेदकतद्घटिततत्समनियतधर्मातिरिक्तयावद्धर्मैः साजात्यं विवक्षितम् । तादृशं चानुमानादि । अन्यद्विजातीयम् । तद्व्यवच्छिन्नतया प्रमाणसिद्ध्यर्थमिदं लक्षणप्रणयनम् । सजातीयविजातीयव्यावर्तकधर्मस्य लक्षणत्वादित्यर्थः । साजात्यवैजात्ययोर्लक्ष्यसिद्ध्यधीन-सिद्धित्वादन्योन्याश्रयत्वात् कल्पान्तरमाह **उतेति** । प्रमाणं यथार्थत्वसमवायि कथितलक्षणयोगित्वात्, व्यतिरेकेण





घटवदिति प्रमाणत्वप्रतीयते उक्तलक्षणं लिङ्गोपदर्शनमित्यर्थः । प्रमात्वं जातिर्न सम्भवति । साक्षात्त्वादिना सङ्करात् । अतो यथार्थज्ञानत्वमेव तदिति साध्याविशिष्टता स्यादिति । इदं प्रमाणपदमिति व्यवहर्तव्यम् एतल्लक्षणवत्त्वादिति व्यवहारसिद्ध्यर्थं लक्षणप्रणयनमित्यर्थः । व्यवहारसिद्धौ सिद्धसाधनता । असिद्धावप्रसिद्ध-विशेषणतेति ततोऽपि पक्षान्तरमुपक्षिपति **उतेति** । प्रमाणं यथार्थमित्यादिशब्दप्रवृत्तौ निमित्तमिति लक्षण-करणमित्यर्थः । न्यूनतापरिहाराय विकल्पान्तरमाह **अन्यस्मा इति** । नन्वीदृशविकल्पकरणे अधिकं नाम निग्रहस्थानम् । अन्यस्यासम्भवादिति । मैवम् । ग्रन्थोक्तदोषेण सम्भावितत्वादधिकत्वं नान्त्यविकल्पस्य । तस्मादस्य दूषणं नोपलक्ष्यत इति ।

**विठ्ठल०— अत्र कश्चिदिति** । श्रीहर्षनामकः कश्चित् खण्डनकार इत्यर्थः । **प्रमाणत्वादी**त्यादिपदेन गोत्वादिसङ्ग्रहः । **अस्य** सामान्यदूषणत्वात् । **तच्चिह्नोपदर्शनमिति** । लक्ष्यस्य केवलव्यतिरेकित्वज्ञापकोप-दर्शनमिति भावः ।

**चषकः**— लक्षणप्रणेतुरनर्थकं नाम निग्रहस्थानमित्याक्षिपन्तं श्रीहर्षं, दुदूषयिषुरुत्थापयति **अत्र कश्चिदिति** । **सजातीयविजातीयेति** । सजातीयविजातीयप्रतियोगिकव्यवच्छित्तिविशेषितलक्ष्यप्रतीतय इत्यर्थः । **तच्चिह्नेति** । लक्षणस्य केवलव्यतिरेकिलिङ्गरूपतया तज्ज्ञापकोपदर्शनमित्यर्थः ।

* * *

**॥ अथ प्रथमविकल्पनिरासः ॥**

**५२ सु०— नाद्यः । तस्या एव दुरवधारणत्वात् ।**

**तथा हि । किं सजातीयेति प्रमाणत्वेन (सजातीयत्वं) विवक्षितं रूपान्तरेण वा । नाद्यः, स्वव्यवच्छेदावधेः सजातीयादव्यावृत्तत्वेन व्यवच्छेदकत्वानुपपत्त्या व्यावृत्ति-स्वीकारेण(च)ाव्यापकत्वात् । नापि द्वितीयः, विजातीयपदोपादानवैयर्थ्यात् । अस्ति हि प्रमेय(त्वादिना )सर्वसाजात्यम् ।**

**अथ ज्ञानत्वेन विशेषेण साजात्यं विवक्षित्वेदमुच्यते, तर्हि लक्ष्यस्यापि ज्ञान-त्वादिना साजात्याद्व्यवच्छेद्यकोटिप्रविष्टतया सङ्ग्राह्याभावप्रसङ्गः ॥ लक्ष्यस्य यज्ज्ञान-त्वादिभिः सजातीयं तद्व्यवच्छेद्यम्; न च लक्ष्यस्य लक्ष्यं सजातीयम्, षष्ठ्यर्थस्य सम्बन्धस्य भेदे व्यवस्थितत्वादिति चेत्; एवं तर्हि लक्ष्यापेक्षया भिन्नाद्व्यवच्छेद इत्येवोच्यतां, कृतं ज्ञानत्वादिना साजात्येन प्रकृतानुपयोगिना वर्णितेन ॥ यदा च**





**वं०प०— शास्त्रान्तरेति** । नामानुशासनादिशास्त्रान्तरेत्यर्थः । **एवं** प्रतिपाद्यैक्यादित्यर्थः **विषयेति** । मुख्यविषयादिकं भिन्नमेवास्ति इदं तु प्रासङ्गिकमिति भावः । शङ्कते **यदि चेति** । **विषयः** अमुख्यतयाऽपि यदि विषय इत्यर्थः । **वैषम्यात्** । शब्दसाधुत्वविषये यदि सन्देहस्तन्निर्णयेन च यदि प्रयोजनमस्ति तर्ह्यवश्यं कथ्यते । एवं नो चेन्नेति भावः । **इति यत्किञ्चिदेतदिति** । अत्राह कश्चिदित्यादिना खण्डनकारेण यदुक्तं तदेतदुक्तरीत्या यत्किञ्चित्फल्गिवत्यर्थः । **अन्यथा** यदुक्तविकल्पेनास्मदीयं लक्षणं खण्ड्यत इत्यर्थः । **कुलीर-स्येति** । यथा कुलीरः स्वापत्योत्पत्त्यनन्तरमुत्पन्नेन तेन स्वयं हतो भवत्येवं परस्यापि स्वोक्तयुक्तिहतत्वं प्राप्तमित्यर्थः । तानि लक्षणानीति द्वितीया । तथा च त्वया सूत्रकारेण चोक्तेषु लक्षणेष्वेते दोषाः समास्कन्दन्ति प्राप्नुवन्त्युत नेत्यर्थः । **उपपत्तितोऽपि दुष्टानामिति** । युक्तिविरोधतो दुष्टानामपीत्यर्थः । **तथात्वे** व्यवहार-निर्वाहकत्वे । **तद्भावः** व्यवहारनिर्वाहहेतुत्वम्; अस्ति । तथा च साऽनुपपत्तिस्त्वत्पक्षेऽप्यविशिष्टेति हृदयम् ।

**कं०रा०— अन्यथेति** । किं सजातीयविजातीयव्यवच्छिन्नलक्ष्यप्रतीत्यर्थं लक्षणमुच्यत इत्यादि विकल्पानुपपत्तिभिरस्मदुक्तलक्षणबाधने परस्य मायावादिनोऽपि कुलीरस्य जन्तुविशेषस्य स्वापत्यहतत्वमिव स्वोत्प्रेक्षितत्वेन स्वापत्यस्थानीयोक्तयुक्तिहतत्वं स्यादित्यर्थः । परस्य स्वापत्ययुक्तिहतत्वं कुत इत्यत आह **तेनापीति** । परेणापि हि स्मृतिरूपः परत्र पूर्वदृष्टावभासोऽध्यास इत्यादीन्यध्यासादिलक्षणानि स्वशास्त्रे कथितानि सूत्रकृतापि जन्माद्यस्य यत इति ब्रह्मलक्षणं कथितम् । तच्च सूत्रं भाष्यकृतः परस्याभिमतमेव तथा च स्वाभिमतेष्वध्यासादिलक्षणेष्वप्युक्तदोषसाम्यात्परस्य कुलीरस्येव स्वापत्ययुक्तिहतत्वमिति भावः । तदेव विकल्पपूर्वकं व्यनक्ति **तत्रेति** । एते दोषाः सजातीयव्यवच्छिन्नलक्ष्यप्रतीत्यर्थं लक्षणमुच्यते किमित्यादि विकल्पदोषाः । तानि लक्षणानि अध्यासादिलक्षणानि व्यवहारं निर्वहन्त्यतस्तदुपादानं न पराजयहेतुरिति भावः । **आपातत इति** । आपाततोऽपि दुष्टानां त्वदीयाध्यासादिलक्षणानां व्यवहारनिर्वाहकत्वे उन्मत्तभाषितानां लक्षणानामपि व्यवहारनिर्वाहकत्वं कथं न स्यात् न ह्युन्मत्तभाषितानां व्यवहारानिर्वाहकत्वेऽनुपपत्तेरन्य-त्कारणमस्ति येन कारणान्तरवशादेव तेषामनिर्वाहकत्वमुच्यत इति भावः ।

**श्रीनिधि०— लक्षणानि समास्कन्दन्तीति** । लक्षणानि प्रति समास्कन्दन्तीत्यर्थः ।

**शे०वा०—** तत्रैव प्रयोगाद्गोशब्दवाच्यत्वं सास्नादिमति साध्यत इत्यत्र लक्षणवैयर्थ्यमुक्तमनुभाष्यं दूषयति **यदिति** । **विषयेति** । विषयभेदात् प्रयोजनभेदाच्चेत्यर्थः । नामलिङ्गानुशासनव्याकरणादिनैतच्छास्त्रस्य विषयप्रयोजनैक्य एव तत्साङ्कर्यप्रसक्तिर्न च प्रकृते तदस्तीति न साङ्कर्यमिति भावः । **अन्यदपीति** । प्रकृतिप्रत्ययविभागेन शब्दानां साधनादिकमपीत्यर्थः । ननु सन्दिग्धत्वसप्रयोजनत्वाभ्यां वैषम्यादित्ययुक्तम् । सन्दिग्धत्वादिभावेऽपि प्रत्यक्षानुमानयोरिवागमलक्षणस्यात्रानभिधानादित्यत आह **सन्दिग्धतादीति** । सप्रयो-जनत्वमादिशब्दार्थः । **यत्किञ्चिदेतदिति** ।





यदेतल्लक्षणप्रयोजनखण्डनं तत्किञ्चित्फल्गु इत्यर्थः । शास्त्रान्तरविषयलक्षणाभिधानानर्थक्योक्तौ परस्य व्याहतिः स्यादित्याह **अन्यथेति** । यद्वोक्तदिशा लक्षणप्रयोजनानुपपत्तिसमाधानानङ्गीकारे स्वव्याहतिः स्यादित्याह **अन्यथेति** । कुलीरः कर्कटकः । 'स्यात्कुलीरः कर्कटकः' इत्यमरोक्तेः । तथा च कर्कटकस्य स्वापत्ययुक्त्या स्वापत्ययोगेन तदुत्पत्त्या हननवत्स्वोत्प्रेक्षितत्वेन स्वापत्यतुल्यया लक्षणप्रयोजनखण्डनयुक्त्या परस्य बाधः स्यादित्यर्थः । कथं परस्य स्यापत्ययुक्त्या बाध इत्यत आह **तेनापीति** ।

**स्मृतिरूप इति** । यद्यपि परभाष्ये स्मृतिरूपः परत्र दृष्टावभास इत्येव पठितं तथाऽपि साकाङ्क्षत्व-परिहाराय प्रश्नवाक्यस्थाध्यासपदानुषङ्गं सिद्धवत्कृत्याध्यासपदगर्भतयैवानुवादः कृत इति द्रष्टव्यम् । अत्र परत्रेत्युक्त्या परस्येत्यस्यार्थतो लाभात् परत्र परस्यावभास इत्येव लक्षणमभिमतं तदुपपादनाय स्मृतिरूपत्व-सङ्कीर्तनं स्मृतिरूपत्वोपपादनाय च पूर्वदृष्टत्वसङ्कीर्तनम् । तथा हि । अत्राध्यासद्वयेऽपि परत्रेति सामान्यतो धीयोग्यमधिष्ठानमुक्तम् । तत्रार्थपक्षेऽवभास्यत इत्यवभासः परश्चासाववभासश्च परावभास इति विग्रहः । ज्ञान-पक्षे चावभासनमवभासः परस्यावभासः परावभास इति विग्रहो द्रष्टव्यः । परावभास इत्येवोक्ते घटात्परस्य पटस्यावभासेऽवभास्यमाने पटे चातिव्याप्तिः स्यात्तन्निवृत्तये परत्रेत्युक्तम् । न चैवमपि खण्डो गौरित्यादा-वतिव्याप्तिः । परत्रेत्यारोप्यात्यन्ताभाववतोऽधिष्ठानस्य विवक्षितत्वात् । खण्डगवादीनां तादात्म्यवतां संसर्ग-शून्यत्वासम्भवात् । दोषसंस्कारसम्प्रयोज्यत्वादवभासः सम्भवतीति वक्तुं स्मृतिरूप इत्युक्तम् । स्मर्यत इति स्मृतिः स्मर्यमाणोऽर्थः । भावे, अकर्तरि च कारके संज्ञायामिति सूत्रद्वयमधिकृत्य स्त्रियां क्तिन्निति सूत्रेण भावे कर्तृव्यतिरिक्ते च कारके कर्मादौ संज्ञायां चकारादसंज्ञायां च क्तिन्विधानात् । ततश्चार्थपक्षे स्मर्यमाणस्य रूपमिव रूपमस्येति स्मृतिरूपः । न तु स्मर्यत एवास्पष्टं पुरोवस्थितत्वेन भानात् । ज्ञानपक्षे च स्मरणं स्मृतिः । उक्तसूत्रेण भावेऽपि क्तिन्विधानात् स्मृते रूपमिव रूपमस्येति स्मृतिरूपः । न पुनः स्मृतिरेव पूर्वानुभूतस्य तथा भानात् । स्मृतिरूपता चास्य दोषादित्रयोत्पन्नत्वात् तादृग्विषयत्वाद्वा अदृष्टरजतस्य रजत-भ्रमादृष्टेस्तत्संस्काराभावाच्च संस्कारद्वारा स्मृतिरूपतोपयोगित्वं पूर्वदृष्टत्वस्य । ततश्चात्र भाष्ये परत्र परावभास इत्येवाध्यासलक्षणमभिमतम् इतरदुक्तरीत्या तच्छेषभूतमित्यवधेयम् । यद्वाऽत्रावभास इत्यनेन मिथ्याज्ञानमध्यास इति सङ्क्षिप्तमध्यासलक्षणमुक्तम् । अवसन्नोऽवमतो भासोऽवभासः । प्रत्ययान्तरबाध एवात्रास्यावसादोऽवमानो वेति यौगिकेन तेन मिथ्याज्ञानस्यैव लाभसम्भवात् । पूर्वदृष्टेत्यादिना त्ववभासपदस्य रूढमर्थमादाय विस्तृत-मध्यासलक्षणमुच्यत इति द्रष्टव्यम् ।

तथा हि । पूर्वदृष्टस्यावभासः पूर्वदृष्टावभासः । अत्र पूर्वदृष्टेत्यनेनानृतमारोपणीयमुपस्थाप्यते मिथ्या-प्रत्ययस्यारोपविषयारोपणीयरूपसत्यानृतमिथुनमन्तरेणासम्भवात् तस्य च दृष्टत्वमात्रमुपयुज्यते न वस्तुसत्ता इत्यभिप्रेत्य दृष्टग्रहणम् । तत्रापि वर्तमानं दृष्टदर्शनं नारोपोपयोगीति भावेन पूर्वेत्युक्तम् । तच्च पूर्वदृष्टं स्वरूपेण सदप्यारोपणीयतयाऽनिर्वाच्यमित्यनृतम् । आरोपविषयं सत्यमाह **परत्रेति** । परत्र शुक्तिकादौ परमार्थसती-त्यर्थः । तदनेन विशेषणद्वयेन सत्यानृतं मिथुनमुक्तं भवति । पूर्वदृष्टस्य परत्रावभासोऽध्यास इत्युक्ते,





स्वस्तिमत्यां गवि पूर्वदृष्टस्य गोत्वस्य परत्र कालाक्ष्यामवभासे, तथा पाटलिपुत्रे पूर्वदृष्टस्य देवदत्तस्य परत्र माहिष्मत्यामवभासे च, यथार्थप्रत्यये प्रत्यभिज्ञारूपेऽतिव्याप्तिः । न च मिथ्याज्ञानत्वरूपावभासपदार्थस्य तत्राभावात् कथं तत्पदाङ्कितलक्षणस्य तत्रातिव्याप्तिरिति वाच्यम् । अत्र लक्षणेऽवभासपदस्य रूढार्थत्वाश्रयणेन योगेन मिथ्याज्ञानार्थत्वाभावात् । नीलस्यावभासः पीतस्यावभास इत्यादौ समीचीनप्रत्ययेऽप्यवभासप्रसिद्ध्या समीचीनप्रत्ययस्याप्यवभासपदरूढार्थत्वात् । न चैवमपि पूर्वदृष्टेत्यनेनानृतस्यारोपणीयस्योक्तत्वात् कथं तत्पदाङ्कितलक्षणस्य प्रत्यभिज्ञायामतिव्याप्तिरिति वाच्यम् । स्मृतिरूपपदाभिधास्यमानासन्निधानसिद्धवत्कारेण पूर्वदृष्टेत्यनेनानृतारोपणीयसमर्पणस्योक्तत्वेन तस्य पूर्वदृष्टपदसामर्थ्याप्रयुक्ततया तत्पदाङ्कितलक्षणस्यापि तत्राति-व्याप्तेर्वज्रलेपत्वात् । अतस्तत्रातिव्याप्तिपरिहारार्थं स्मृतिरूप इत्युक्तम् । स्मृतिरूपमिव रूपमस्येति स्मृतिरूपः । न चोक्तप्रत्यभिज्ञाया अपि संस्कारजन्यत्वेन स्मृतिरूपत्वान्न तेन तद्व्यावृत्तिरिति वाच्यम् । स्मृतिरूप-पदेनासन्निहितविषयत्वस्योक्त्या संस्कारजन्यस्याप्युक्तप्रत्यभिज्ञानस्य समीचीनप्रत्ययत्वेन सन्निहितविषयत्वेन असन्निहितविषयत्वाभावात् तदर्थकस्मृतिरूपपदेन तद्व्यावृत्तेः सम्भवात् । न च देशान्तरादौ सत्त्वरूप-असन्निहितत्वस्य प्रत्यभिज्ञाविषयेऽपि सत्त्वान्नासन्निहितविषयत्वोक्त्याऽपि प्रत्यभिज्ञानिरास इति वाच्यम् । आरोप्यस्याधिष्ठाने परमार्थतोऽसत्त्वरूपस्यैवासन्निहितत्वस्य स्मृतिरूपपदेन विवक्षिततया तेनोक्तप्रत्यभिज्ञा-व्यावृत्तेः सम्भवात् । ततश्चासन्निहितस्यावभासोऽध्यास इत्येव तल्लक्षणमितरत्तु तच्छेषभूतं न तु स्मृता-वतिव्याप्तिपरिहाराय परत्रेत्यपि लक्षणे निवेश्यम् । 'स्मृतिरूप'विशेषणेनैव स्मृतिव्यावृत्तिसिद्धेः । तदर्थ-स्याधिष्ठाने परमार्थतोऽसत्त्वमिति निरुक्त्याऽधिष्ठानसमसत्ताकत्वाभावरूपस्य प्रत्यभिज्ञाविषये गोत्व इव स्मृतिविषयीभूतायामप्यभावात् । उभयोरपि गोव्यक्त्यन्तरस्मर्यमाणधर्मिरूपाधिष्ठानसमसत्ताकत्वादधिष्ठाने सत्यत्वार्थकेन परत्रेत्यनेन स्मृतिव्यावर्तनाच्चेत्यन्यत्र विस्तरः । आदिपदेन भ्रमोपादानत्वाद्यविद्यादिलक्षणसङ्ग्रहः । **सूत्रकृता चेति** । लक्षणं शास्त्रे निबद्धमिति सम्बन्धः ।

कथं लक्षणानां शास्त्रे निबन्धनमात्रेण परस्य स्वव्याहतिरित्यत आह **तत्रेति** । **दुष्टोपादानस्येति** । दुष्टस्वीकारस्येत्यर्थः । **पराजयेति** । तथा चानर्थकं नाम निग्रहस्थानं परस्यापि स्यादिति भावः । ननु दुष्टोपादानेऽपि न मम पराजयो मया तादृशानामेव व्यवहारनिर्वाहकत्वाभ्युपगमादिति शङ्कते **दोषेति** । न तावद्भवदीयलक्षणानामव्यक्तदोषत्वम् । व्यक्तदोषाणामपि व्यवहारनिर्वाहकत्वे चातिप्रसङ्ग इत्याह **नेति** । **आपातत इति** । व्यक्तदोषाणामपीत्यर्थः ।

**वा०र०— तत्रैव प्रयोगादिति** । अत्र चेत्यत्र इत्यन्तेन तत्पक्षोऽभ्युपगम्यते । तेन तद्व्याप्ते-रनवगतत्वादित्यादिना तदुपपादनादिति सूचयति **लक्षणवैयर्थ्यमिति** । यद्यपि प्रागनुमानवैयर्थ्यमुक्तमिति तथैव वक्तुमुचितं तथापि लक्षणस्याप्यनुमानत्वाश्रयणेनैव प्राचीनोक्तिरिति भावेन लक्षणेत्येवोक्तम् । ननु तत्रैव प्रयोगादिति पक्षे सास्नादिमत्वं यत्रास्ति तत्र सर्वत्र गोशब्दप्रयोगोऽस्ति । यत्र च तन्नास्ति न तत्र तत्प्रयोगः इत्यन्वयव्यतिरेकाभ्यामेव वृद्धव्यवहारेणैव घटादिशब्दसङ्गतिग्रहणवत् गोशब्दवाच्यत्वज्ञानं सम्भवत्येवेति





नानुमानेन तज्ज्ञानार्थं यः सास्नादिमान् सः गौरिति व्याप्तिविषयलक्षणवाक्यं आवश्यकमित्येवं प्राप्तलक्षण-वैय्यर्थ्यमेव प्राक् शङ्कितमिति तदेव परिहरणीयम् । परिहृतं च बोध्यस्यातिप्रसङ्गः । इत्याद्यपक्षनिरासकेनापि तेन तद्व्याप्तेः अनवगतत्वात्, अवगतत्वाच्च गोशब्दवाच्यताप्रतीतेरित्यनेन । तत्र हि बोध्येन गोशब्दवाच्यत्वेन सास्नादिमत्वव्याप्तेः प्रयोजकवृद्धीयलक्षणवाक्येन अवगतत्वादित्यर्थः । तेनापि पूर्ववृद्धवचनादिना तथैव व्याप्ते-रवगतत्वात् इत्युत्तरग्रन्थानुसारात् । एवं च वृद्धव्यवहारेणैव घटादिशब्दवाच्यत्वग्रहवत् लक्षणवाक्यप्रयोगरूपेण वृद्धव्यवहारेणैव गोशब्दवाच्यत्वज्ञानमपि भवतीत्यङ्गीकारे लक्षणाभिधानसार्थक्यं सिद्धमेव । यच्च इदानीं शास्त्रान्तरसाध्यत्वात् इत्यनेन लक्षणाभिधानवैयर्थ्यशङ्कनं न तत् पूर्ववत् प्रयोजनाभावाश्रयणेन । किन्तु सत्यपि प्रयोजने शास्त्रान्तरेऽस्यार्थस्य प्रतिपादितत्वात् अत्र प्रतिपादनं न कर्तव्यमिति शास्त्रान्तरसङ्करापत्त्या आश्रयणेन । न च तत् सास्नादिमत् इत्येव प्रयोगात् गोशब्दवाच्यत्वं तत्र साध्यते इत्यस्मिन् पक्षे प्राक् आशङ्कितम् । किन्तु लक्षणाभिधानं किं सजातीयविजातीयव्यावृत्त्यर्थमिति प्राथमिकशङ्कामारभ्य शिष्यं प्रति लक्षणवाक्यं लक्षणावगमकमित्यन्तसम्भावितासम्भावितसम्मतासम्मतसर्वपक्षसाधारणतया शिष्यं प्रति लक्षण-वाक्य इत्यस्मिन् पक्षे आशङ्कितम् । अत एव च व्यावृत्त्याद्यर्थत्वादितत्तत्पक्षेऽपि अस्य वैयर्थ्यप्रसङ्गोऽपि सर्वत्र एकोक्त्यैव तद्वचनार्थं अन्तिमाक्षेप एव तदुक्तम् । अतः कथं इत्यत्रोक्तमिति वचनमिति चेत् । अत्र ब्रूमः । यत्तावदुक्तं तत्रैव प्रयोगात् इत्यस्मिन् पक्षे प्रागाशङ्कितं वैयर्थ्यं परिहृतमेवेति तत्तथैवेति वदामः । शङ्कि-ष्यमाणवैयर्थ्यं च भिन्नमित्यपि अङ्गीकुर्मः । किन्तु व्याप्त्याद्यर्थं इत्यादिपक्षेषु प्रयुक्तस्याप्यलक्षणाभिधान-वैयर्थ्यस्य तेषां पक्षाणां मध्ये कस्यचिदनङ्गीकारेण कस्यचिदतिदेशेन उपपादनेन तत्रैव प्रयोगात् इत्यस्यैवात्र निर्वाह्यतया प्रकृतत्वेन तत्रैव दोषत्वेन प्राप्ततया शङ्कानिरासकत्वेन अत्रोक्तमस्त्वित्युपपत्तेः । इतरभेदज्ञानं प्रयोजनं इत्येतत्पक्षे तु अतिदेशेनानुमानप्रकारसाधुत्ववत् तत्तद्दोषपरिहारो सुज्ञान एवेति चोपलक्षणतया तस्याप्यत्र ग्रहणस्याभिप्रेतत्वेन तत्रैव प्रयोगात् इति एकस्यैव पक्षस्य उपादानमिति युक्तमुक्तमित्यत्र लक्षणवैयर्थ्यमुक्त-मनुभाष्येतीति दिक् । इत्यत्रापि उक्तप्रायमित्यर्थः इत्यप्याहुः । परत्रेत्युक्तेऽर्थात् परस्यावभासमानतेति पञ्च-पादिकानुसारेणाह **अत्र परत्रेत्युक्त्येति** । **इत्येव लक्षणमिति** । परस्येति सर्वविभक्तिकस्य लाभानुसारेण परस्यावभासः इत्युक्तिः । वस्तुतः परावभासः इत्येव विवक्षितम् । अत एव परश्चासौ इत्याद्युत्तरग्रन्थे पदैक्याश्रयणेन व्यवहारो युक्त इति ज्ञेयम् । **अध्यासद्वयेऽपीति** । अर्थरूपे ज्ञानरूपे चेत्यर्थः । **अर्थपक्ष इति** । उत्तरत्र क्रमाविवक्षया अर्थस्य पश्चादुक्तिः क्वचित् पूर्वमुक्तिश्च युक्तेति ज्ञेयम् । **आरोप्यात्यन्ताभाव-वत इति** । आरोप्यसंसर्गशून्यस्येत्यर्थः । यद्वक्ष्यति संसर्गशून्यत्वाभावादिति । **खण्डगवादीनामिति** । तेषां तादात्म्यरूपसंसर्गवत्तया तच्छून्यत्वाभावादिति भावः । विवरणोपन्यासाद्यनुसारेणाह **दोषेति** । ननु अकर्तरि च कारके संज्ञायां इति कर्तृव्यतिरिक्ते कारके संज्ञायां एव घञो विधानात् कथं तदधिकारस्थस्त्रियां क्तिन् इत्यनेनासंज्ञाभूते स्मृतिशब्दे कर्मणि क्तिन् इत्यत आह **भाव इति** । ततश्चाकर्तरीति सूत्रे चकारेणासंज्ञायामपि घञादिप्रत्ययविधानसिद्धेः युक्तः प्रवृत्तँ कर्मणि क्तिन् इति भावः । ननु स्मृतित्वमात्रमेव वक्तव्यम् । न तु उपपदेन कृत्य इत्यतः अस्मर्यमाणेऽस्मृतिरूपे चोपमासमासार्थोरुपशब्दः इत्याशयेनाह **ततश्चार्थपक्ष इति** । ननु





स्मर्यमाणत्वमेव किं न स्यात् इत्यत आह **न त्विति** । अत्र बाधज्ञानोत्तरकालं एतावन्तं कालं इदं रजतमित्याभात् इति इदमा संसृष्टावभासत्वेन प्रत्यभिज्ञायोग्यत्वं स्पष्टत्वम् । भ्रान्तिसमये पुरोदेशसंसृष्टतया रजतस्य स्फुरणं पुरोऽवस्थितत्वावभासनमिति विवेको बोद्धव्यः । संस्कारजन्यत्वेनैव स्मृतित्वं किं न स्यात् इत्यत आह **न पुनरिति** । **तथेति** । पुरोऽवस्थितत्वेनेत्यर्थः । स्मृतित्वे पूर्वानुभवविषयभूतस्यार्थस्य इदमनुभवभिन्नत्वेनावभासकं स्यात् न चैवमिति भावः । अनुभवभिन्नत्वेनानवभासकत्वे कथमस्य स्मृतिता इत्यत आह **स्मृतिरूपता चास्येति** । **तादृग्विषयकत्वाद्वेति** । स्मृतिविषयसदृशार्थविषयकत्वादित्यर्थः । एवं स्मृतिरूपत्वस्यावभासोपपादकत्वं उपपाद्य स्मृतिरूपत्वोपपादकत्वं पूर्वदृष्टत्वस्य उपपादयति **अदृष्टेति** । आरोप्यज्ञानाभावे तज्जनितसंस्काराभावात् भ्रमरूपस्मृत्यनुपपत्तिः इत्यतः स्मृतिरूपतोपयोगित्वं **पूर्वदृष्टत्व-स्येति** । पूर्वदर्शने भ्रमसंस्कारयोः सम्भवेन स्मृतिः सम्भवतीति भावः । उक्तमर्थमुपसंहरति **ततश्चेति** । एवं पञ्चपादिकाद्युक्तरीत्या लक्षणं विचार्य वाचस्पतिरीत्या तत् विचारयति **यद्वेति** । अनृतं आरोपणीयमिति पाठः मूलकोशे भामत्यां च तथैव सत्त्वात् । अथ स्मृतिरूपविशेषणस्य कृत्यं वक्तुं तद्व्यावृत्त्यां अति-व्याप्तिं तावदाह **पूर्वदृष्टेति** । कल्पतर्वाद्यनुसारेणाह **न च मिथ्येति** । भामतिव्याख्यानुसारेणाह **न च देशा-न्तरादाविति** । एतत् स्थलं पुनः स्पष्टनीयमस्ति ।

**स०व्र०— अयमर्थ इति** । लक्षणवाक्यबोध्यार्थ इत्यर्थः । **कुलीरस्येवेति** । कर्कटस्य स्वापत्येन हननवत् स्वोक्तयुक्तिबाधः स्यादित्यर्थः । **दोषास्कन्दितान्यपीति** । दोषाणां पारमार्थिकत्वाभावादिति भावः । आपाततो दुष्टानामित्यस्य यथास्थितान्वये दोषाणामपारमार्थिकत्वं तदर्थः । आपाततस्तथात्वे इत्युत्तरत्र सम्बन्धे कार्यस्यापारमार्थिकत्वं तदर्थ इति द्रष्टव्यम् । **तद्भाव इति** । व्यवहारनिर्वाहकत्वाभाव इत्यर्थः । **अनुपपत्तेरन्यत्** लक्षणानुपपत्तेरन्यदित्यर्थः ।

**विठ्ठल०— विषयप्रयोजनेति** । ब्रह्मविषयः मोक्षः प्रयोजनमित्येतच्छास्त्रस्य व्याकरणादेस्तु साधुशब्दतद्व्यवहारौ विषयप्रयोजने इति भेदान्न साङ्कर्यमित्यर्थः । शङ्कते **यदीति** । **सन्दिग्धतादीति** । भावशब्दस्य स्वरूपाभिप्रायकत्वं वा सत्तासामान्यादित्वं वेत्यादि सन्दिग्धतादिसद्भावेऽपीत्यर्थः । **उक्त-दिशेति** । तत्रोक्तदिशा प्रकरणभेदः उभयार्थकमित्यादि शिष्यैरेव ज्ञातुं शक्यत्वादिति भावः । **अन्यथेति** । लक्षणोक्ते अस्मदुक्तरीत्या सार्थक्यानङ्गीकार इत्यर्थः । **कुलीरस्येति** । कर्कस्येत्यर्थः । **स्मृतिरूप इति** । स्मृत्या रूप्यते उत्पद्यत इति स्मृतिरूपम् । **इत्यादीत्यनेन** सदसद्विलक्षणत्वमनिर्वचनीयमित्यादि लक्षण-सङ्ग्रहः । यत इतीत्यतःपरं लक्षणं निबद्धमित्यन्वयः । **एते इति** । ये अस्मान्प्रति लक्षणदोषा उक्ता एते इत्यर्थः । **दुष्टोपादानस्य** दुष्टलक्षणस्वीकारस्य । **दोषास्कन्दितानीति** । तथा च दुष्टत्वेऽपि व्यवहारनिर्वाह-हेतुत्वान्न तदुपादानं पराजयाय हेतुरिति भावः । **आपाततोऽपि दुष्टानामिति** । अविद्यादोषव्यतिरिक्त-दोषदुष्टानामपि व्यावहारिकत्व इत्यर्थः । **न हि तेषामिति** । तेषामुन्मत्तभाषितानामनिर्वाहकत्वेनोक्तानुपपत्तिं





विना कारणान्तरमस्ति । अतोऽनुपपत्तिरेव कारणमिति वाच्यम् । सा च समापरोक्ताध्यासादिलक्षणानामपीति । एतेषामपि निर्वाहकत्वं तथा च तदुपादानं पराजयहेतुरेवेति भावः ।

**चषकः— कुलीरस्य** कर्कटकस्य । 'स्यात्कुलीरः कर्कटक' इत्यमरोक्तेः । **स्वापत्ययुत्त्या** स्वापत्ययोगेन तदुत्पत्त्याह तत्त्ववत् स्वोत्प्रेक्षितत्वेन स्वापत्यरूपयुत्त्या स्वोक्तस्य बाधः स्यादित्यर्थः ।

**६९ सु०— किञ्चैवं वदता 'प्राग्ब्रह्मसाक्षात्काराद्बाध्यमव्यावहारिकं ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमि'ति मतमपि परित्यक्तं स्यात् । न ह्ययं ब्रह्मसाक्षात्कारो नापि बाधः ।**

**परि०— एवं वदतेति** । दुष्टमपि लक्षणं व्यवहारनिर्वाहकमिति वदता त्वदुत्प्रेक्षित-तर्कबाधितान्यपि लक्षणानि व्यवहारनिर्वाहकाणीत्युत्त्या व्यावहारिकाणीत्यङ्गीकृतत्वादिति भावः । अनुपपत्तिप्रतिसन्धानस्य ब्रह्मसाक्षात्कारत्वेन (न)लक्षणदुष्टत्वज्ञानस्य बाधत्वे(न) च व्यावहारिकता लक्षणस्य वक्तुं शक्या । न चैवमित्याह **न ह्ययमिति** । अनुपपत्त्यवमर्शः ब्रह्मसाक्षात्कारो न भवति तेन लक्षणस्य दुष्टत्वज्ञानं त्रैकालिकनिषेधादिरूपबाधश्च न भवतीत्यर्थः ।

**गु०दी०— न ह्ययं ब्रह्मसाक्षात्कार** इत्यत्रायं तवाध्यासलक्षणे समानन्यायत्वेनाऽऽपतितो दोषो ब्रह्मसाक्षात्कारो न हि येनैतद्दोषेण बाधोऽपि ब्रह्मसाक्षात्कारेणैव बाध इति व्यावहारिकनिर्वाहः स्यात् । नाप्यबाधः । बाधो नेत्यपि न । अतो व्यावहारिकत्वं गतमेव । न दूषणम् । किन्तु ब्रह्मसाक्षात्कारा-त्प्रागेवोक्तदोषदूषितत्वाच्छुक्तिरजतादिवद्भवदीयलक्षणशास्त्रस्य प्रातिभासिकत्वं च स्यादित्यर्थः ।

**यादु०— एवं वदतेति** । उक्तानुपपत्तिदुष्टमपि लक्षणं व्यावहारिकमिति वदतेत्यर्थः । **न ह्यय-मिति** । उक्तानुपपत्तिप्रत्यय इत्यर्थः । **नापि बाध इति** । उक्तानुपपत्तिप्रत्ययेन लक्षणानां दुष्टत्वप्रत्यय एव भवति न त्रैकालिकनिषेधरूपो बाध इत्यर्थः ।

**वं०प०—** ननूक्तानुपपत्तिप्रत्ययदुष्टस्यापि व्यावहारिकत्वं वदता ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमिति मतं न त्यक्तम् । उक्तानुपपत्तिप्रत्ययस्य ब्रह्मसाक्षात्काररूपत्वाङ्गीकारादित्यत आह **न ह्ययमिति** । किञ्चोक्तानुपपत्तिप्रत्ययस्य ब्रह्मसाक्षात्काररूपत्वे तेन लक्षणानां त्रैकालिकनिषेधरूपो बाधबोधः स्यात् । न चैवम् । किन्नाम दुष्टत्वप्रत्यय एव भवतीत्याशयेनाह **नापि बाध इति** ।

**कं०रा०— किं चैवमिति** । दोषास्कन्दितान्यप्यध्यासादिलक्षणानि व्यवहारं निर्वहन्तीति वदता ब्रह्मसाक्षात्कारात्प्राग्बाध्यं व्यवहारनिर्वाहकं ब्रह्मसाक्षात्कारबाध्यं व्यवहारनिर्वाहकमिति मतमपि त्यक्तं स्यान्न





ह्ययं दोषो ब्रह्मसाक्षात्कारो नापि तेन सविलासाज्ञाननिवृत्तिलक्षणो बाधः येन तादृशदोषबाध्यस्य स्वाभिमताध्यासादिलक्षणस्य व्यवहारानिर्वाहकत्वं सुवचं स्यादिति भावः । किञ्चैवमस्मदीयमतिदोषास्कन्दितस्यापि तदीयाध्यासादिलक्षणस्य व्यवहारनिर्वाहकत्वेऽस्मदीयं याथार्थ्यरूपप्रमाणलक्षणमपि कुतो व्यवहारं न निर्वहेत् । न हि व्यवहारातिरिक्तं लक्षणप्रयोजनमिच्छाम इत्यर्थः ।

**शे०वा०—** प्रसङ्गमूलभूतव्याप्तौ दृष्टान्ताभावेन व्याप्तिवैधुर्यात् तर्काभासोऽयमित्यतो विशेषव्याप्त्यभावेऽप्यविशेषरूपसामान्यव्याप्तेः सत्त्वान्नानुपपत्तिरित्यभिप्रेत्य विशेषराहित्यमुपपादयति **एवं वदतेति** । अनुपपत्तिदुष्टमपि लक्षणं व्यावहारिकमिति वदतेत्यर्थः । **न ह्ययमिति** । अयमनुपपत्तिरूप इत्यर्थः । **नापि बाध इति** । उक्तानुपपत्तिप्रत्ययो लक्षणानां दुष्टत्वप्रत्यय एव । न तु त्रैकालिकनिषेधप्रत्ययरूपो बाध इत्यर्थः । तथा च नास्य ब्रह्मसाक्षात्कारत्वबाधत्वं येन ब्रह्मसाक्षात्कारबाध्यत्वेन व्यावहारिकत्वं लक्षणानां स्यादिति भावः । यद्वा न हीत्यादेरयम्भावः । अनुपपत्तिलक्षणदोषस्य ब्रह्मसाक्षात्कारत्वाभावान्न तद्बाध्यत्वेन लक्षणानां व्यावहारिकमित्यर्थः । ननु च माऽस्तु ब्रह्मसाक्षात्कारत्वं तथाऽपि बाधत्वं किन्न स्यादित्यत आह **नापीति** । बाधत्वाभ्युपगमे तद्बाध्यलक्षणानामब्रह्मसाक्षात्कारबाध्यतया प्रातिभासिकत्वं स्यादिति । 'नापि न बाध' इत्यपि क्वचित्पाठः । तत्रेत्थं योजना । ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमिति मतत्यागो हि द्वेधा सम्भवति । अनुपपत्तिरूपलक्षणदोषस्य ब्रह्मसाक्षात्कारत्वेन वाऽबाधत्वेन वा । न तावदाद्यप्रकार इत्याह **न हीति** । अयमनुपपत्तिलक्षणो न ब्रह्मसाक्षात्कार इत्यर्थः । तथा चानुपपत्तिलक्षणदोषस्याब्रह्मसाक्षात्कारत्वात् तद्बाध्यलक्षणानामप्यब्रह्मसाक्षात्कारबाध्यत्वान्न व्यावहारिकत्वसिद्धिरिति भावः । द्वितीयं प्रकारं प्रतिषेधति **नापि न बाध इति** । ततश्चानुपपत्तिलक्षणदोषस्याब्रह्मसाक्षात्कारत्वेऽप्यबाधकत्वे तदुपन्यासवैयर्थ्यप्रसक्त्याऽबाधकत्वाभावान्न तेनापि रूपेण मतत्याग इति भावः । अनुपपत्तिलक्षणो बाधः किं ब्रह्मसाक्षात्काररूपः किंवा तदितर इति विकल्पं मनसि निधायाद्यं दूषयति **न ह्ययमिति** । तथा च न लक्षणानां व्यावहारिकत्वं स्यात् । न च तत्परेणेष्यते । तथा च ब्रह्मसाक्षात्काराबाध्यस्यापि व्यावहारिकत्वे ब्रह्मसाक्षात्कारबाध्यं व्यावहारिकमिति मतं त्यक्तमेवेत्याशयः । द्वितीयं दूषयति **नापीति** । तदितरे इति शेषः । तथा सत्यब्रह्मसाक्षात्कारबाध्यत्वेन लक्षणानां प्रातिभासिकत्वमेव स्यात् । न च तत्परेणेष्यते । तथा चाब्रह्मसाक्षात्कारबाध्यस्यापि व्यावहारिकत्वे प्राग्ब्रह्मसाक्षात्काराद्बाध्यमव्यावहारिकमिति मतत्याग एवेति भाव इत्यप्याहुः ।

**वा०र०—** **यद्वा न हीत्यादेरिति** । न हि अयं इत्यादेरित्यर्थः । **इत्यर्थ इति** । न हि इति प्रथमवाचकार्थ इत्यर्थः । उपलक्षणं चैतत् । ब्रह्मसाक्षात्कारत्वाभावे अस्य बाध्यत्वं च नाङ्गीकर्तुमुचितं इत्यपि द्रष्टव्यम् । अत्र शङ्कते **ननु चेति** । पूर्वयोजनायां न हीत्यादि वाक्यद्वयार्थत्वेन ब्रह्मसाक्षात्कारत्वाभावात् बाधस्वरूपपर्यालोचनायां बाधत्वाभावाच्च न ब्रह्मसाक्षात्कारबाध्यत्वमिति विशिष्टासम्भवोऽभिहितः । तत्पक्षे ब्रह्मसाक्षात्कारत्वाभावमात्रोक्त्यापि विशिष्टासम्भवप्राप्तेः । किं नापीति वाक्येन बाध्यत्वाभावोक्त्योत्पत्त्यरुच्या





ब्रह्मसाक्षात्कारत्वाभावेऽपि बाधत्वसत्त्वात् बाध्यत्वमात्रमस्तु इति शङ्कान्तरनिराकरणार्थं यथार्थत्वे ब्रह्मसाक्षात्कारातिरिक्तबाधबाध्यत्वाङ्गीकारप्राप्त्या लक्षणस्य प्रातिभासकत्वापत्तिः स्यात् इत्येवंरूपदोषान्तराभिधायकतया उत्तरवाक्यं योजितमिति ध्येयम् । **अनुपपत्तिरूपलक्षणदोषस्येति** । अनुपपत्तिरूपो लक्षणस्य यो दोषः तस्येत्यर्थः । **ब्रह्मसाक्षात्कारत्वेन वेति** । बाधत्वेऽपीति शेषः । **अबाधत्वेन वेति** । अब्रह्मसाक्षात्कारत्वेऽपीति शेषः । **तथा चानुपपत्तीति** । अनुपपत्तिलक्षणदोषस्यापि ब्रह्मसाक्षात्काररूपत्वेन तद्बाध्यलक्षणानामपि ब्रह्मसाक्षात्कारबाध्यत्वात् व्यावहारिकत्वस्य सिद्धिः या पराभिमता सा नेति नञो नयः । दोषस्याब्रह्मेति लक्षणानामपि अब्रह्मेति नञ्पाठे तु यथाश्रुत एवान्वयः । व्यावहारिकत्वं स्यात् इत्यतःपरं न च तथापरेण इति पाठः । तत्र तथेत्यस्य लक्षणानां व्यावहारिकत्वाभाव इत्यर्थः । न च तत् इति पाठे तु लक्षणानां अव्यावहारिकत्वमित्यर्थः । अनुपपत्तिलक्षणदोषस्य बाध्यतायाः प्रागप्रसक्तेः तदङ्गीकारेण विकल्पानवकाशः । नापि बाधः इत्यस्य बाधत्वनिषेधकतया एव प्रतीतेः इतरबाधत्वनिराकरणानुपपत्तिश्चेत्यस्वरसाभिप्रायेणाह **आहुरिति** । अयं च पक्षः नापि बाध इति पाठपक्षे द्रष्टव्यः । अस्यात्राभिधानरूपकपक्षमात्रमालम्ब्य प्रवृत्तेः पाठान्तरादर्शनादिमूलकत्वमित्यपि सूचयितुमिति ध्येयम् ।

**स०व्र०— किं चेति** । ब्रह्मसाक्षात्कारस्य तदितरसाक्षात्कारस्य चापारमार्थिकत्वेन तद्बाधस्याप्यपारमार्थिकत्वेन बाध्यत्वाबाध्यत्वाभ्यां व्यावहारिकाव्यावहारिकविभागो न स्यादित्यर्थः । **न ह्ययमिति** । लक्षणदोष इत्यर्थः ।

**स०ना०— याथार्थ्यमेव मानत्वमिति** मूलसुधायां **न ह्ययं ब्रह्मसाक्षात्कार इति** । ब्रह्मसाक्षात्कारबाध्यमेव व्यावहारिकं उपन्यस्तो लक्षणदोषस्तु ब्रह्मसाक्षात्कारोऽपि न प्रतिपन्नोपाधौ त्रैकालिकनिषेधलक्षणबाधोऽपि न किन्तु दुष्टत्वप्रतीतिमात्रहेतुरिति कथं तेन व्यावहारिकत्वं स्यादित्यर्थः ।

**विठ्ठल०— एवं वदतेति** । आपातदोषदुष्टमपि व्यवहारनिर्वाहकमिति वदतेत्यर्थः । ननु नैतद्ब्रह्म साक्षात्कारीति रिक्तदोषदुष्टं किं नाम ब्रह्मसाक्षात्कारादित्यत आह **न ह्ययमिति** । उक्तानुपपत्तिप्रत्यय इत्यर्थः । **नापि बाध इति** । त्रैकालिकनिषेधरूपो बाधो नेत्यर्थः । किं तु लक्षणा नाम दुष्टमेवेति भावः ।

**७० सु०— किञ्चैवमस्मदीयमपि लक्षणं कुतो न व्यवहारं निर्वहेत् । न च व्यवहारनिर्वाहातिरिक्तं किमपि तत्साध्यमभिलषामः । भवदभिलषिता पारमार्थिकता बाध्यत इति चेत्, किं लक्षणस्योत लक्ष्यस्य ।**

**नाद्यः, तथा हि, 'विमतमपारमार्थिकमप्रयोजनाभिधानत्वात्' इत्याद्युक्तं स्यात्, न चास्य अस्मान्प्रति व्याप्तिः शक्याभिधाना । किञ्चास्मिन्पक्षेऽध्यासलक्षणानुपपत्तिश्च**





**भवता न परिहरणीया, तस्या व्यवहारनिर्वाहाविरोधात्, पारमार्थिकतानिषेधौपयिकत्वेनेष्ट-साधनत्वाच्च । एतेनातिव्याप्त्यादिदोषोऽपि नापरमार्थ(पारमार्थिक)तासाधकः, अलक्षणता-साधकस्तु स्यात् ।**

**न द्वितीयः, अनुपपद्यमानलक्षणत्वेन लक्ष्यमिथ्यात्वसाधने ब्रह्मणि व्यभिचारात्, उक्ताया लक्षणानुपपत्तेस्तल्लक्षणेऽपि साम्यात् ।**

**परि०— इत्याद्युक्तं स्यादिति** । दुर्ज्ञानत्वादिरादिपदार्थः । **अस्मान्प्रतीति** । अस्माभिः प्रयोजनहीनाभिधानवतामुन्मत्तभाषितादीनां पारमार्थिकत्वाभ्युपगमादिति भावः । नन्वेवं कथं तर्ह्य-व्याप्त्यादिदोषो लक्षणस्यापारमार्थिकतासाधक इत्यतो न भवत्येवेत्याह **एतेनेति** । अध्या-सादिलक्षणेऽनुपपत्तेरपरिहार्यतापातेनेत्यर्थः । लक्षणस्येति पक्षं निराह **न द्वितीय इति** । अनुपपद्य-मानलक्षणत्वेनेति बहुव्रीहिः ।

**यादु०— न चास्येति** । निष्प्रयोजने काकस्याष्टौ दन्ता इत्यादिवाक्येऽस्मन्मते मिथ्यात्वाभावेन दृष्टान्ताभावादिति भावः । नन्वेवमतिव्याप्त्यादिदोषोऽपि लक्षणापारमार्थिकतासाधको न स्यादित्यत आह **एतेनेति** । तथात्वेऽध्यासादिलक्षणेऽतिव्याप्त्यादिदोषपरिहारेऽपि भवता न कार्यः स्याद्व्यवहाराविरोधित्वादिष्ट-साधनत्वाच्चेत्युक्तदूषणेनेत्यर्थः । तथा चेष्टापत्तिरिति भावः । तर्ह्यतिव्याप्त्यादिना किं कृत्यमित्यत आह **अलक्षणतेति** । अतिव्याप्त्यादियुतं पशुत्वादिकं नापारमार्थिकमिति ज्ञायते किन्त्वलक्षणमेवेति भावः ।

**वं०प०— तत्साध्यं** लक्षणसाध्यम् । **किञ्चास्मिन्पक्ष इति** । अपारमार्थिकस्यापि लक्षणस्य व्यवहारनिर्वाहकत्वमिति पक्ष इत्यर्थः । **इष्टसाधनत्वाच्चेति** । अनुपपत्तेरिति शेषः । **नापरमार्थतासाधक इति** । अपरमार्थताप्रयुक्तव्यवहारनिर्वाहकत्वाङ्गीकारेण त्वदिष्टत्वादित्यर्थः । तथा चातिव्याप्त्यादिदोषपरिहारोऽपि त्वया न कर्तव्यः स्यादिति भावः । दोषोऽपीत्यनन्तरं लक्षणस्येति वर्तते । ब्रह्मणि निर्धर्मकत्वाङ्गीकारा-दित्यर्थः । **तल्लक्षणे** ब्रह्मलक्षणे ।

**कं०रा०—** ननु सजातीयविजातीयव्यवच्छिन्नलक्ष्यप्रतीत्यादिरूपं लक्षणाभिधानप्रयोजनं किमपि न सम्भवतीत्यस्मदुक्तदोषेण भवदभिलषिता पारमार्थिकता बाध्यते अतः परस्य कुलीरस्येव स्वापत्ययुक्तिहतत्वं नेति शङ्कते **भवदभिलषितेति** । लक्षणाभिधानप्रयोजनासम्भवेन किं लक्षणस्यैव पारमार्थिकत्वं बाध्यते उत लक्ष्यस्येति विकल्प्य पक्षद्वयमपि क्रमेण दूषयति **किं लक्षणस्येत्यादिना । तथा हीति** । लक्षणाभिधाने प्रयोजनानुपपत्त्या लक्षणस्य पारमार्थिकत्वबाधने हि विमतं याथार्थ्यरूपप्रमाणलक्षणमपारमार्थिकं निष्प्रयोजना-भिधानकत्वाद्युक्तं स्यान्न च यन्निष्प्रयोजनाभिधानकं तदपारमार्थिकमिति व्याप्तिरस्मान्प्रति वक्तुं शक्या





निष्प्रयोजनाभिधानकानामपि बहूनामस्माभिः पारमार्थिकत्वस्याङ्गीकृतत्वादिति भावः । **तस्या इति** । अनुपपत्तेर्व्यवहारनिर्वाहरूपेण विरोधित्वादध्यासादिलक्षणपारमार्थिकत्वनिष्प्रयोजनाभिधोपयुक्तत्वेनेष्टसाधनत्वाच्च इत्यर्थः । **एतेनेति** । लक्षणानुपपत्तिरूपदोषो लक्षणस्यापारमार्थिकत्वसाधको नेत्युक्तन्यायेनातिव्याप्त्यादि-दोषोऽपि तादृशस्यापारमार्थिकत्वसाधको नेत्यर्थः । तर्ह्यतिव्याप्त्यादिदोषः किं साधक इत्यत आह **अलक्षणतेति** । ननु ब्रह्मणि लक्षणानुपपत्तेरभावेनानुपपद्यमानलक्षणकं त्वरूपहेतोरेव असत्त्वाव्यभिचार इत्यत आह **उक्ताया इति** । उक्ताया निष्प्रयोजनत्वरूपलक्षणानुपपत्तेर्ब्रह्मलक्षणेऽपि साम्यादनुपपद्यमानलक्षणकत्वरूप-हेतोर्ब्रह्मणि सत्त्वेन मिथ्यात्वरूपसाध्याभावेन व्यभिचार एवेति भावः ।

**श्रीनिधि०— अप्रयोजनाभिधानत्वादिति** । प्रयोजनाभिधानशून्यत्वादित्यर्थः । प्रयोजनस्य वक्तु-मशक्यत्वात् तृणादिदर्शने व्यभिचारादिति भावः । सर्वथा सर्वान् प्रति प्रयोजनाभिधानशून्यत्वं विवक्षितमिति चेदसिद्धेः ।

**शे०वा०—** अनुपपन्नानामपि व्यावहारिकत्वेऽनुपपन्नस्याप्यस्मदीयलक्षणस्य व्यवहारनिर्वाहकत्व-सम्भवादनुपपत्तिव्युत्पादनवैयर्थ्यमित्यभिप्रेत्याह **किञ्चेति** । नन्वनुपपत्तिव्युत्पादनेन व्यवहारो न निषिध्यते किन्त्वन्यदेवेति न तद्व्युत्पादनवैयर्थ्यमित्यत आह **न चेति** । तथा चानुपपत्तिव्युत्पादनवैयर्थ्यं तदवस्थमेवेति भावः । अनुपपत्तिव्युत्पादनस्य व्यवहारनिर्वाहकत्वानिषेधकत्वेऽपि न वैयर्थ्यं प्रयोजनान्तरसद्भावादिति शङ्कते **भवदिति** । दूषणसौकर्यार्थमाद्यं निष्कृष्य दर्शयति **तथा हीति** । **अप्रयोजनत्वेनेति** । अप्रयोजनमभिधानं यस्य तत्तथोक्तं तस्य भावस्तत्त्वं तस्मादित्यर्थः । **न चेति** । उदासीने तृणादावप्रयोजनाभिधानत्वसत्त्वेऽपि मिथ्यात्वस्य मन्मतेऽभावेन तत्र व्यभिचारादिति भावः । अप्रयोजनाभिधानत्वेऽप्यमिथ्यात्वे बाधकाभावान्नेयं व्याप्तिरभिधातुं शक्यत इति भाव इत्यप्याहुः । किञ्च यद्यनुपपत्त्या लक्षणस्य पारमार्थिकता बाध्यते इति मन्यसे तर्ह्यतिव्याप्त्यादिदोषोऽपि लक्षणस्य पारमार्थिकताबाधक एव स्यान्न तु लक्षणबाधकः । तथा च लक्षणस्य सत्यप्यतिव्याप्त्यादौ अलक्षणत्वाभावात् पारमार्थिकताभावस्य चेष्टत्वादतिव्याप्त्यादिपरिहारायासो व्यर्थः स्यादित्याह **एतेनेति** । एवञ्च नापरमार्थतेत्यत्रत्यस्य नञो लक्षणत्वसाधको न स्यादिति व्यवहितेनापि योग्यतयाऽन्वयो द्रष्टव्यः । यद्वा नन्वेवमतिव्याप्त्यादिदोषस्यापि लक्षणापारमार्थिकत्वसाधकत्वं न स्यादि-त्यतोऽतिव्याप्त्यादिदोषस्यापि मिथ्यात्वाविनाभावासम्मतेर्न लक्षणस्य मिथ्यात्वसाधकतेतीष्टापादनमेतदित्याह **एतेनेति** । अनुपपत्तिदोषस्य मिथ्यात्वासाधकत्ववर्णनेनेत्यर्थः । किं तर्हि अतिव्याप्त्यादिना कृतमित्यत आह **अलक्षणतेति** । अतिव्याप्त्यादिना पशुत्वादेर्नापारमार्थिकत्वं विज्ञायते किन्त्वलक्षणमेतदित्येव विज्ञायत इत्यलक्षणत्वसाधकत्वमेव तस्येति भावः ।

**वा०र०— परिहारायास इति** । अत्र तव इति शेषः । परिहारायासो व्यर्थः स्यादिति इष्टापादनयैतत् इति योजनाद्वयोपरूपता एतेनेति वाक्ययोजनाद्वये उक्तदोषद्वयं क्रमेणेति सूचितम् । **व्यवहितेनापीति** ।





अपिशब्दो व्यवहितत्वे कथमन्वय इति विरोधाभासालङ्काराय आनन्तर्यमकरणमिति वा उपपत्तिरिति परिहारः । व्यवहितान्वयेऽरुचिं मत्वा आह **यद्वेति** ।

**स०व्र०— एतेनेति** । दुष्टानामपि व्यवहारनिर्वाहहेतुत्वाङ्गीकारेणेत्यर्थः ।

**स०ना०—** निगमयति **एतेनेति** । तत्परिहारेणेत्यर्थः । अयं भावः । यदि अतिव्याप्त्यादिदोषः लक्षणस्य अपरमार्थतासाधकः स्यात् तर्हि त्वदीयलक्षणस्य त्वया अतिव्याप्त्यादिदोषो न परिहर्तव्यः स्यात् । परिह्रीयते च दोषः तस्मात् नासावपारमार्थिकताहेतुः । किन्त्वलक्षणतासाधक एव ।

**विठ्ठल०—** तथाप्यर्थक्रियाकारित्वासम्भवान्न भवदीयं लक्षणं साध्वित्यत आह **न चेति** । व्यवहार एव हि तत्साध्यं तच्च निर्वहिष्यतीति नोक्तानुपपत्तिरित्यर्थः । तथापि भवदभिमतपारमार्थिकत्वासिद्ध्या भवदीयं लक्षणमयुक्तमेव । उक्तरीत्या लक्षणकथनस्य प्रयोजनान्तरशून्यत्वादित्याशङ्क्यते **भवदिति** । **इत्याद्युक्तं स्यादिति** । दुर्ज्ञानत्वादिरादिशब्दार्थः । **न चास्येति** । निष्प्रयोजनकाकदन्तपरीक्षावाक्यस्यास्मन्मते पारमार्थिकत्वेन दृष्टान्ताभावादिति भावः । नन्वेवमतिव्याप्त्यादिदोषोऽपि लक्षणपारमार्थिकतासाधकोऽपि न स्यादित्यत आह **एतेनेति** । अध्यासादिलक्षणेऽनुपपत्तेरपरिहार्यत्वाय तेनेत्यर्थः । तथा चेष्टापत्तिरेवेति भावः । तर्ह्यतिव्याप्त्यादिदोषः किं साधक इत्यत आह **अलक्षणेति** ।

**७१ सु०— किञ्चाध्यासलक्षणमुपपन्नं न वा । आद्ये, सपक्षाप्रवेशः साधनस्य । द्वितीये, तदनुपपत्तिनिरासायासो व्यर्थः स्यात् । इत्यास्तां विस्तरः ॥**

**परि०— सपक्षाप्रवेशः साधनस्येति** । अनुपपद्यमानलक्षणत्वादिति साधनस्य मिथ्यात्वरूपसाध्यवति अध्यासमात्रेऽभावेनासाधारणानैकान्तिकतेति भावः ।

**यादु०— सपक्षाप्रवेश इति** । मिथ्याभूतेऽध्यासमात्रेऽनुपपद्यमानलक्षणत्वं नास्तीत्यङ्गीकारे हेतोः सपक्षाप्रवेशित्वेनासाधारण्यं स्यादिति भावः । ननु वैतण्डिकेन मया न लक्षणाद्यभिधानं समर्थनीयं, यत्तु सूत्रकारादिभिरुक्तं तत्पररीतिमाश्रित्यैव अतो न मम स्वव्याघात इत्यत आह **आस्तां विस्तर इति** । कथायामेवं परिहारस्य कथञ्चित्सम्भावितत्वेऽपि स्वस्य शिष्यस्य वा मोक्षोपयुक्तस्येतरव्यावृत्ततत्त्वावधारणस्यावश्यमपेक्षितत्वेन तदुपयुक्तं लक्षणं स्वरीत्यैवानुपपत्तिपरिहारेण सम्यग् व्यक्तम् । न हि दुष्टा पररीतिः स्वात्मतत्त्वज्ञानाय प्रभवति । अतिप्रसङ्गादिति भावः ।

**वं०प०— सपक्षाप्रवेश इति** । भ्रमस्यापि मिथ्यात्वाङ्गीकारान्मिथ्याभूतेऽप्यध्यासेऽनुपपन्नलक्षणवत्त्वाभावेनासाधारण्यमिति भावः । **तदिति** । तस्मिन्नध्यासलक्षणेऽनुपपन्नत्वापादकानामतिव्याप्त्याद्यनुपपत्तीनां दोषाणां निरासाय यत्नो व्यर्थ इति भावः ।





**कं०रा०— आद्य इति** । अध्यासलक्षणस्योपपन्नत्वेन निश्चितमिथ्यात्वरूपसाध्यवत्यध्यासेऽनुपपद्यमानलक्षणकत्वरूपसाधनस्याप्रवेशात् तथा चासाधारण्यमिति भावः ।

**शे०वा०— सपक्षाप्रवेश इति** । अध्यासलक्षणस्योपपन्नत्वाङ्गीकारे मिथ्याभूतेऽप्यध्यासेऽनुपपद्यमानलक्षणत्वाभावेन हेतोः सपक्षाप्रवेशित्वादसाधारण्यमिति भावः । ननु वैतण्डिकेन मया लक्षणाभिधानं न समर्थनीयम् । यत्तु सूत्रकारादिभिः शास्त्रे लक्षणस्य निबन्धनं तत्परीत्यैव अतो न मम स्वव्याघात इत्यत आह **आस्तां विस्तर इति** । कथायामेवंविधपरिहारस्य कथञ्चित्सम्भवेऽपि शिष्यादेर्मोक्षोपयोगित्वेन एतद्व्यावृत्त्यवधारणस्यावश्यकत्वात् तदुपयुक्तं लक्षणमप्यनुपपत्तिपरिहारेण स्वरीत्यैव सम्यग्वक्तव्यम् । न हि दुष्टा परीतिः स्वात्मतत्त्वज्ञानाय प्रभवति । अतिप्रसङ्गादिति भावः ।

**स०व्र०— सपक्षाप्रवेश इति** । अध्यासलक्षणमिथ्यात्वस्याङ्गीकृतत्वेन सपक्षत्वेऽपि तल्लक्षणस्योपपन्नत्वाङ्गीकारे अनुपपद्यमानलक्षणत्वरूपहेत्वभावादसाधारण्यमिति भावः ।

**विठ्ठल०— आद्ये सपक्षाप्रवेश इति** । अध्यासलक्षणस्योपपन्नत्वे पारमार्थिकत्वरूपसाध्यस्याध्यासेऽनुपपद्यमानलक्षणकत्वरूपसाधनस्याप्रवेशः । तथा च साधारण्यमिति भावः ।

**॥ इति तत्कारणत्वविकल्पोक्तविषयाणां दूषणम् ॥**
**॥ इति लक्षणस्य फलहेतुत्वे लक्षणावगतेः कारणत्वम् ॥**
**॥ इति निष्प्रयोजनत्वशङ्कानिरासः ॥**
**॥ इति लक्षणोक्तेः प्रयोजनम् ॥**

* * *

**॥ अथ प्रमाणसामान्यलक्षणस्य विवरणम् ॥**
**॥ अथ लक्षणघटकशब्दार्थकथनम्, एवशब्दसार्थकतया अस्य लक्षणस्य स्वरूपलक्षणत्वं न तु भिन्नलक्षणत्वम् ॥**

७२ **सु०— अर्थं नातिवर्तत इति यथार्थं, तस्य भावो याथार्थ्यं, तत् एव मानत्वं मानशब्दप्रवृत्तिनिमित्तं, मानलक्षणमिति यावत् ।**

यद्यपि सास्नादिमान्गौरितिवद्यथार्थं प्रमाणमित्युक्तेऽपि भवत्येव लक्ष्यलक्षणभावप्रतीतिः, तथाऽपि तद्वदेव लक्ष्यं लक्षणातिरिक्तं शङ्क्येत, ततश्च पृथङ्निरूप्यमपि स्यात्; तन्मा शङ्कीति **याथार्थ्यमेव मानत्वं** न तु सास्नादिमत्त्वाद् गोत्वमिव ततोऽतिरिक्तमित्युक्तम् ।





**परि०**— योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यरूपार्थचतुष्टयमध्येऽत्रानतिक्रमार्थको 'यथाऽसादृश्ये' इत्यव्ययीभावश्च समास इत्युपेत्याह **अर्थं नातिवर्तत इतीति** । उपाधिखण्डनटीकाव्याख्यानमन्दारमञ्जर्यां तु यथाशब्दस्य सादृश्यार्थत्वमुपेत्य यथा सादृश्यविशिष्ट एवार्थो यस्येति बहुव्रीह्याश्रयणेन यथार्थशब्दस्य यथार्था प्रतीतिरित्यभिधेयवल्लिङ्गं लोकसिद्धं सिद्धम् । अर्थमनतिक्रम्य वर्तत इत्यादिटीकाकारवचनं तु फलितप्रदर्शनपरतया व्याख्येयम् । ज्ञानार्थयोस्सत्तया सादृश्यकथने ज्ञानस्यार्थानतिक्रमस्यावश्यकत्वादित्युक्तम् । **लक्ष्यमिति** । लक्ष्यतावच्छेदकमित्यर्थः । **पृथङ्निरूप्यमपीति** । सास्नादिमत्त्वं विनापि गौरिति पृथगुक्तिवत् याथार्थ्यं विना मानमिति पृथक् वाच्यं स्यादित्यर्थः ।

**यादु०**— ननु धर्मिप्राधान्येनैव कुतो लक्षणं नाभिहितमित्याशङ्क्य धर्मप्राधान्येन तदभिधाने प्रयोजनमाह **यद्यपीत्यादिना** । **पृथङ्निरूप्यमपीति** । यथा सास्नादिमत्त्वं विहाय कदाचिच्छब्दादिना गोत्वेनापि गौः प्रतीयते तथा याथार्थ्यं विहाय मानत्वेन रूपेण मानं कदाचित्प्रतीयेत । न च तथा प्रतीयतेऽतो न लक्ष्यमेतल्लक्षणातिरिक्तमिति भावः । **तन्मा शङ्कीति** । यत्र लक्ष्यातिरिक्तं लक्षणं तत्र न धर्मप्राधान्येन तदुक्तिः सम्भवति । न हि गोत्वं सास्नादिमत्त्वमिति शक्यते वक्तुम् । तयोर्धर्मयोर्भिन्नत्वेन सामानाधिकरण्यव्यपदेशायोगात् । प्रवृत्तिनिमित्तरूपस्वरूपलक्षण एव तु धर्मप्राधान्येनोक्तिर्वानुपपन्ना । तत्र लक्ष्यतावच्छेदकलक्षणयोरभेदेनोक्तशङ्कानवकाशादिति भावः ।

**वं०प०**— ननु मूले याथार्थ्यमेवेत्येवकारः कुतः । न च याथार्थ्यं प्रामाण्यमित्युक्ते लक्ष्यलक्षणवैपरीत्यशङ्का तदर्थं याथार्थ्यमेव मानत्वमित्युच्यते । ततश्च याथार्थ्यस्य लक्षणत्वं मानत्वस्य लक्ष्यत्वं ज्ञापितं भवतीति वाच्यम् । एवकाराभावेऽपि तज्ज्ञापनसम्भवादित्याशङ्क्य समाधत्ते **यद्यपीत्यादिना** । **पृथक्** वाक्यान्तरेण । **निरूप्यं** लक्ष्यस्य मानत्वस्य याथार्थ्यरूपलक्षणानतिरिक्तत्वमिति शेषः । ततो याथार्थ्यान्मानत्वमतिरिक्तं नेत्यर्थः ।

**कं०रा०**— **तद्वदेवेति** । सास्नादिमान् गौरित्यत्र यथा लक्ष्यतावच्छेदकं गोत्वसास्नादिमत्वरूपलक्षणातिरिक्तं तथा मानत्वरूपलक्ष्यतावच्छेदकं याथार्थ्यरूपलक्षणातिरिक्तं शङ्क्येत ततश्च मानत्वं **पृथङ्निरूप्यमपि स्यात् तन्मा शङ्कीति याथार्थ्यमेव मानत्वं न तु सास्नादिमत्वाद् गोत्वमिव ततोऽतिरिक्त**मित्युक्तमित्यर्थः ।

**शे०वा०**— लक्षणप्रणयनस्यानर्थक्यनिरासानन्तरमेव तद्व्याख्यानावसर इत्यतोऽर्थवत्तामुपपाद्येदानीं लक्षणवाक्यं व्याचष्टे **अर्थमिति** । यथाशब्दस्य योग्यताद्यनेकार्थत्वेऽपि वक्ष्यमाणरीत्या तदसम्भवात्





पदार्थानतिवृत्त्यर्थत्वमेव सिद्धवत्कृत्यैवं व्याख्यातमिति ध्येयम् । याथार्थ्यमेवेति सावधारणभावनिर्देशस्य वैयर्थ्यमाशङ्क्य परिहरति **यद्यपीति** । **लक्ष्यमिति** । लक्ष्यतावच्छेदकमित्यर्थः । **पृथगिति** । सास्नादिमत्त्वाद्गोत्वस्य पृथङ्निरूपणीयत्वदर्शनाद्याथार्थ्यलक्षणात्प्रमाणत्वरूपलक्ष्यतावच्छेदकस्य पृथङ्निरूपणीयत्वं स्यादित्यर्थः । **तन्मा शङ्कीतीति** । यत्र लक्ष्यतावच्छेदकातिरिक्तं लक्षणं तत्र न धर्मनिर्देशः सम्भवति । न हि सास्नादिमत्त्वं गोत्वमिति शक्यते वक्तुम् । तयोर्धर्मयोर्भिन्नत्वेनोक्तरीत्या सामानाधिकरण्यव्यपदेशस्य बाधितत्वात् । प्रवृत्तिनिमित्तस्वरूपलक्षणे तु धर्मप्राधान्येन निर्देशो युज्यते । तत्र लक्ष्यतावच्छेदकलक्षणयोरभेदेन सामानाधिकरण्यव्यपदेशस्योपपन्नत्वादिति भावः ।

**वा०र०— पृथङ्निरूपणीयत्वेति** । सास्नादिमत्वस्य गोशब्दान्तर्भावाभावेन गोत्वापेक्षया पृथङ्निरूप्यत्वमिति भावः । **प्रमाणरूपेति** । याथार्थ्यस्य प्रमाणपदार्थान्तर्भूततया याथार्थ्यपेक्षया प्रमाणत्वस्य पृथङ्निरूप्यत्वाभावः । व्यवहारमात्रकारणं भवतीत्येतन्मूलव्याख्यावसरे लक्ष्यपरपदार्थान्तर्गतत्वतदनन्तर्गतत्वयोरेव लक्ष्यानतिरिक्तत्वं तदतिरिक्तत्वपदार्थत्वेन विवक्षादेरुक्तत्वात् तदनुसारेणेदं उपपाद्यमिति ज्ञेयम् । **उपपन्नत्वादिति भाव इति** । ननु एतावता धर्मयोः सामानाधिकरणव्यपदेशस्य लक्ष्यतावच्छेदकलक्षणयोः अभेदसाधकत्वमुक्तं भवति । तावता भावप्रत्ययसार्थक्येऽपि अवधारणवैयर्थ्यमिति चेत् । न । अभेदे सिद्धेऽपि भेदस्य निषेधार्थं अवधारणसार्थक्यात् । न चाभेदमात्रोक्त्या भेदनिषेधोऽपि सिद्ध इति वाच्यम् । अर्थतः सिद्धावपि वचनतः सिद्धेरभावेन तदर्थे तस्य सार्थकत्वात् इत्याशयात् ।

**स०व्र०—** वक्ष्यमाणानुसारेण यथाशब्दस्य सादृश्याद्यर्थकत्वे बाधकस्य विद्यमानत्वेन अनतिक्रमार्थकत्वमेवाङ्गीकर्तव्यमिति सिद्धवत्कृत्याह **अर्थं नातिवर्तत इतीति** । 'याथार्थ्यमेव मानत्वम्' इत्यत्र भावप्रत्ययो व्यर्थः । किन्तु यथार्थमेव मानत्वमित्येवास्त्वित्यभिप्रेत्य शङ्कते **यद्यपीति** । उत्तरमाह **तथाऽपीति** । **पृथङ्निरूप्यमपीति** । यथा सास्नादिमत्त्वापेक्षया गोत्वं नाम जातिरिति पृथङ् निरूप्यते एवं याथार्थ्यपेक्षया मानत्वं नाम किमित्युक्ते तन्निर्वक्तव्यं स्यादित्यर्थः ।

**विठ्ठल०—** अत्र यथाशब्दः पदार्थानतिवृत्त्यर्थकः । अव्ययीभावश्च समास इत्यभिप्रेत्याह **अर्थं नातिवर्तत इति** । **तद्वदेवेति** । यथा सास्नादिमान् गौरित्यतः यथा लक्ष्यतावच्छेदकं गोत्वलक्षणातिरिक्तं तद्वदेवेत्यर्थः । **पृथङ्निरूप्यमपीति** । सास्नादिमत्वं विना गौरिति पृथगुक्तिवद्याथार्थ्यं विना मानमिति पृथग्वाच्यं स्यात् । सास्नादिमत्वरूपधर्मातिरेकेण गोत्वं लक्ष्यतावच्छेदकं यथा पृथगुच्यते । तथा यथावस्थितार्थविषयीकारित्वातिरिक्तं लक्ष्यतावच्छेदकं धर्मान्तरमस्ति प्रमाणत्वे स्यात् तन्मात्रत्वादित्यभिप्रायः ।

**चषकः—** लक्षणप्रणयनानर्थक्यप्रतिविधानानन्तरमेव लक्षणवाक्यव्याख्यानौचितीति तदर्थवत्तामुपपाद्य सम्प्रति योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यरूपार्थचतुष्टयमध्येऽनतिक्रमार्थको यथाशब्दो 'यथा असादृश्ये'





इत्यव्ययीभावसमास इत्युपेत्य तद्वाक्यं व्याकुरुते **अर्थमिति** । उपाधिखण्डनटीकाव्याख्यानमन्दारमञ्जर्यां तु तथा यथाशब्दस्य सादृश्यार्थत्वमुपेत्य यथा सादृश्यविशिष्ट एवार्थो यस्येति बहुव्रीह्याश्रयणेन यथार्थः शब्दः यथार्था प्रतीतिरित्यभिधेयवल्लिङ्गं लोकसिद्धं सिद्धं अर्थमनतिक्रम्य वर्तत इत्यादि टीकाकारवचनं तु फलितदर्शनपरतया व्याख्येयम् । ज्ञानार्थयोः सादृश्यकथने ज्ञानस्यार्थानतिक्रमस्य आवश्यकत्वादित्युक्तम् । **लक्ष्यमिति** । लक्ष्यतावच्छेदकमित्यर्थः । **पृथङ्निरूप्यमिति** । यथा सास्नादिमत्ताप्रत्यापकपदासमभिव्याहारेऽपि गोपदादिना गोत्वेन गौः प्रतीयते तथा याथार्थ्याभिधायकपदासमभिव्याहारे मानत्वेन न प्रतीयत इति । लक्ष्यतावच्छेदकं न लक्षणातिरिक्तमित्यर्थः ।

**॥ इति लक्षणघटकशब्दार्थकथनम्, एवशब्दसार्थकतया अस्य लक्षणस्य स्वरूपलक्षणत्वं न तु भिन्नलक्षणत्वम् ॥**

* * *

**॥ अथ लक्षणस्य लक्षणम् ॥**

**॥ अथ लक्षणम्, तदङ्गतया लक्ष्यशब्दार्थश्च ॥**

**७३ सु०— ननु किमिदं लक्षणं नाम । लक्ष्यस्यासाधारणो धर्मः; यावत्स्वेकः शब्दो निवेशयितुमिष्टः, यावन्ति चेतरस्माद्व्यावर्तनीयानि तान्युच्यन्ते लक्ष्याणीति ।**

**परि०—** लक्षणं हि ज्ञातमेव लक्ष्यावधारणस्येष्टे । तज्ज्ञानं च लक्षणाधीनमिति भावेन पृच्छति **ननु किमिदमिति** । किं लक्ष्यमित्यतो व्यवहारव्यावृत्तिरूपलक्षणप्रयोजनद्वयानुरोधेन लक्ष्यस्य च लक्षणद्वयमाह **यावत्स्विति** । **निवेशयितुं** व्युत्पादयितुम् ।

**यादु०— निवेशयितुमिति** । व्यवहर्तुमित्यर्थः ।

**कं०रा०—** लक्ष्यस्यासाधारणो धर्मो लक्षणमिति लक्षणं लक्षणज्ञानस्य लक्ष्यज्ञानं विनानुपपत्ते-र्लक्ष्यलक्षणमाह **यावत्स्विति** । यावत्स्वेकशब्दो वाचकत्वेन निवेशयितुमिष्टस्तानि लक्ष्याणीत्युच्यन्ते यावन्तीतरेभ्यो व्यावर्तनीयानि तानि चालक्ष्याणीत्युच्यत इति लक्ष्यस्य लक्षणद्वये तात्पर्यमेकलक्षणत्वे वैयर्थ्यप्रसङ्गादिति ध्येयम् ।

**शे०वा०—** याथार्थस्य प्रमाणलक्षणत्वं मूलारूढं कर्तुं 'मानत्वं मानशब्दस्य प्रवृत्तिनिमित्तं मानलक्षणमिति यावदि'ति व्याख्यातम् । तच्च लक्षणनिरूपणसापेक्षमित्यतो लक्षणलक्षणं पृच्छति **नन्विति** । धर्ममात्रस्य वा तद्धर्ममात्रस्य वाऽतिव्यापकत्वेन तल्लक्षणत्वानुपपत्तेरिति भावः । परिहरति **लक्ष्येति** । अत्र





यद्यपि यो यस्यासाधारणो धर्मः स तस्य लक्षणमित्येव वक्तुं युक्तं न तु लक्ष्यत्वमपि तत्र निवेश्यं व्यर्थत्वात् । तथाऽपि प्रसङ्गाल्लक्ष्यस्यापि स्वरूपनिरूपणाय तदन्तर्भाविनेदं लक्षणाभिधानम् । यथा निर्दोषं वाक्यमागम इत्यागमलक्षणे प्रसङ्गाद्वाक्यस्यापि स्वरूपनिरूपणार्थमेव वाक्यान्तर्भाविन आगमलक्षणाभिधानमिति द्रष्टव्यम् । वक्ष्यमाणाव्याप्त्यादिशङ्कानिरासार्थं लक्ष्यस्वरूपनिरूपणमप्यावश्यकमेवेति तदन्तर्भाविन लक्षणाभिधानम् । अत एव वक्ष्यति तच्च लक्ष्यस्य धर्म इत्युक्तमेवेतीत्यप्याहुः । असाधारणपदं शृङ्गित्वे प्रसङ्गवारणाय । तस्य लक्ष्यधर्मत्वेऽप्यसाधारण्याभावात् । अन्ये तु शृङ्गित्वेन महिष्यादिसाधारणेन गोमात्रस्यान्यतो व्यावर्तयितुमयोग्यतया तस्य तत्प्रति अलक्ष्यत्वादेव तत्रातिव्याप्तिपरिहारात् तद्वैयर्थ्यमित्याशङ्क्य अन्यसाधारणेन तेन गोमात्रस्यान्यतो व्यावर्तयितुमयोग्यत्वेऽपि, तद्योग्यत्वस्य लक्ष्यपदार्थत्वाभावात् तत्त्वेनेष्टत्वस्यैव च तच्छब्दार्थत्वेन विवक्षितत्वात् शृङ्गित्वेन गोमात्रस्येतरस्माद्व्यावृत्तेश्च कदाचिदिष्टत्वेन तत्राप्युक्तरूपलक्ष्यतासद्भावेन तदनिवारणेनासाधारणपदस्यावश्यकत्वादित्यभिप्राय इत्यप्याहुः । किं तल्लक्ष्यं यस्यासाधारणो धर्मो लक्षणमित्युच्यत इत्यतो लक्षणप्रयोजनद्वैविध्यानुरोधेन प्रयोजनद्वयघटितं लक्ष्यस्य लक्षणमाह **यावत्स्वित्यादिना** । अन्यव्यावृत्तिशब्दवाच्यत्वान्यतरबुद्ध्युत्पादनेच्छाविशेष्यमित्यर्थः । अन्यथा परस्पराव्याप्तिप्रसङ्गादिति बोध्यम् ।

**वा०र०— लक्षणलक्षणं पृच्छतीति** । लक्षणलक्षणं वक्तुं तत् पृच्छतीत्यर्थः । अतिव्यापकत्वेनेत्युपलक्षणम् । असम्भावित्वेनेत्यपि द्रष्टव्यम् । एकशफत्वादिधर्मानुसारात् । प्रश्नवाक्यस्थं लक्षणपदं अत्र गृहीत्वा लक्ष्यस्यासाधारणः धर्मः तस्य लक्षणमिति विशिष्टार्थासिद्धिमभिप्रेत्य तत्र लक्ष्यपदवैयर्थ्यमाशङ्कते **अत्र यद्यपीति । अन्ये तु शृङ्गित्वेनेति** । अयं शङ्काशयः । लक्ष्यशब्दो हि सम्बन्धिशब्दः । तथा शृङ्गित्वं लक्ष्यस्य धर्मः इति यदा व्युत्पाद्यं तदा शृङ्गित्वस्य लक्ष्यं गोत्वावच्छिन्नमिति वाच्यम् । अन्यथा लक्ष्यादन्यत्रापि सत्त्वेनातिव्याप्तिः अस्येति यदुच्यते तदनुपपत्तिप्रसङ्गात् । लक्ष्यं च तदेव तस्य भवति यत् येन धर्मेणान्यतो व्यावर्तयितुं योग्यम् । न च महिष्यादिसाधारण्येन शृङ्गित्वेन गोमात्रं अन्यतो व्यावर्तयितुं योग्यम् । तथा च गोमात्रस्य शृङ्गित्वं प्रति अलक्ष्यतया लक्ष्यधर्मत्वं शृङ्गित्वे नास्तीति न तत्रातिव्याप्तिरिति तत्परिहाराय असाधारणपदोपादानं न कर्तव्यमिति । **तद्वैयर्थ्यमिति** । साधारणपदेन बुद्ध्या च सन्निधापितमसाधारणपदं तत इति परामृश्यते । वक्ष्यति च **असाधारणपदस्येति । तत्त्वेन इष्टत्वस्येति** । तेनान्यतो व्यावर्तनीयत्वेन इष्टस्यैवेत्यर्थः । **तेन तदनिवारणेति** । लक्ष्यस्य धर्मः इत्यनेन शृङ्गित्वस्य निवारणाभावेनेत्यर्थः ।

**स०व्र०—** यदि किञ्चिल्लक्षणं वदिष्यति तर्हि अव्याप्त्यादिकं वदिष्यामीति गूढाभिसन्धिश्शङ्कते **नन्विति** । यद्यव्याप्तिं वदिष्यति तर्हि तस्या दोषत्वमेव नास्तीति उपपादयिष्यामीति गूढाभिसन्धिरेवाह **लक्ष्यस्येति** । अत्र यद्यपि यो यस्यासाधारणो धर्मः स तस्य लक्षणमित्येवाभिप्रेतं न तु लक्ष्यत्वमपि निवेश्यम् । व्यर्थत्वात् । तथापि प्रसङ्गाल्लक्ष्यस्यापि स्वरूपनिरूपणाय तस्य प्रवेशः । निर्दोषं वाक्यमिति

आगमलक्षणे वाक्यग्रहणवदिति द्रष्टव्यम् । असाधारणपदं शृङ्गित्वे अतिप्रसङ्गनिरासाय । धर्म इत्यनेनासम्भवो निराकृतः । **यावत्स्वेक इति** । लक्षणप्रयोजनद्वयानुसारेण लक्ष्यस्य लक्षणद्वयमुक्तमिति द्रष्टव्यम् ।

**विठ्ठल०**— लक्षणं हि ज्ञातमेव लक्ष्यावधारणस्येष्टे । अतो लक्षणस्य लक्षणं वक्तव्यमित्याशयेन पृच्छति **ननु किमिदमिति** । किं तल्लक्ष्यं यद् साधारणं धर्मत्वं लक्षणलक्षणं स्यादित्यतः व्यवहारव्यावृत्तिरूपप्रयोजनानुरोधेन लक्ष्यस्य लक्षणमाह **यावत्स्विति** ।

**॥ इति लक्षणम्, तदङ्गतया लक्ष्यशब्दार्थश्च ॥**

* * *

**॥ अथ 'अव्यापकस्यापि लक्षण'त्वे आपादितस्य अनिष्टस्य परिहारः ॥**

**॥ अथ तदानीं लिलक्षयिषितमात्रव्यापित्वं लक्षणस्यापेक्षितम् ॥**

**७४ सु०— नन्वसाधार(णो)णधर्मश्चेल्लक्षणम्, अव्यापकस्यापि तदा लक्षणतापत्तिः; अतिव्याप्त्यसम्भवाविव अव्याप्तिरपि हि लक्षणदोषः । उच्यते । लिङ्गतया हि लक्षणमुपयुज्यते । न च व्यापकता लिङ्गत्वोपयोगिनी, व्याप्यत्वेनैव तदुपपत्तेः, इतरथा धूमादीनामलिङ्गतापातात्; किन्नाम पक्षीकृतदृष्टान्तीकृतव्यापकता त्वपेक्षितैव, उपायत्वेनोपन्यस्तस्याभावे तदुपेयप्राप्तेरसम्भवात्, उभयधर्मभूताया व्याप्तेरन्यतराभावे दर्शयितुमशक्यत्वात् । तथा च तदानीं लिलक्षयिषितमात्रव्यापित्वं लक्षणस्यापेक्षितम्, तच्च लक्ष्यस्य धर्म इत्युक्तमेव ।**

**परि०**— अस्तु लक्षणतेत्यत आह **अतिव्याप्तीति** । **व्यापकतेति** । इतरभेदादिसाध्यव्यापकतेत्यर्थः । **अलिङ्गतापातादिति** । धूमादीनां वह्निं प्रत्यव्यापकत्वादिति भावः । **व्यापकता त्विति** । विद्यमानता त्वित्यर्थः । पक्षे सत्ता कुत इत्यत आह **उपायत्वेनेति** । दृष्टान्ते सत्त्वस्योपयोगमाह **उभयधर्मेति** । एवं तर्हि लिलक्षयिषितमात्रव्यापित्वे सति लक्ष्यस्यासाधारणो धर्मो लक्षणमिति वक्तव्यमित्यतो नेत्याह **तच्चेति** । लिलक्षयिषितमात्रव्यापित्वं लक्ष्यस्य धर्म इति पदद्वयेनोक्तमेवेत्यर्थः । लक्ष्यशब्देन लिलक्षयिषितत्वस्य धर्मशब्देन व्यापित्वस्य प्राप्तेरिति भावः ।

**यादु०**— इष्टापत्तिं परिहरति **अतिव्याप्त्यसम्भवाविति** । **व्यापकतेति** । इतरभेदादिरूपसाध्यनिरूपितेति शेषः । **व्यापकता त्विति** । व्यापित्वं त्वित्यर्थः । **तच्च** पक्षीकृतमपेक्ष्यैव । दृष्टान्तीकृते तु वृत्तिमात्रं





विवक्षितमिति ध्येयम् । पक्षीकृतव्यापकता लक्षणरूपहेतोरपेक्षितेत्येतदुपपादयति **उपायत्वेनेति** । हेतुत्वेनोपन्यस्तस्य पक्षधर्मत्वाभावे तदुपेयस्य तत्साध्यस्यापि न सिद्ध्यतीत्यर्थः । दृष्टान्तीकृतवृत्तिताऽपेक्षितेत्येतदुपपादयति **उभयधर्मेति** । यद्यपि व्याप्तिः साधनस्यैव धर्मो न साध्यस्य तथाऽपि साधनाश्रितायाः तस्याः साध्यनिरूपितत्वेनोभयधर्मत्वव्यपदेश औपचारिक इति ध्येयम् । **तदानीमिति** । तदानीं लिलक्षयिषितं च, यावत्सु शबलत्वं वर्तते तावद्दृष्टान्तीकृतं चेति भावः । नन्वेवमपि लिलक्षयिषितमात्रव्यापित्वरहितमपि लक्ष्यासाधारणधर्मभूतं लक्षणं स्यादित्यत आह **तच्चेति** । तदानीं लिलक्षयिषितमात्रव्यापित्वं च 'लक्ष्यस्य धर्म' इति लक्षणलक्षणान्तर्गतेन पदद्वयेनोक्तमेवेत्यर्थः । 'यावत्स्वेकः शब्दो निवेशयितुमिष्ट' इति लक्ष्यशब्दार्थस्योक्तत्वेन लक्ष्यशब्देन तदानीं लिलक्षयिषितस्य षष्ठ्युत्तरधर्मपदेन च तन्मात्रव्यापित्वस्य लाभेन, न लक्षणलक्षणस्योक्तधर्मेऽतिव्याप्तिशङ्केति भावः ।

**वं०प०**— लक्ष्यस्यासाधारणो धर्म इत्युक्त्या सर्वलक्ष्यसाधारणो यो धर्मो न भवति स लक्षणमित्युक्तं स्यात् । तत्र शङ्कते **नन्वसाधारण इति** । **इतरथा** व्यापकताया लिङ्गत्वोपयोगित्वे । व्यापकतैवापेक्षितेत्यन्वयः । **उभयेति** । साध्यहेत्विर्थः । **अन्यतराभावे** साध्यहेतोरन्यतरस्य दृष्टान्तेऽभाव इत्यर्थः ।

**कं०रा०**— अव्यापकस्य धर्मस्य लक्षणत्वमिष्टमित्यत आह **अतिव्याप्त्यसम्भवाविति** । **इतरथेति** । व्यापकत्वस्य लिङ्गत्वोपयोगित्वे धूमादीनां वह्न्यादिकं प्रति व्यापकत्वाभावेनालिङ्गत्वापातादित्यर्थः । पक्षीकृतव्यक्तिव्यापकत्वं लिङ्गतायामपेक्षितमित्येतदुपपादयति **उपायत्वेनेति** । उपायत्वेनोपन्यस्तस्य लिङ्गस्य पक्षीकृतव्यक्तावभावे तेन लिङ्गेन ज्ञेयस्य साध्यस्य सिद्धेन सम्भवादित्यर्थः । दृष्टान्तीकृतव्यक्तिव्यापकत्वं लिङ्गतायामपेक्षितमित्येतदुपपादयति **उभयेति** । साध्यसाधननिरूप्यायाः व्याप्तेर्दृष्टान्तव्यक्तावन्यतरस्याभावे निदर्शयितुमशक्यत्वादित्यर्थः । **तच्चेति** । लक्षणस्य लिलक्षयिषितमात्रव्याप्तत्वं लक्ष्यस्य धर्म इत्यनेनोक्तमेवेत्यर्थः ।

**श्रीनिधि०**— लक्षणतापत्तिरित्युक्तं नष्टमिति वक्तुं शक्यमित्याह **अतिव्याप्त्यसम्भवाविवेति** । **उपायत्वेन** ज्ञापकत्वेन । **उपेयस्य** ज्ञाप्यस्य । **उभयधर्मभूताया इति** । साध्यसाधनोभयधर्मभूताया इत्यर्थः । अत्रोभयधर्मत्वं उभयनिरूप्यत्वेन अन्यतराभावे साध्यसाधनयोरन्यतराभावे तथा च साध्यवत् साधनस्यापि पक्षीकृतदृष्टान्तीकृतव्यापकता अपेक्षितेत्युक्तं भवति । अनेन उपनायकत्वेन उपन्यस्तस्याभाव इत्यनेन पक्षीकृते व्यापकतया आवश्यकत्वे हेतुरुक्तः । **उभयधर्मभूताया** इत्यनेन दृष्टान्तीकृतव्यापकताया आवश्यकत्व इति ज्ञेयम् । लक्ष्यसाधारणधर्म । **इत्युक्तमेवेति** इत्यनेनोक्तमित्यर्थः ।

**शे०वा०**— ननु लक्ष्यस्य धर्म इत्यनेनासम्भवस्यासाधारण इत्यनेनातिव्याप्तेश्च व्यावर्तितत्वेनोक्तलक्षणस्य असम्भव्यतिव्याप्तिव्यावृत्तौ सिद्धायामप्यव्याप्तिवारकपदाभावेनोक्तलक्षणस्य अव्यापकव्यावृत्त्यसिद्ध्या





तत्रातिव्यापकं लक्षणलक्षणमिति शङ्कते **नन्विति** । लक्षणतया तल्लक्ष्यत्वादेव न तत्रातिव्याप्तिरित्यतोऽतिव्याप्त्यसम्भवयोरिवाव्याप्तेरपि लक्षणदोषत्वान्न लक्षणतया लक्ष्यत्वमित्यतिव्याप्तिर्वज्रलेपायितैवेत्याह **अतिव्याप्त्यसम्भवाविवेति** । तथा चातिव्याप्त्यादिपरिहारायासाधारणधर्म इति विशेषणं यथोपादीयते तथाऽव्यापके शबलत्वादावतिप्रसङ्गपरिहाराय यावल्लक्ष्यासाधारणो धर्म इति वा लक्ष्यव्यापकधर्म इति वा तल्लक्षणं वक्तव्यमिति नोक्तं लक्षणलक्षणमनुपपन्नमिति भावः । लक्षणस्य लिङ्गतयोपयोगित्वेन साध्यव्याप्यताया लिङ्गत्वोपयोगेन आवश्यकत्वेऽपि तद्व्यापकताया अनावश्यकत्वान्न व्यापकत्वाभावो दोषायेति परिहरति **उच्यत इति** । साध्यव्यापकताया लिङ्गत्वोपयोगित्वे बाधकमाह **इतरथेति** । अग्निमति पर्वते महानसे वा धूमस्य सत्त्वेऽप्यग्निमत्ययोगोलके तदभावेन वह्न्यव्यापकत्वादिति भावः । ननु साध्यव्यापकताया लिङ्गत्वानुपयोगित्वात् तद्व्याप्यतामात्रेणैव लिङ्गत्वाभ्युपगमे निर्धूमपक्षदृष्टान्तकधूमवत्त्वस्यापि लिङ्गत्वं स्यादित्याशयेन शङ्कते **किन्नामेति** । न च व्यापकता लिङ्गतोपयोगिनीति न व्यापकतामात्रस्य लिङ्गत्वोपयोगो निषिध्यते येनोक्तातिप्रसङ्गः स्यात् । किन्तु साध्यव्यापकताया एव । पक्षीकृतदृष्टान्तीकृतव्यक्तिव्यक्तिव्यापकतायास्तूपयोगोऽभ्युपगम्यत एव । ततश्च तदभावान्नोक्तातिप्रसङ्ग इत्याशयेन परिहरति **पक्षीकृतेति** । **व्यापकता त्विति** । व्यापित्वमित्यर्थः । तत्कुत इत्यतस्तदुभयं क्रमेणोपपादयति **उपायत्वेनेत्यादिना** । यद्यपि व्याप्तिः साधनस्यैव धर्मो न साध्यस्य तथाऽपि साधनाश्रिताया अपि तस्याः साध्यनिरूपितत्वेन तद्धर्मत्वव्यपदेश औपचारिक इति द्रष्टव्यम् । यदर्थं लक्षणस्य लिङ्गतयोपयोगित्ववर्णनं यदर्थं च लिङ्गत्वोपयोगिरूपावधारणं तदिदानीमाह **तथा चेति** । ननु तदानीं लिलक्षयिषितमात्रव्यापित्वस्य लक्षणापेक्षितरूपस्य लक्षणलक्षणे प्रत्यायकपदाभावात् कथमनेवंरूपस्यालक्षणस्यानेन व्यावृत्तिरित्यतस्तस्य लक्ष्यस्य धर्म इत्यनेनैवोक्तत्वाद्युक्ता तेनानेवंरूपस्य व्यावृत्तिरित्याह **तच्चेति** । तदानीं लिलक्षयिषितमात्रव्यापित्वं चेत्यर्थः । ततश्च तदानीं लिलक्षयिषितमात्रव्यापित्वेन शबलत्वस्यापि लक्षणत्वेन लक्ष्यत्वान्न तत्रातिव्याप्तिरिति भावः । इदं च लिलक्षयिषितमात्रव्यापित्वस्य लक्ष्यस्य धर्म इत्यनेनोक्तत्ववचनं लक्ष्यस्य धर्म इत्यनेन लिलक्षयिषितव्यापित्वस्योक्तत्वान्न व्यापकतालाभार्थं लक्षणलक्षणे पृथक् व्यापकतापदापेक्षेत्यभिप्रेत्यैव । न तु लक्ष्यस्य धर्म इत्यनेनैव तदानीं लिलक्षयिषितमात्रव्यापित्वस्याप्युक्तत्वाभिप्रायेण । लक्ष्यपदेन तदानीं लिलक्षयिषितत्वस्य षष्ठ्युत्तरधर्मपदेन च तद्व्यापित्वस्य कथञ्चिदुक्ततालाभेऽपि मात्रार्थस्य तेनानुक्त्या लक्षणलक्षणान्तर्गतपदद्वयेन लिलक्षयिषितमात्रव्यापिताया अनुक्तेः । उक्तौ चात्रासाधारणपदस्यान्यत्र च न वर्तते चान्यत्रेत्यस्य वैयर्थ्यापातात् । न चैवं सति यो धर्मो लक्ष्ये व्याप्त्या वर्तत इत्यादौ व्याप्त्येति विशेषणवैयर्थ्यं स्यात् । तत्रापि यो धर्मो लक्ष्ये वर्तत इत्येतावतैव तदानीं लिलक्षयिषितव्याप्तित्वलाभसम्भवादिति वाच्यम् । तत्रापि लिलक्षयिषितमात्रव्यापित्वस्यैव विशिष्टलक्षणार्थत्वेनाभिप्रेतार्थत्वादिति ध्येयम् ।

**वा०र०— लक्ष्यधर्मः इत्यनेनासम्भवस्येति** । असाधारण इत्येवोक्ते सास्नादिमत्वस्य महिष्याद्यसाधारणत्वाभावात् असम्भवः । **तद्व्यावृत्त्यर्थं लक्ष्यस्य धर्म इति** । ततश्च महिष्याद्यसाधारणत्वाभावेऽपि





दारुणोर्गम्यादिकर्मत्वं येन ग्रामदारुणी गम्यच्छेद्ये स्याताम् । न चात्र गत्यादिनिर्वर्त्यं विकार्यं वा किञ्चिद् दृश्यते यद्गम्यादि स्यात् । ततो गत्यादेरपि गम्याद्यतिक्रम्यवृत्तेर्न तत्रातिव्याप्तिरित्यतो नोक्तरूपेण द्विविधमेव कर्म किन्तु प्राप्यान्तर्भावेन त्रिविधम् । 'निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतमि'ति हरिणोक्तेः । 'क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते' इति तल्लक्षणम् । तद्यथा आदित्यं पश्यति हरिं भजतीत्यादि । तत्र रज्जुं सृजति काष्ठं दहतीत्यादौ प्रत्यक्षेणेव देवदत्तं रोषयतीत्यादौ च सुखवैक्लव्यादिकार्यानुमानेनैव च नात्र प्रत्यक्षेणानुमानेन वा क्रियाकृतः कश्चिदतिशयो दृश्यत इत्यादित्यादेः प्राप्यत्वमेव । तथा च ग्रामादेराद्यप्रकारद्वयाभावेऽप्यादित्यादिवत् तृतीयप्रकाराक्रान्तत्वाद्युक्तं ग्रामादेरपि गत्यादिकर्मत्वमिति न गम्याद्यतिक्रमो गत्यादेरित्यतिव्याप्तिरेवेत्याशयेनाह **यदेवेति** ।

**वा०र०**— कर्मणि द्वितीया इत्येतत्सूत्रीय प्रेप्सिततमं कर्म इति त्रिविधं इत्यादिशेष्यनुसारेण कर्मद्वैविध्ये ग्रामदारुणोः कर्मत्वाभावमाशङ्क्य तत्त्रैविध्याश्रयणेन कर्मतां समर्थयते । **ननु कर्मानेकविध-मित्यादिना** । द्विविधमित्यर्थः । **यदसज्जायत इति** । यत् असज्जायते तत् निवर्त्यमिति न्यायमतानुसारेण । यत् सदेव जन्मना प्रकाशते तद्वा निवर्त्यं इति साङ्ख्यमतानुसारेण । **प्रकृतीति** । प्रकृते प्रकृतिभूतस्य आत्मना उच्छेदं सम्भूतं प्राप्तमित्यर्थः । **यथा कटमिति** । कटस्यासतो जायमानत्वेन निवर्त्यत्वमिति भस्मकुण्डलयोरिति वक्ष्यमाणरीत्या सुज्ञेयमिति वा स्पष्टमिति अतो वा नोक्तम् । काष्टवत् भस्मनोऽपि कर्मत्वात् सुवर्णवत् कुण्डलस्यापि कर्मतया चतुर्णामपि विकार्यत्वमिति भ्रान्तिनिरासायाह **तत्रासतोरिति** । **तदिह इति** । यतो निवर्त्यविकार्यभेदात् द्विविधमेव कर्म । ग्रामदारुणोश्च निवर्त्यत्वविकारत्वलक्षणरूपद्वयाभावात् नोभयथापि कर्मतासम्भवः । तस्मात् कथं गति छेदनकर्मत्वमित्यर्थः । **गम्यच्छेद्ये इति** । गम्यच्छेद्यत्वयोः गतिकर्मत्व-छिदाकर्मत्वरूपत्वादिति भावः । **प्रत्यक्षेणेवेति** । दृश्यत इति वक्ष्यमाणमत्रापि सम्बध्यते । एवमनुमानेनैव चेत्यत्रापि । अत्र मुखवैकृत्यादीति पाठः । विकृतिरेव वैकृत्यम् । स्वार्थे ष्यञ्प्रत्ययः । मुखविकासादि-कार्यलिङ्गकानुमानेन इत्यर्थः ।

**स०व्र०**— अतिव्याप्तेरित्युक्तामतिव्याप्तिमेव स्पष्टयति **एतच्चेति** । ननु गम्यस्य गमनं प्रति छेद्यस्य छिदां प्रति विषयत्वस्यैवाभावेन कथं गमनादेर्विषयाव्यभिचारित्वमित्यत आह **यदेव हीति** ।

**विठ्ठल०**— अतिव्याप्तिरिति प्राक्प्रतिज्ञातातिव्याप्तिमिदानीं व्यनक्ति **यच्चेति** । स्वविषयानतिक्रमं दर्शयति **यदेव हीति** । गतिप्राप्यं गम्यं छिदा प्राप्यं वेद्यमित्यादिरर्थो ज्ञेयः ।

**चषकः**— **सकर्मकक्रियामात्रे** तादृशक्रियासामान्ये ।

**॥ इति एतयोरर्थयोः समन्वये यथार्थशब्दस्य क्रियाविषयार्थत्वम् ॥**

**॥ इति अतिव्याप्तिशङ्का ॥**

* * *





**॥ अथ अतिव्याप्तिशङ्कापरिहारः ॥**

**॥ अथ अर्थशब्दस्य ज्ञेयार्थत्वम् ॥ (अर्यार्थत्वम् ॥)**

८३ **सु०**— ततो नेदं लक्षणमित्यत आह **अर्थत्वमिति** ।

## अनु०— अर्थत्वमर्यतैव स्यात्

**अर्यतैव** ज्ञेयतैव **अर्थत्वम्** अर्थशब्दप्रवृत्तिनिमित्तमस्माकं विवक्षि(ता)तं **स्यात्**, न तु विषयत्वमित्यर्थः ।

**शे०वा०**— ननु च याथार्थ्यमिति लक्षणवाक्यान्तर्गतार्थशब्दार्थस्यैव वक्तव्यत्वादर्थत्वमर्यतैवेत्यर्थत्वार्यत्वयोरभेदकथनं प्रकृतानुपयुक्तमित्यत आह **अर्थत्वमर्थशब्दप्रवृत्तिनिमित्तमिति** । नन्वभिधेयत्वादेरप्यर्थशब्दप्रवृत्तिनिमित्तत्वात् कथमर्यतैवेत्यवधारणमित्यत उक्तम् **अत्रेति** । तथा च प्रकृतलक्षणान्तर्गतार्थशब्दप्रवृत्तावभिधेयत्वादेरनिमित्तत्वाद्युक्तमवधारणमिति भावः ।

**॥ इति अर्थशब्दस्य ज्ञेयार्थत्वम् ॥ (अर्यार्थत्वम्)**

* * *

**॥ अथ अर्थान्तरस्य तात्पर्यम्, तस्य यौगिकार्थत्वञ्च ॥**

८४ **सु०— एतदुक्तं भवति । यथाशब्दस्य पदार्थानतिवृत्तिवाचित्वमङ्गीकृतमेव । अर्थशब्दस्तु न विषयपर्यायो गृह्यते, किन्तु ज्ञेयवाची ॥ यद्यपि न तत्र तस्य रूढिस्तथाऽप्यर्यत(इत्यर्थ) इति व्युत्पत्त्या तद्वाचिताऽस्त्येव, अर्तेरौणादिकस्य थन्प्रत्ययस्य प्रसिद्धत्वात्, गत्यर्थानां च ज्ञानार्थत्वादिति ।**

**परि०**— कथमनेनोक्तशङ्कानिरास इत्यत आह **एतदुक्तं भवतीति** । **अर्तेरौणादिकस्येति** । ऋगतावित्यस्मात् कर्मणि 'उषिकुषिगार्तिभ्यस्थन्' इति थन्प्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे चार्थ इति रूपमिति भावः ।

**यादु०**— **अर्तेरौणादिकस्येति** । 'उषिकुषिगार्तिभ्यस्थन्' इत्युणादिसूत्रेण ऋ गतिप्रापणयोरित्यस्मात् कर्मणि थन्प्रत्यये हलन्त्यमिति नलोपे सार्वधातुकार्धधातुकयोरित्यनेन गुणे रपरत्वे चार्थ इति रूपनिष्पत्तिरिति भावः ।





**वं०प०— तत्र** ज्ञेये । **तस्य** अर्थशब्दस्य । **अर्तेरिति** । ऋ गतावस्मात् 'उषिकुषिगार्तिभ्यस्थन्' इत्युणादिसूत्रेण थप्रत्यये आर्धधातुकं शेष इत्यार्धधातुकसंज्ञायां सार्वधातुकार्धधातुकयोरित्यनेन गुणे तस्य रपरत्वे च अर् थ अर्थेति रूपम् ।

**कं०रा०— अर्तेरिति** । ऋगतिप्रापणयोरित्यस्मात् औणादिकथप्रत्ययस्य उषिकुषिगार्तिभ्यस्थन्निति सूत्रे प्रसिद्धत्वादित्यर्थः । **थन्प्रत्ययस्येति** । मुक्तानुबन्धग्रहणं तथाच थन्प्रत्ययं निमित्तीकृत्य सार्वधातुकार्धधातुकयोरिति ऋकारस्य अकारे गुणे कृते उरण्रपर इति तस्य परत्वे चार्थशब्दो निष्पन्न इति भावः । ननु ऋगतिप्रापणयोरित्यस्मादौणादिकथप्रत्यये कृते निष्पन्नस्यार्थशब्दस्य कथं ज्ञेयवाचित्वमित्यत आह **गत्यर्थानामिति** ।

**शे०वा०—** ननु मूले यथाशब्दस्यार्थान्तरमनुक्त्वा कुतोऽर्थशब्दस्यैव प्रसिद्धार्थपरित्यागेनार्थान्तरवर्णनं कथं चार्थशब्दस्य ज्ञेयवाचित्वं तत्र तस्य रूढेरभावाद्योगस्य चाप्रतिभासादित्यत आह **एतदुक्तं भवतीति** । **अङ्गीकृतमेवेति** । प्रसिद्धार्थाङ्गीकारेऽनुपपत्तेरभावान्न यथाशब्दस्यार्थान्तरमुक्तमिति भावः । **औणादिकस्य थन्प्रत्ययस्येति** । कर्मणीति शेषः । ऋ गतावित्यस्मात् 'उषिकुषिगार्तिभ्यः स्थन्' इत्यौणादिकसूत्रेण कर्मणि थन्प्रत्यये सार्वधातुकार्धधातुकयोरित्यार्धधातुके परतो गुणे उरण् रपर इति रपरत्वे अचो रहाभ्यामिति थस्य द्वित्वेऽर्थशब्दनिष्पत्तिरिति भावः । ननु तथाऽप्यर्थशब्दस्य गतिकर्ममात्रवाचित्वलाभेऽपि न ज्ञेयवाचित्वलाभ इत्यत आह **गत्यर्थानामिति** । अनेकार्थत्वाद्धातूनामिति भावः । यद्वा सर्वे गत्यर्था ज्ञानार्था इति न्यायादिति भावः ।

**स०व्र०— अर्तेरौणादिकस्य थन्प्रत्ययस्येति** । 'ऋ गतिप्रापणयोः' इत्यस्मात् 'उषि-कुषि-गार्तिभ्यस्थन्' इत्यादिकेन औणादिके थन्प्रत्यये तस्यार्धधातुकं शेष इत्यनेन आर्धधातुकत्वसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे रपरत्वे च अर्थशब्दनिष्पत्तिर्द्रष्टव्या ।

**विठ्ठल०—** ननु तथापि न यथाशब्दार्थाभिहितः किञ्चार्थशब्दस्याभिधेयादिष्वेव रूढतया ज्ञेयवाचितात्प्रसिद्ध्यभावात्कथं ज्ञेयार्थतया व्याख्यायत इत्यत आह **एतदुक्तं भवतीति** । **अर्तेरिति** । 'ऋगतिप्रापण' इत्यस्माद्दोषादिप्रत्ययस्य 'उषिकुषिगार्तिभ्यः स्थन्नि'ति सूत्रे प्रसिद्धत्वादिति भावः ।

**॥ इति अर्थान्तरस्य तात्पर्यम्, तस्य यौगिकार्थत्वञ्च ॥**

* * *





**॥ अथ अर्यतेतिपदप्रयोगस्य साधुता ॥**

८५ **सु०— नन्वर्यतेति कथम् । 'अर्यः स्वामिवैश्ययोरि'ति विशेषणात् । मैवम्, स्वामित्वोपचारात् । अर्थो हि ज्ञानाद्यपेक्षया प्रधानं विवक्ष्यते ।**

**परि०— अर्यतेति कथमिति** । ऋहलोर्ण्यदिति ण्यत्प्रत्यये 'अचोञ्णिती'ति वृद्धौ आर्यतेति भाव्यमिति भावः । ननु ऋ गतावित्यस्मात् अचो यदिति सूत्रेण यत्प्रत्यये स्यादेवार्यतेत्यतो यत्प्रत्ययोऽर्थविशेष एव नियमितो नान्यत्रेति भावेनाह **अर्य इति** । स्वामिनि वैश्ये च वाच्ये अर्य इति भवति नान्यत्रेति सूत्रार्थः । चोद्यस्योत्तरमाह **स्वामित्वोपचारादिति** । तदेव व्यनक्ति **अर्थो हीति** ।

**यादु०—** नन्वर्तेः ऋहलोर्ण्यदिति ण्यति 'अचो ञ्णिती'ति वृद्धौ रपरत्वे च आर्यतेति वक्तव्यं, कथमर्यतेति वचनमित्याशयेन शङ्कते **नन्विति** । ननु ण्यदपवादेनाचो यदिति विहितो यत्प्रत्यय एवात्र किन्न स्यादित्यत आह **अर्यः स्वामीति** । अर्तेर्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं तु अर्यः स्वामीत्यादि । अत्र स्वामिवैश्ययोरित्यभिधेयविशेषणादर्थस्य च स्वामित्वाद्यसम्भवे तदुपाधिकयत्प्रत्ययाप्रसङ्गादर्यतेति वचनमनुपपन्नमेवेत्याशयः । उत्तरमाह **स्वामित्वेति** । मैवमिति पाठे तु स्पष्टमस्योत्तरत्वम् । उपचारबीजं गुणमाह **अर्थो हीति** ।

**वं०प०—** ननु ऋ गतावित्यस्मात् ऋहलोर्ण्यदिति ण्यत्प्रत्यये णकारतकारयोर्लोपे णित्वादचो ञ्णितीति ऋवर्णस्य आकाररूपवृद्धौ सत्यामाकारस्य रपरत्वे च आर् य आर्येति रूपे सति आर्यस्य भाव आर्यतेति स्यादर्यतेति कथं प्रयुक्तमित्याशयेन शङ्कते **नन्विति** । ननु ऋगतावित्यस्मात् 'अर्यःस्वामिवैश्ययोरि'ति सूत्रेण यत्प्रत्यये तकारलोपे पूर्ववत् सार्वधातुकेति गुणे तस्य च रपरत्वे अर् य अर्येति रूपे तस्य भावोऽर्यतेति भविष्यतीति चेत्तत्राह **अर्य इति** । ऋ गतावित्यस्मात् ऋहलोर्ण्यदिति ण्यति प्राप्ते तदपवादकत्वेन स्वामिवैश्ययोरभिधेययोः सतोर्यत्प्रत्ययो भवतीति सूत्रार्थः । अर्यः स्वामी, अर्यो वैश्य इत्युदाहरणम् । तथा च स्वामित्वे वैश्यत्वे वाऽभिधेये सत्येव यत्प्रत्ययविधानात् प्रकृते च तयोरर्थयोरसम्भवात्; तथा च ऋहलोरिति ण्यदेव स्यात् । आर्यो ब्राह्मण इत्यादेर्दर्शनात् ततश्चार्य इत्येव स्यादिति भावः । अर्यःस्वामिवैश्ययोरित्यनेन सूत्रेण यत्प्रत्ययेऽर्यतेत्येव रूपे तस्य भावोऽर्यतेति भविष्यति । न चोक्तदोषः । स्वामित्वस्यैवात्र विवक्षितत्वादित्याह **स्वामित्वेति** । उपचारबीजं गुणमाह **अर्थो हीति** ।

**कं०रा०— अर्यतेति कथमिति** । 'अर्यः स्वामिवैश्ययोरि'ति स्वामिनि वैश्ये च अर्यशब्दस्य निपातित्वात् अर्थस्य च स्वामित्वाद्यभावादर्यतेति कथमित्यर्थः ।





**श्रीनिधि०— अर्यः स्वामिवैश्ययोरिति विशेषणादिति** । न बहेनार्यशब्दो रूढ इत्युच्यते । प्रकृते तु योग आश्रितः । तत्कथमियं शङ्केति चेदुच्यते । योगाश्रयणमपि रूढिपरित्यागेनैव युक्तम् । क्षय्यजैयौ शङ्क्यार्थ इत्यत्रेवेति भावेन शङ्कनात् योगरूढेषु तथा नियमात् । तथा ह्युदाहरणम् । क्रयार्थे प्रसारितं क्रय्यम् । केयमन्यादित्यादि ।

**शे०वा०—** ननु 'अर्तेरचो यदि'ति सामान्यलक्षणप्राप्त 'यद'पवादकस्य 'ऋहलोर्ण्यदि'ति ण्यतः स्वामिवैश्ययोरभिधेययोः सतोरेवापवादेनार्यस्वामिवैश्ययोरिति यत्प्रत्ययविधानादर्यः स्वामीत्यादिवत् प्रकृतेऽर्थस्य स्वामित्वाद्यभावेन प्रकृते तदप्राप्तेः 'अपवादाभावे पुनरुत्सर्गस्य स्थितिरि'ति न्यायेन 'ऋहलोर्ण्यदि'ति ण्यति तस्य णित्वात् 'अचो ञ्णिती'ति वृद्धौ रपरत्वे चार्यो ब्राह्मण इत्यादिवदार्यतेति भवितव्यमर्यतेति तु कथमित्याशयेनाक्षिपति **नन्वित्यादिना** । स्वामित्वोपचारे बीजभूतं गुणमाह **अर्थो हीति** । अर्थतथात्वस्य ज्ञानप्रामाण्यप्रयोजकत्वादर्थस्य ज्ञानापेक्षया प्राधान्यमित्यवधेयम् ।

**वा०र०—** भट्टोज्युद्भावितं अर्यतेति भाष्ये व्याकरणविमर्शदोषं दूषयितुं शङ्काशयमेव स्पष्टयति **ननु अर्तेरच इति । यदपवादकस्येति** । अनेन यत्पक्षे अर्यते इति युक्तमिति शङ्का अपहस्तिता भवति । **इति ण्यत इति** । इत्यनेन विहितस्य ण्यत्प्रत्ययस्येत्यर्थः । न च ण्यतोऽपवादकत्वं मूलानभिप्रेतं कुतो वर्णितमिति वाच्यम् । अचो यत् इति हि यति अर्यतेति रूपसम्भवात् का कथन्तेति शङ्काऽत्र परिहरणीयैव । तत्परिहारश्च तदपवादकण्यत्प्राप्त्या वाच्यः । तद्वचनेन परो ब्रूयात् ण्यतोऽप्यपवादेन आर्यः स्वामीत्यनेन यत् स्यादिति तदा वाच्यम् । स्वामित्वाद्यभावात् न ते न यदिति । एवमानुपूर्व्या ग्रन्थे प्रवृत्ते अत्र यदभावार्थण्यतः तदपवादकत्वस्य वक्तव्यत्वात् । ण्यदपवादकत्वं च यतोऽप्यर्थः इत्यनेन विहितस्यास्ति । उक्तं च काशिकायाम् । ऋगतौ अस्मात् ण्यति प्राप्तेत्यादि । तदेतत्सर्वं यदि मूलकारानभिप्रेतं स्यात् कथं तर्हि प्रथमत एवार्यस्वामित्वस्याप्रवृत्तिवर्णनं घटेत । **तथा** वर्णयति तूक्तं सर्वमभिसंहितमिति तद्वर्णनं सङ्गतमेवेति ज्ञेयम् । एवं यदपवादकतया ण्यत्प्रवृत्तिवर्णनेनैव यथाख्यातिस्थं ण्यदपवादकतया अचो यदिति यत् प्रवृत्तिवर्णनादिकमपि न युक्तमिति सूचितम् । तन्निरासोऽपि उत्तरत्र करिष्यते । **अर्यः स्वामीत्यादिवदिति** । आदिपदेनार्यो वैश्यः इत्यस्य सङ्ग्रहः । अत्र चार्यः इत्यस्य स्वाम्यभिधेयकत्वमस्तीति दर्शयितुं स्वामीत्युक्तम् । न तु आर्यो ब्राह्मणः इत्यत्र ब्राह्मणशब्दवत् समानाधिकरणं पदान्तरम् । येनार्यस्वामिपदयोः पर्यायतया सह प्रयोगायोगेन आर्यशब्दोपेतवाक्यान्तरमेव प्रयोक्तव्यं इति शङ्का स्यात् । समानाधिकरणपदान्तरं तु भद्रसेनादिपदं स्पष्टत्वात् वृत्त्यादाविवात्रापि अनुदाहृतमेव । अत एव वृत्तादावुदाहृतम् । आर्यः स्वामी आर्यः वैश्यः इति । तत्र हि आर्यशब्दे स्वामिवैश्याभिधेयत्वप्रदर्शनार्थमेव स्वामीत्यादेरुदाहरणमिति स्पष्टत्वात् इति ज्ञेयम् । भद्रसेनादिपदानां स्वामिवाचित्ववत् स्वामिशब्दस्यापि स्वामिवाचितास्तीति समानाधिकरणपदान्तरमेव एतत् इत्यप्याहुः । प्रकृतलक्षणे अन्योन्येति पाठः । अपिपदं लेखकागतम् । **अपवादाभाव इति** । न चात्रापवादप्रसक्तेरेवाभावेन





**॥ अथ अर्यतेतिपदप्रयोगस्य साधुता ॥**

**८५ सु०— नन्वर्यतेति कथम् । 'अर्यः स्वामिवैश्ययोरि'ति विशेषणात् । मैवम्, स्वामित्वोपचारात् । अर्थो हि ज्ञानाद्यपेक्षया प्रधानं विवक्ष्यते ।**

**परि०— अर्यतेति कथमिति** । ऋहलोर्ण्यदिति ण्यत्प्रत्यये 'अचोञ्णिती'ति वृद्धौ आर्यतेति भाव्यमिति भावः । ननु ऋ गतावित्यस्मात् अचो यदिति सूत्रेण यत्प्रत्यये स्यादेवार्यतेत्यतो यत्प्रत्ययोऽर्थविशेष एव नियमितो नान्यत्रेति भावेनाह **अर्य इति** । स्वामिनि वैश्ये च वाच्ये अर्य इति भवति नान्यत्रेति सूत्रार्थः । चोद्यस्योत्तरमाह **स्वामित्वोपचारादिति** । तदेव व्यनक्ति **अर्थो हीति** ।

**यादु०—** नन्वर्तेः ऋहलोर्ण्यदिति ण्यति 'अचो ञ्णिती'ति वृद्धौ रपरत्वे च आर्यतेति वक्तव्यं, कथमर्यतेति वचनमित्याशयेन शङ्कते **नन्विति** । ननु ण्यदपवादेनाचो यदिति विहितो यत्प्रत्यय एवात्र किन्न स्यादित्यत आह **अर्यः स्वामीति** । अर्तेर्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं तु अर्यः स्वामीत्यादि । अत्र स्वामिवैश्ययोरित्यभिधेयविशेषणादर्थस्य च स्वामित्वाद्यसम्भवे तदुपाधिकयत्प्रत्ययाप्रसङ्गादर्यतेति वचनमनुपपन्नमेवेत्याशयः । उत्तरमाह **स्वामित्वेति** । मैवमिति पाठे तु स्पष्टमस्योत्तरत्वम् । उपचारबीजं गुणमाह **अर्थो हीति** ।

**वं०प०—** ननु ऋ गतावित्यस्मात् ऋहलोर्ण्यदिति ण्यत्प्रत्यये णकारतकारयोर्लोपे णित्वादचो ञ्णितीति ऋवर्णस्य आकाररूपवृद्धौ सत्यामाकारस्य रपरत्वे च आर् य आर्येति रूपे सति आर्यस्य भाव आर्यतेति स्यादर्यतेति कथं प्रयुक्तमित्याशयेन शङ्कते **नन्विति** । ननु ऋगतावित्यस्मात् 'अर्यःस्वामिवैश्ययोरि'ति सूत्रेण यत्प्रत्यये तकारलोपे पूर्ववत् सार्वधातुकेति गुणे तस्य च रपरत्वे अर् य अर्येति रूपे तस्य भावोऽर्यतेति भविष्यतीति चेत्तत्राह **अर्य इति** । ऋ गतावित्यस्मात् ऋहलोर्ण्यदिति ण्यति प्राप्ते तदपवादकत्वेन स्वामिवैश्ययोरभिधेययोः सतोर्यत्प्रत्ययो भवतीति सूत्रार्थः । अर्यः स्वामी, अर्यो वैश्य इत्युदाहरणम् । तथा च स्वामित्वे वैश्यत्वे वाऽभिधेये सत्येव यत्प्रत्ययविधानात् प्रकृते च तयोरर्थयोरसम्भवात्; तथा च ऋहलोरिति ण्यदेव स्यात् । आर्यो ब्राह्मण इत्यादेर्दर्शनात् ततश्चार्य इत्येव स्यादिति भावः । अर्यःस्वामिवैश्ययोरित्यनेन सूत्रेण यत्प्रत्ययेऽर्यतेत्येव रूपे तस्य भावोऽर्यतेति भविष्यति । न चोक्तदोषः । स्वामित्वस्यैवात्र विवक्षितत्वादित्याह **स्वामित्वेति** । उपचारबीजं गुणमाह **अर्थो हीति** ।

**कं०रा०— अर्यतेति कथमिति** । 'अर्यः स्वामिवैश्ययोरि'ति स्वामिनि वैश्ये च अर्यशब्दस्य निपातित्वात् अर्थस्य च स्वामित्वाद्यभावादर्यतेति कथमित्यर्थः ।





**श्रीनिधि०— अर्यः स्वामिवैश्ययोरिति विशेषणादिति** । न बहेनार्यशब्दो रूढ इत्युच्यते । प्रकृते तु योग आश्रितः । तत्कथमियं शङ्केति चेदुच्यते । योगाश्रयणमपि रूढिपरित्यागेनैव युक्तम् । क्षय्यजैयौ शङ्क्यार्थ इत्यत्रेवेति भावेन शङ्कनात् योगरूढेषु तथा नियमात् । तथा ह्युदाहरणम् । क्रयार्थे प्रसारितं क्रय्यम् । केयमन्यादित्यादि ।

**शे०वा०—** ननु 'अर्तेरचो यदि'ति सामान्यलक्षणप्राप्त 'यद'पवादकस्य 'ऋहलोर्ण्यदि'ति ण्यतः स्वामिवैश्ययोरभिधेययोः सतोरेवापवादेनार्यस्वामिवैश्ययोरिति यत्प्रत्ययविधानादर्यः स्वामीत्यादिवत् प्रकृतेऽर्थस्य स्वामित्वाद्यभावेन प्रकृते तदप्राप्तेः 'अपवादाभावे पुनरुत्सर्गस्य स्थितिरि'ति न्यायेन 'ऋहलोर्ण्यदि'ति ण्यति तस्य णित्वात् 'अचो ञ्णिती'ति वृद्धौ रपरत्वे चार्यो ब्राह्मण इत्यादिवदार्यतेति भवितव्यमर्यतेति तु कथमित्याशयेनाक्षिपति **नन्वित्यादिना** । स्वामित्वोपचारे बीजभूतं गुणमाह **अर्थो हीति** । अर्थतथात्वस्य ज्ञानप्रामाण्यप्रयोजकत्वादर्थस्य ज्ञानापेक्षया प्राधान्यमित्यवधेयम् ।

**वा०र०—** भट्टोज्युद्भावितं अर्यतेति भाष्ये व्याकरणविमर्शदोषं दूषयितुं शङ्काशयमेव स्पष्टयति **ननु अर्तेरच इति । यदपवादकस्येति** । अनेन यत्पक्षे अर्यते इति युक्तमिति शङ्का अपहस्तिता भवति । **इति ण्यत इति** । इत्यनेन विहितस्य ण्यत्प्रत्ययस्येत्यर्थः । न च ण्यतोऽपवादकत्वं मूलानभिप्रेतं कुतो वर्णितमिति वाच्यम् । अचो यत् इति हि यति अर्यतेति रूपसम्भवात् का कथन्तेति शङ्काऽत्र परिहरणीयैव । तत्परिहारश्च तदपवादकण्यत्प्राप्त्या वाच्यः । तद्वचनेन परो ब्रूयात् ण्यतोऽप्यपवादेन आर्यः स्वामीत्यनेन यत् स्यादिति तदा वाच्यम् । स्वामित्वाद्यभावात् न ते न यदिति । एवमानुपूर्व्या ग्रन्थे प्रवृत्ते अत्र यदभावार्थण्यतः तदपवादकत्वस्य वक्तव्यत्वात् । ण्यदपवादकत्वं च यतोऽप्यर्थः इत्यनेन विहितस्यास्ति । उक्तं च काशिकायाम् । ऋगतौ अस्मात् ण्यति प्राप्तेत्यादि । तदेतत्सर्वं यदि मूलकारानभिप्रेतं स्यात् कथं तर्हि प्रथमत एवार्यस्वामित्वस्याप्रवृत्तिवर्णनं घटेत । तथा वर्णयति तूक्तं सर्वमभिसंहितमिति तद्वर्णनं सङ्गतमेवेति ज्ञेयम् । एवं यदपवादकतया ण्यत्प्रवृत्तिवर्णनेनैव **यथाख्यातिस्थं** ण्यदपवादकतया अचो यदिति यत् प्रवृत्तिवर्णनादिकमपि न युक्तमिति सूचितम् । तन्निरासोऽपि उत्तरत्र करिष्यते । **अर्यः स्वामीत्यादिवदिति** । आदिपदेनार्यो वैश्यः इत्यस्य सङ्ग्रहः । अत्र चार्यः इत्यस्य स्वाम्यभिधेयकत्वमस्तीति दर्शयितुं स्वामीत्युक्तम् । न तु आर्यो ब्राह्मणः इत्यत्र ब्राह्मणशब्दवत् समानाधिकरणं पदान्तरम् । येनार्यस्वामिपदयोः पर्यायतया सह प्रयोगायोगेन आर्यशब्दोपेतवाक्यान्तरमेव प्रयोक्तव्यं इति शङ्का स्यात् । समानाधिकरणपदान्तरं तु भद्रसेनादिपदं स्पष्टत्वात् वृत्त्यादाविवात्रापि अनुदाहृतमेव । अत एव वृत्तादावुदाहृतम् । आर्यः स्वामी आर्यः वैश्यः इति । तत्र हि आर्यशब्दे स्वामिवैश्याभिधेयत्वप्रदर्शनार्थमेव स्वामीत्यादेरुदाहरणमिति स्पष्टत्वात् इति ज्ञेयम् । भद्रसेनादिपदानां स्वामिवाचित्ववत् स्वामिशब्दस्यापि स्वामिवाचितास्तीति समानाधिकरणपदान्तरमेव एतत् इत्यप्याहुः । प्रकृतलक्षणे अन्योन्येति पाठः । अपिपदं लेखकागतम् । **अपवादाभाव इति** । न चात्रापवादप्रसक्तेरेवाभावेन





अपवादाभावन्यायमनुसृत्य पुनः उत्सर्गप्राप्त्यभिधानायोग इति वाच्यम् । इति विशेषणादिति वदता मूलकारेण स्वामिवैश्ययोरित्येतत् आच्छाद्यैव यत्प्रापकापवादप्रसक्तिसूचनेन तत्प्रसक्तिपूर्वकतदभाववर्णनेन च तदनुसारेण अपवादाभाव इति अन्यान्यप्रवृत्त्युपवर्णनोपपत्तेः । न हि सम्पूर्णापवादप्राप्तिरस्ति इत्यपि टीकायामुक्तम् । ........... इत्यादौ सम्पूर्णापवादादिप्राप्त्यभावेऽपि कथञ्चित् प्रसक्तिमात्रेण निषेधस्य दृष्टत्वाच्च । अंशानाच्छादनेन तदाच्छादनेन वाऽपवादप्राप्तिमात्रेणापवादप्रसक्तेरनुगमेन लक्षणान्तरादिना केनाप्युपायेनापवादभावप्रसक्तिनिरासेऽपवादाभावन्यायस्य प्रवृत्त्युपपत्तेश्चेत्यलम् । **आर्यो ब्राह्मण इत्यादिवदिति** । अत्रार्यो ब्राह्मण इत्यस्य सिद्धत्वेन दृष्टान्तता । तन्न्यायेन आर्यतेति भाष्येऽप्यसिद्धस्थले आर्यतेति भवितव्यं इत्यापादनोपपत्तेरिति ध्येयम् । **स्वामित्वोपचार इति** । न च गमनेऽतिव्याप्तिवारणाय ज्ञेयत्ववचनार्थमेवार्यतेत्यनेनैव योगस्य सूचितत्वेन योगनिष्पन्नार्थशब्दे साधुत्वसिद्धेरेव प्रयोजनत्वात् इत्यवधेयम् । यत्तु ननु अर्तेः ऋहलोर्ण्यत् इति ण्यति अचो ञ्णिति इति वृद्ध्या आर्यतेति वक्तव्यं कथं अर्यतेति वचनं इत्याशङ्कते नन्वितीति अवतारो नन्वर्यतेति कथं इत्यस्य कृतो अन्यथाख्यातौ तद्दूषणं वाक्यार्थविनोदे ण्यतोपवादेन प्रवृत्त्यवर्णनात्सामान्यलक्षणप्राप्ते यति अर्यते रूपसम्भवेनाक्षेपस्य निर्दलत्वमित्यादिरूपमहितम् । ण्यतो यदपवादकत्वाभिप्रायकल्पनायामपि सामान्यविशेषलक्षणप्राप्तत्वादिनियामकानुक्तिरपि दोषत्वेनोक्ता । तदेतद्दूषणान्तरोपलक्षणम् । यदि ण्यतोपवादकत्वं भवतोऽभिप्रेतं तर्हि शङ्काशयस्य कथञ्चित् पूर्णत्वेऽपि ण्यतोपवादेनाचो यदिति विहितो यत्प्रत्यय एव किं न स्यात् इत्याशङ्कानिवर्तकतया अर्यः स्वामिवैश्ययोः इति विशेषणात् इत्युत्तरवाक्यावतारायोगः । अचो यत् इति अपवादेन ण्यत्प्रवृत्तिवर्णनं कृत्वा पुनः ण्यदपवादेनाचो यत्प्रवृत्तेरुपवर्णनस्य पूर्वोत्तरविमर्शशून्यतापादकत्वात् । अथ ऋहलोर्ण्यत् इतीत्यत्र ण्यतः चाक्षेपे यदपवादकत्वं न ममाभिप्रेतम् । भवद्बलात्कारात् अङ्गीकृतं अतो न पूर्वोत्तरविरोधः इति ब्रूषे तर्हि यत्प्राप्तिशङ्कायाः अवर्जनीयतया ण्यत्प्रवृत्तिमात्राश्रयणेन शङ्कानिर्दलत्वमिति दूषणग्रन्थोक्तदोषोऽवर्जनीय एव । किञ्च ण्यतोपवादकता न तु अचो यत् इति विहित यतो ण्यदपवादकत्वमित्यस्य सामान्यलक्षणेति वदता वैयाकरणाभिप्रेतस्य सूचिततया ननु ण्यत् इत्याद्यवतारो व्याकरणग्रन्थाज्ञानमूलः । अचो यत् इत्यनेन ण्यदपवादशङ्कामुत्थाप्य तन्निवर्तये अर्यः स्वामीति मूलमवतार्य अर्यस्वामिवैश्ययोः इत्यस्यार्थकथनपूर्वकं अत्र स्वामिवैश्ययोः इत्यभिधेयविशेषणात् अर्थस्य च स्वामित्वाद्यसम्भवे तदुपाधिकयत्प्रत्ययाप्रसङ्गात् अर्यतेति वचनं अनुपपन्नमेवेत्याशयं वर्णयन् आम्रान् पृष्टः केदारान् आचक्षाण इवानवधेयवचन एव स्यात् । आर्यस्वामीत्यस्याचो यत् इत्येतदपवादकण्यदपवादेन यत्प्रत्ययविधायकतया अचो यत् इत्यत्रैव विशेषनियमार्थत्वाभावात् भवदीयोत्तरसूत्रार्थकथनविरोधश्च । अर्तेर्यत् इति प्राप्तेः । स्वामिवैश्ययोरभिधेययोः यत्प्रत्ययो भवतीति सूत्रार्थः इत्युक्तं चात्यन्तायुक्तम् । ण्यति प्राप्तेः इत्यस्य सूत्रार्थान्तर्भावकथनायोगात् । काशिकायां हि ऋगतौ अस्मात् ण्यति प्राप्ते स्वामिवैश्ययोः अभिधेययोः यत्प्रत्ययो निपात्यत इत्युक्तम् । तत्र ण्यदपवादकस्तु नयत् ण्यति प्राप्ते इत्युक्तेः । एवं सति सूत्रार्थत्वकल्पनं कथनभ्रान्तिमूलं यथाश्रुतकाशिकाग्रन्थलेखपरित्यागश्च वृथैव कृतः इत्यादिदूषणानि दुर्वाराणि शिष्यप्रवेदनीयत्वाशये न स्पष्टं नोक्तमिति टीकाकृतेति तेषामप्यत्र वक्तव्यत्वात् इति सूरिभिराकलनीयम् ।





**अर्थतथात्वस्येति** । तत्सत्यत्वस्येत्यर्थः । **प्रयोजकत्वादिति** । तादृशार्थविषयकज्ञाने एव ज्ञानजनकेन प्रामाण्यजननादिति भावः ।

**स०व्र०**— ननु 'ऋ गतौ' इत्यस्मात् ऋहलोर्ण्यत् इति ण्यति णित्त्वात् अचोञ्णितीति वृद्धौ रपरत्वे च आर्यतेति स्यात्, अर्यतेति कथमित्याशङ्कते **नन्विति** । ननु ण्यदपवादेन 'अचो यदि'ति विहितो यत्प्रत्यय एवात्र किं न स्यादित्यत आह **अर्यस्स्वामीति** । अर्तेर्ण्यदिति प्राप्ते स्वामि-वैश्ययोरभिधेययोर्यत्प्रत्ययो भवतीत्यचो यदिति सूत्रार्थः । ननु अर्यःस्वामिवैश्ययोरित्यनेन यत्प्रत्यये अर्यतेति साध्वित्यत आह **अर्य-स्स्वामिवैश्ययोरिति विशेषणादिति** । ऋ गतावित्यस्माद्धातोर्ण्यति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत्प्रत्ययो निपात्यत इति सूत्रार्थः । तथा च अर्यः स्वामी अर्यो वैश्य इति स्वामित्वे वैश्यत्वे वा अभिधेय एव यत्प्रत्ययस्यानेन विधानात् । तदभावे आर्यो ब्राह्मण इतिवत् ण्यत्प्रत्ययस्यैव दर्शनादत्रापि ण्यदेव स्यादिति भावः । उपचारप्रयोजकं गुणमाह **अर्थो हीति** । अर्थतथात्वस्य ज्ञानप्रमात्वप्रयोजकत्वात् अर्थस्य ज्ञानापेक्षया प्राधान्यमिति द्रष्टव्यम् ।

**स०ना०**— **अर्थत्वमर्यतैव स्यादिति** मूलसुधायां **स्वामित्वोपचारादिति** । न चैवं सति स्वामिन-मनतिक्रम्य वर्तमानं यथार्थमित्युक्तं स्यात् । ततश्च भृत्येतिव्याप्तिरित्यत आह **अर्थो हीति** । आदिशब्देन ज्ञानसाधनमुच्यते । ततश्च अर्थो हि ज्ञेयं हि ज्ञानतत्साधनापेक्षया प्रधानं तयोः प्रामाण्यनिर्वाहकत्वात् इति अर्यत इति स्वामित्वोपचारेण विवक्ष्यत इति योजना । इदमुक्तं भवति । यथा हि लोके माणवकस्य क्रौर्यादिगुणलाभाय सिंहोऽयमित्युपचर्यते तथा ज्ञानतत्करणयोः सोऽयमनादिव्यावृत्तप्रामाण्यस्वरूपनिर्धारणं ज्ञेयत्वाधीनमिति ज्ञापनाय अर्यतेत्युपचारः कृतः तेन च येनोपाधिना येन निमित्तेन वा ज्ञेयत्वं विषयस्य तस्य तद्विषयपरत्वमेव प्रामाण्यमिति निर्णयो भवति । गमनं तु न ज्ञेयं प्रत्युपाधिः नापि निमित्तं इति ज्ञेयविषयकारित्वलक्षणप्रामाण्यस्य गमनव्यावृत्तिरपि तत एव सिद्धा भवति । अर्थत्वमर्यतैवेत्यभिधाने तु ज्ञेयविषयीकारिप्रमाणमित्येवार्थः स्यात् । न च तद्गमने नास्तीति शक्यते वक्तुम् । तद्विषयस्य ग्रामादेरपि ज्ञेयत्वात् इति । एतेन प्रयोजनाभावान्न स्वामित्वोपचारः कार्य इति परास्तम् ।

**विठ्ठल०**— नन्वर्ते ऋहलोर्ण्यदिति ण्यत्प्रत्यये अचो ञ्णितीति वृद्धौ रपरत्वे च आर्यतेति वक्तव्यं, कथमर्यतेति वचनमित्याशयेन शङ्कते **नन्विति** । ननु ण्यदपवादेन 'अचो यदि'ति विहितोऽयं यत्प्रत्यय एवात्र किं न स्यात्तथा चार्यतेति युक्तमेवेत्यत उक्तम् **अर्यतेति** । अर्ते ण्यदिति प्राप्ते स्वामिवैश्ययोरभिधेययोर्यत्प्रत्ययो भवतीति सूत्रार्थः । तथा च प्रकृते अर्थस्य स्वामित्वाद्यसम्भवेन न च ह्यत्यप्रसङ्गादर्यतेतिवचनमनुपपन्नमिति भावः । उत्तरमाह **स्वामित्वेति** । उपचारबीजं गुणमाह **अर्थो हीति** ।

**॥ इति अर्यतेतिपदप्रयोगस्य साधुता ॥**

* * *

**॥ अथ अर्यतायाः क्रियार्थेष्वभावात् अतिव्याप्त्यभावः ॥**

८६ **सु०—** किमतो यद्येवं ज्ञेयतैवार्थत्वमित्यत आह **नेति** ।

**अनु०— न क्रियार्थेषु सा मता ।**

**क्रियार्थेषु क्रियाविषयेषु सा अर्यता । 'तदभावाच्च न यथार्थता क्रियास्विति नाति-व्यापकं प्रमाणलक्षणमि'ति** शेषः ।

**परि०— यथार्थतेति** । यथावस्थितज्ञेयविषयीकारितेत्यर्थः ।

**वं०प०— तदभावादिति** । क्रियाविषयेऽर्यताया अभावात् तदनतिक्रम्य वर्तमानत्वरूपा यथार्थता क्रियासु नेत्यर्थः ।

**शे०वा०—** क्रियार्थेष्वित्यत्र क्रियासाध्यफलेष्विति तज्ज्ञेयेष्विति वाऽन्यथाप्रतीतिनिरासाय व्याचष्टे **क्रियाविषयेष्विति** । सेति स्त्रीलिङ्गनिर्देशादर्थत्वव्याख्यानस्यैवायं परामर्शो नार्थत्वस्येत्यभिप्रेत्याह **साऽर्यतेति** । लक्षणस्यातिव्याप्तौ शङ्कितायां क्रियायां लक्षणाभावस्यैव व्युत्पादनीयत्वात् । क्रियाविषयेष्वर्थत्वाभावव्युत्पादन-मसङ्गतमित्यतो लक्षणाभावव्युत्पादनार्थत्वान्नासङ्गतिरिति भावेनापेक्षिताध्याहारेण साकाङ्क्षवाक्यं तत्परतया योजयति **तदभावाच्चेति** ।

**वा०र०— नासङ्गतिरिति** । अर्थत्वाभावव्युत्पादनवत्वस्येति शेषः । क्वचिन्नासङ्गतमिति पाठः । तत्र व्युत्पादनस्य प्रकृतत्वात् न शेषापेक्षेति ।

**स०ना०— सार्यतेति** । क्रियाविषयेषु अर्यताप्रामाण्यनिर्वाहकत्वरूपं स्वामित्वं नास्तीति नाति-व्यापकं प्रामाण्यलक्षणमिति भावः ।

**६८॥ इति अर्यतायाः क्रियार्थेष्वभावात् अतिव्याप्त्यभावः ॥**

* * *

**६८अ॥ अथ ज्ञेयशब्दस्य सम्बन्धिशब्दत्वात् अतिप्रसङ्गाभावः ॥**

८७ **सु०—** नन्वेतावताऽपि नातिव्याप्तिपरिहारः, गमनादीनामपि ज्ञेयानतिवृत्तित्वात् । न हि तद्विषयो ग्रामादिः सर्वथा न ज्ञेय इति शक्यते वक्तुम्, तदत्यन्ताभावप्रसङ्गादिति ।





**मैवम् । यथा हि 'पितरि साधुर्मातरि साधुरि'तिवाक्यं यत्किञ्चित्पित्रादौ साधुत्वेन न पर्यवस्यति, किन्तु स्वीये पित्रादौ; तत्कस्य हेतोः, पित्रादिशब्दानां सम्बन्धिशब्दत्वात्, सम्बन्धिशब्दानां ह्येष महिमा, अन्यथा पितुर्धनमुपादद्यादित्यादौ बहुविप्लवः स्यात्; सति चैवं, शब्दमहिमानमनादृत्य प्रत्यवतिष्ठमानः छलवादितया जीयेत । तथा प्रकृतेऽपि ज्ञेयशब्दस्य सम्बन्धिशब्दत्वात् 'स्वज्ञेयं नातिवर्तते यत् तत्प्रमाणमि'त्युक्तं स्यात् । न च गम(ने)नोपाधिना गमनेन वा निमित्तेन ग्रामो ज्ञेयः, येन तमनतिक्रम्य वर्तमानं गमनं यथार्थं स्यात्, किन्तु गम्य एव; तत्कथमतिव्याप्तिः । भवति च घटादिर्ज्ञानतत्करणाभ्यामुपाधिनिमित्ताभ्यां ज्ञेय इति । तदिदमुक्तं क्रियार्थेषु सा न मता शब्दार्थतत्त्वविदुषामिति ।**

**परि०**— मतेत्यस्य तात्पर्यं शङ्कोत्तराभ्यां व्यनक्ति **नन्वेतावताऽपीति** । **तदत्यन्ताभावेति** । शशविषाणादेरिवाप्रामाणिकतया अत्यन्तासत्त्वापातादिति भावः । केवलानुप्रमाणयोः क्रमादुपाधित्वनिमित्तभावात् तत्तात्पर्येणोक्तं **गमनेनोपाधिनेत्यादि** । **यथार्थं स्यात्** यथावस्थितार्थविषयीकारि स्यादित्यर्थः । **गम्य एवेति** । गमनेनोपाधिना गमनेन निमित्तेन वा ग्राम इत्यनुवर्तते । अतिव्याप्तिं निरस्यासम्भवाव्याप्ती निराह **भवति चेति** ।

**गु०दी०**— **ज्ञानतत्करणाभ्यामुपाधिनिमित्ताभ्याम्** इत्यत्र कुठारस्य किं छेद्यं छिदिक्रियायाश्च किं छेद्यमिति प्रश्नस्य दार्वित्येव शिष्टैरुत्तरस्य दीयमानत्वात्साक्षादुपाधिभूतज्ञानेन ज्ञेयो घटादिः करणभूतप्रमाणेनापीति भावः ।

**यादु०**— **तदत्यन्ताभावेति** । तस्यासत्त्वप्रसङ्गादित्यर्थः ।

**वं०प०**— **तदिति** । ग्रामादेः सर्वथाऽज्ञेयत्वेऽत्यन्तासत्त्वमेव स्यादित्यर्थः । **सम्बन्धिशब्दानां** पित्रादिशब्दानाम् । **एषः** स्वीयपित्रादिकमादायैव पर्यवसानरूपः । **अन्यथा** स्वीयपित्रादिकमादायापर्यवसान इत्यर्थः । **विप्लवः** यस्यकस्यचित्पितुर्द्रव्यं यस्यकस्यचित्पुत्र उपाददीतेत्यर्थः । **सति चेति** । **विप्लवाङ्गीकारे चेत्यर्थः** । **शब्देति** । पित्रादिशब्दानां सम्बन्धिशब्दत्वात् तन्महिमलभ्यं स्वीयपित्रादिकमादाय पर्यवसानरूपाभिप्रेतमर्थमनादृत्य, यत्किञ्चित्पित्रादिकमादाय विप्लवाङ्गीकारेण दूषणे प्रत्यवतिष्ठमानश्छलवादितया जीयेत । छलेनैव तस्य जयः प्राप्तो न तु समीचीनदूषणेनेत्यर्थः । **स्वज्ञेयमिति** । तथा च स्वनिमित्तकज्ञेयत्वोपेतज्ञेयविषयीकारित्वं पर्यवस्यतीति ज्ञेयम् । साक्षाज्ज्ञेयत्वसम्पादक उपाधिः, ज्ञानद्वारा परम्परया ज्ञेयत्वसम्पादको





निमित्तम् । तादृशं च ज्ञानमिन्द्रियं चेत्युभयम् । न हि गमनं साक्षाद्वा परम्परया वा ज्ञेयत्वं ग्रामे सम्पादयतीत्यर्थः । **सा** अर्यताऽपरपर्याया ज्ञेयता । **न मता** क्रियाप्रयुक्तत्वेनेति शेषः ।

**कं०रा०— भवति चेति** । ज्ञानेनोपाधिना ज्ञानकरणेन निमित्तेन च घटादि ज्ञेयो भवति । ज्ञेयत्वस्य ज्ञानोपहितत्वेन ज्ञानस्य ज्ञेयतायामुपाधित्वात् देयत्वस्य ज्ञानकरणाधीनत्वेन तस्य तत्र निमित्तत्वात् तथा च स्वज्ञेयं नातिवर्तत इति लक्षणं केवलप्रमाणे ज्ञानेऽनुप्रमाणे तत्करणेष्वस्तीति भावः ।

**शे०वा०—** क्रियार्थेषु न सेत्येव तावतैव पूर्तेः किं मतग्रहणेनेत्यतोऽतिव्याप्तिपरिहारार्थं तदिति भावेन पुनरतिव्याप्तिशङ्कामुत्थापयति **नन्वेतावताऽपीति** । अर्थशब्दस्य ज्ञेयवाचित्वपरिग्रहमात्रेणापीत्यर्थः । **तदत्यन्ताभावेति** । सर्वथाऽज्ञेयस्य ग्रामादेः सत्त्वे प्रमाणाभावेन तदत्यन्तासत्त्वप्रसङ्गादित्यर्थः । **विप्लव इति** । यस्यकस्यचित्पुत्रो यस्यकस्यचिद्धनमुपादद्यादित्येवंरूप इत्यर्थः । **स्वज्ञेयमिति** । स्वेनोपाधिना स्वेन निमित्तेन वा ज्ञेयमित्यर्थः । कथमुक्तविवक्षयाऽतिव्याप्तिनिरास इत्यतः किं गमनस्य ज्ञेयत्वोपाधित्वमभिमतं किं वा उपाधिनिमित्तत्वमिति विकल्पं मनसि निधाय पक्षद्वयस्यापि क्रियायामसम्भवमाह **न चेति** । माऽस्तु तर्ह्यतिव्याप्तिरसम्भवस्तु स्यादेवोक्तरूपज्ञेयानतिक्रमस्य ज्ञानतत्करणयोरयोगादित्यत आह **भवति चेति** । घटादेर्ज्ञानविषयत्वरूपज्ञेयतायां ज्ञानस्य तच्छरीरान्तःप्रविष्टतयोपाधित्वस्य चक्षुरादेश्च ज्ञेयत्वोपाधिज्ञाननिमित्तत्वस्य सत्त्वान्नासम्भवो गमनस्य चोक्तरूपज्ञेयताशरीरानन्तर्भावान्न ज्ञेयोपाधित्वं ज्ञानवत्, नापि ज्ञानकरणवदुपाधिरूपज्ञाननिमित्तत्वमिति न तत्रातिव्याप्तिरित्याखण्डलार्थः । **शब्दार्थतत्त्वेति** । सम्बन्धिशब्दार्थतत्त्वेत्यर्थः ।

**वा०र०— स्वेनोपाधिना स्वेन निमित्तेन वेति** । स्वयं यः उपाधिः तेन ज्ञेयं इत्युक्ते ज्ञेयत्वं यदुपाधिप्राप्तं इत्युक्तं भवति । तथा तादृशोपाधिं प्रति निमित्ततोक्त्या ज्ञेयपदार्थान्तर्गतज्ञानस्य विषयसम्बन्धो मुख्यः । तद्द्वारा करणस्येत्युक्तं भवति ।

**स०व्र०— तदत्यन्ताभावप्रसङ्गादिति** । तस्य सत्त्वं न सिद्ध्येदित्यर्थः ।

**स०ना०—** ननु स्वामित्वोपचारसूचितलक्षणस्यातिव्याप्तिपरिहारेऽपि कण्ठोक्तस्य याथार्थ्यमेव मानत्व-मित्यस्य तु अतिव्याप्तिरेवेत्याशङ्कते **नन्वेतावतापीति** । नास्माभिः अर्यतैव स्यादिति प्रयोगेन लक्षणान्तरमुच्यते किं नाम प्रागुक्तस्यैव लक्षणस्य आशयो वर्ण्यते इति भावेन अर्यत इति प्रयोगेण सूचितमर्थं याथार्थ्यमिति पदारूढं करोति **मैवमित्यादिना** ।

**विठ्ठल०—** मतेत्यस्य तात्पर्यं शङ्कोत्तराभ्यां व्यनक्ति **नन्वेतावतापीति** । **तदत्यन्ताभावेति** । ग्रामादेरज्ञेयत्वे शशविषाणादेरिव तस्यात्यन्ताभावप्रसङ्गादित्यर्थः । केवलानुप्रमाणयोः क्रमात् उपाधित्वनिमित्त-





त्वाभावात् तदनुरोधेनोक्तं **गमनोपाधिनेति** । **यथार्थं स्यात्** यथावस्थितार्थविषयीकारि स्यात् । अतिव्याप्तिं निरासासम्भवाव्याप्त्यापि निरस्यति **भवति चेति** ।

**॥ इति ज्ञेयशब्दस्य सम्बन्धिशब्दत्वात् अतिप्रसङ्गाभावः ॥**

* * *

**॥ अथ एतेन दोषान्तरनिरासोऽपि ज्ञेयः ॥**

८८ **सु०— ननु तथाऽप्यन्योन्याश्रयत्वमात्माश्रयत्वं वा, स्वशब्देन प्रमाणस्याभिधानात्; इति चेन्न, ज्ञानतत्करणमात्रोपादानेन लक्षणस्य व्याख्याततत्वात्, स्वगुण(ग्राहक)-ग्रहणमिन्द्रियं श्रोत्रमित्यत्र यथेति ।**

**परि०— अन्योन्याश्रयत्वमित्यादि** । प्रमाणस्वरूपे ज्ञाते तन्निरूपितज्ञेयत्वज्ञानद्वारा ज्ञेयविषयीकारित्वज्ञानं तज्ज्ञाने च सति तेन प्रमाणस्वरूपज्ञानं इत्यन्योन्याश्रयत्वम् । स्वज्ञाने स्वोपहितवस्तुज्ञानापेक्षणात् आत्माश्रयत्वमित्यर्थः । **स्वगुणेति** । तत्र यथा स्वशब्देन प्रमिति-कारणतदाभासरूपसाधारण्येनोपादानं श्रोत्रपदेन च प्रमाणभूतश्रोत्रोपादानं कृत्वा दोषः परिह्रियते तथेत्यर्थः ।

**यादु०— ननु तथाऽपीति** । स्वशब्दाभिधेयप्रमाणे सिद्धे तज्ज्ञेयसिद्धिः तत्सिद्धौ च तद्विषयी-कारिप्रमाणसिद्धिरित्यन्योन्याश्रयत्वं स्वज्ञेयमपेक्षमाणमन्ततः स्वमेवापेक्षत इत्यात्माश्रयत्वं वेत्यर्थः । **स्वगुण-ग्रहणमिति** । यथाऽत्र स्वशब्देन श्रोत्रस्य विवक्षितत्वेऽपि तस्येन्द्रियत्वेनाकाशत्वेन वा सामान्यत एवोपादानं, न श्रोत्रत्वेन अतो नात्माश्रय इति परैरुच्यते । तथाऽस्माभिरपि प्रमाणं ज्ञानत्वेन तत्करणत्वेन वा सामान्यत एव स्वशब्देनोपादीयते, न तु प्रमाणत्वेनातो नान्योन्याश्रयादीत्यर्थः ।

**वं०प०— अन्योन्येति** । प्रमाणज्ञाने तद्घटितलक्षणज्ञानं, तज्ज्ञाने तेन लक्षणेन लक्ष्यभूतप्रमाण-ज्ञानमित्यन्योन्याश्रय इत्यर्थः । **ज्ञानतत्करणमात्रोपादानेनेति** । ज्ञानतत्करणयोः स्वशब्देनोपादानेनेत्यर्थः । न तु प्रमाणत्वेनेत्यभिप्रायः । **स्वेति** । श्रोत्रस्य स्वत्वेनैव प्रवेशो न श्रोत्रत्वेन । एवं ज्ञानत्वेन तत्करणत्वेन च प्रमाणस्य लक्षणे प्रवेशो न प्रमाणत्वेनेति नात्माश्रय इति भावः ।

**कं०रा०— ननु तथापीति** । ज्ञेयशब्दस्य सम्बन्धिशब्दतया स्वज्ञेयत्वलाभेन स्वज्ञेयं नातिवर्तत इति लक्षणस्य सकर्मकगमनादिक्रियास्वसत्त्वेनातिव्याप्तिभावेऽपि स्वशब्देन प्रमाणस्याभिधानात्स्वशब्दितप्रमाणज्ञप्तौ





तज्ज्ञेयत्वज्ञप्तिस्तज्ज्ञप्तौ च स्वज्ञेयं नातिवर्तते यत्तत्प्रमाणमिति । प्रमाणज्ञप्तिरित्यन्योन्याश्रयत्वं स्वज्ञेयं नातिवर्तते यत्तत्प्रमाणमिति प्रमाणज्ञाने स्वशब्दितप्रमाणज्ञानस्यापेक्षितत्वेनात्माश्रयत्वं चेत्यर्थः । स्वशब्देन प्रमाणग्रहणं विहाय ज्ञानतत्करणयोरुपादानेन स्वज्ञेयं नातिवर्तत इति लक्षणस्य व्याख्याततत्वात् नान्योन्याश्रयत्वादिकमिति परिहरति **नेति । स्वगुणेति** । स्वगुणग्राहकमिन्द्रियं श्रोत्रमित्यत्र यथा स्वशब्दस्य ज्ञानकरणपरत्वेन श्रोत्रपरत्वाभावान्नान्योन्याश्रयादिकं तथा प्रकृतेऽपीत्यर्थः ।

**श्रीनिधि०— आत्माश्रयत्वमन्योन्याश्रयत्वं वेति** । प्रमाणस्य व्यावृत्तत्वेन ज्ञानं लक्षणज्ञानाधीनम् । तच्च लक्षणं प्रमाणघटितमिति स्वज्ञानेन स्वज्ञानापेक्षया आत्माश्रयत्वमित्यर्थः । **अन्योन्याश्रयत्वं वेति** । प्रमाणज्ञेयानतिवर्तनरूपलक्षणे ज्ञाते व्यावृत्तलक्ष्यज्ञानं तस्मिन् ज्ञाते तद्घटितलक्षणज्ञानमित्यन्योन्याश्रयत्वमित्यर्थः ।

**शे०वा०—** भाष्यकारीयमतिव्याप्तिनिराकरणं दोषान्तरनिरासोपलक्षणमित्यभिप्रेत्य दोषान्तरमाशङ्कते **ननु तथाऽपीति** । अतिव्याप्तिपरिहारेऽपीत्यर्थः । नेदं लक्षणमिति शेषः । लक्षणदोषाभावे कुतो न लक्षणत्वमित्यतोऽतिव्याप्त्यभावेऽप्यसम्भवाख्यतद्दोषान्न लक्षणत्वमित्याशयवानसम्भवमुपपादयति **अन्योन्याश्रयत्वमित्यादि** । यतोऽत्र भवतीति शेषः । अन्योन्याश्रयादिकमुपपादयति **स्वशब्देन प्रमाणस्येति** । अननुसंहितोपाधेरुपहितप्रत्ययायोगात् स्वशब्दार्थभूतप्रमाणज्ञाने सत्येव विषयस्य प्रमाणज्ञेयत्वसिद्धिस्तज्ज्ञेयत्वसिद्धौ च तद्विषयीकारिप्रमाणसिद्धिरित्यन्योन्याश्रयत्वम् । प्रमाणं स्वसिद्ध्यर्थं स्वज्ञेयमपेक्षमाणमन्ततः स्वात्मानमपेक्ष्यत एवेत्यात्माश्रयत्वमिति भावः । स्वशब्देन प्रमाणस्याभिधानेऽपि ज्ञानत्वेन तत्करणत्वेनैव च रूपेण तदभिधानस्याभिमतत्वेन प्रमाणत्वेन रूपेण तदभिधानानङ्गीकारान्नोक्तरीत्याऽन्योन्याश्रयादिप्रसङ्ग इति नासम्भवो लक्षणस्येत्याशयेन समाधत्ते **ज्ञानतत्करणमात्रेति** । प्रमाणत्वेन रूपेण प्रमाणस्य स्वशब्देनानभिधानेऽपि ज्ञानत्वादिरूपेणाभिधानात् कथमन्योन्याश्रयादिनिरास इत्यतो न यथाकथञ्चित् स्वशब्देन प्रमाणस्याभिधानमात्रेणान्योन्याश्रयत्वादि किन्तु लक्ष्यतावच्छेदकरूपेण तदभिधान एवेति परेणाङ्गीकारयितुमनुरूपं दृष्टान्तमाह **स्वेति** । अत्र हि स्वशब्देन श्रोत्रत्वेन रूपेण श्रोत्रग्रहणे उक्तरीत्याऽन्योन्याश्रयादिप्राप्त्येन्द्रियत्वादिना रूपेण श्रोत्रग्रहणेन श्रोत्रत्वेन रूपेण तदनभिधानान्नान्योन्याश्रयादीति नासम्भव इत्येव परेण समाधीयते । तत्र यदि यथाकथञ्चित्प्रमाणाभिधानेऽपि प्रकृतलक्षणेऽन्योन्याश्रयाद्यपरिहारेणासम्भव इति मन्यसे तदा परकीयलक्षणेऽपि श्रोत्रस्य श्रोत्रत्वेन रूपेण स्वशब्देनानभिधानेऽपि यथाकथञ्चिदभिधानस्य परेषामपि सम्मतेरन्योन्याश्रयाद्यपरिहारापत्त्या तल्लक्षणस्याप्यसम्भव एव स्यादिति लक्ष्यतावच्छेदकरूपेण लक्ष्यस्य स्वशब्देनाभिधान एवान्योन्याश्रयादि भवति । न तु यथाकथञ्चित् तदभिधानमात्रेणेति परेषामपि सम्मतमेवेति न प्रकृतलक्षणस्याप्यसम्भव इति भावः ।





**वा०र०— अननुसंहितोपाधेरित्यादिना** । अत्र ज्ञप्तावन्योन्याश्रय इति ध्वनयितुं अननुसंहितेति प्रत्ययायोगादिति चोक्तं **परेषामपीति** । एतच्च स्वगुणग्राहकमिति लक्षणं अभियुक्तोक्तित्वेन सर्वसम्मतमिति परेषामिति सामान्येनोक्तम् ।

**स०व्र०— अन्योन्याश्रयत्वमात्माश्रयत्वं वेति** । प्रमाणत्वे ज्ञाते प्रमाणज्ञेयत्वज्ञानसम्भवात् तद्घटितलक्षणज्ञाने सति तस्मिन् अनुप्रमाणत्वज्ञानमित्यन्योन्याश्रयः । प्रमाणत्वज्ञाने प्रमाणत्वज्ञानस्यापेक्षणात् आत्माश्रयत्वमित्यर्थः । **स्वगुणग्रहणमिति** । अत्र स्वशब्देन श्रोत्रस्य ग्रहणे स्वज्ञाने स्वज्ञानापेक्षया आत्माश्रयत्वम् । अन्योन्याश्रयत्वं वा स्यात् । तन्निरासायैव स्वशब्देन इन्द्रियमात्रग्रहणात् यथा अन्योन्याश्रयाद्यभावः, तथा प्रकृतेऽपि स्वशब्देन ज्ञानतत्कारणयोरेव ग्रहणान्न दोषः ।

**विठ्ठल०— ननु तथापीति** । स्वशब्देन प्रमाणस्याभिधानात्स्वशब्दितप्रमाणज्ञप्तौ तज्ज्ञेयत्वज्ञप्तिः तज्ज्ञप्तौ च तद्विषयीकारिप्रमाणज्ञप्तिरित्यन्योन्याश्रयत्वम् । स्वज्ञेयमपेक्षमाणमन्ततः स्वमेवापेक्षत इति स्वात्माश्रयत्वं चेत्यर्थः । **स्वगुणग्राहकमिति** । परेणापि स्वशब्देन सामान्यत आकाशो गृह्यत इति भावः ।

**॥ इति एतेन दोषान्तरनिरासोऽपि ज्ञेयः ॥**

**॥ इति अतिव्याप्तिशङ्कापरिहारः ॥**

**॥ इति क्रियाविषयेषु यथार्थत्वस्य अतिव्याप्तिशङ्का तत्परिहारश्च ॥**

* * *

**॥ अथ प्रमाणस्य ज्ञेयाव्यभिचारित्वं विकल्पदूषणेन स्पष्टयति ॥**

**॥ अथ अद्वैतिनाऽपि अस्यार्थस्य निर्वक्तव्यत्वम् ॥**

**॥ तत्र उपायान्तराभावः ॥**

**८९ सु०— ननु किमिदं प्रमाणस्य ज्ञेयाव्यभिचारित्वं नाम; किं प्रमेयव्याप्यत्वं, किंवा यावत्प्रमेयगोचरत्वम् ॥ आद्येऽपि व्याप्तिः किं देशतः किंवा कालतः । न प्रथमः, प्रमाणासमानदेशार्थविषयप्रमाणेष्वव्याप्तेः । न द्वितीयः, अतीतादिविषयप्रमाणाव्याप्तेः ॥ नान्त्यः । असर्वज्ञज्ञानानां तत्करणानां वाऽप्रामाण्यप्रसङ्गादिति ।**

**मैवम् । अद्वैतागमादेस्तत्त्वावेदकत्वलक्षणं प्रामाण्यमभ्युपगच्छता परेणा(पि तस्या)प्यस्यार्थस्य निर्वक्तव्यत्वात् ।**





**परि०**— अव्यभिचारशब्दार्थस्य व्याप्तिरूपत्वादाह **प्रमेयव्याप्यत्वमिति** । प्रकृतप्रमाणस्य सविषयकत्वात् तदभिप्रायेणाह **यावदिति** । **प्रमाणासमानदेशेति** । घटादिविषयकप्रमातत्साधने-ष्वित्यर्थः । स्वरूपसुखादिविषयकसाक्षिणि त्वस्ति समानदेशत्वमित्यव्याप्तेरित्युक्तम् । पररीत्या सुखादिज्ञानस्य समानदेशत्वमस्तीति वा एवमुक्तम् ।

**गु०दी०**— अहमिति साक्षिज्ञानस्य प्रमेयसमानदेशत्वात् तद्व्यवच्छेदाय असमानविषयेत्युक्तम् । घटमात्रविषयप्रमाणस्यापि यावत्प्रमेयव्यापित्वेऽतीतानागतसकलघटविषयत्वस्याप्यापातेन सर्वज्ञत्वापरिहारादिति भावेनोक्तं **असर्वज्ञविज्ञानानामिति** । तदेव हि तत्त्वावेदकं यत्तत्त्वमेवावेदयति नातत्त्वम् । अन्यथा भ्रमस्या-प्यधिष्ठानरूपतत्त्वावेदनरूपत्वेन तत्करणस्यापि तत्त्वावेदकत्वप्रसङ्गः । एवं च तत्त्वाव्यभिचारित्वमेव तत्त्वा-वेदकत्वमिति भावेनोक्तं **अद्वैतागमादेरिति** । यद्यपि करणत्रयस्याप्यनुप्रमाणत्वादमुख्यमेव याथार्थ्यम् । तथाऽपि यथार्थज्ञानकरणत्वस्य वेदे नियतत्वरूपमुख्यत्वमादाय शब्दे मुख्यमित्युक्तम् ।

**यादु०**— **किं प्रमेयव्याप्यत्वमिति** । धूमादौ वह्निव्याप्यत्वस्यैवाव्यभिचारतया प्रसिद्धत्वात् तदनु-सारेणायं कल्पः । **किं वा यावदिति** । व्यभिचारो हि परित्यागः । एवं च प्रमाणं प्रमेयं न व्यभिचरति न परित्यजति सर्वमपि गृह्णातीति यावदित्यर्थविवक्षयाऽयं कल्पः । अन्ये तु आभिमुख्येन चारोऽभिचारस्तदभावो व्यभिचारस्तदभावोऽव्यभिचारित्वम् । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति न्यायेन यावत्प्रमेयगोचरत्वं लभ्यत इत्यभिप्रायेणायं कल्प इत्याहुः । **प्रमाणासमानेति** । **ज्ञानकरणरूपप्रमाणाभ्यामसमानेति** । ज्ञान-करणरूपप्रमाणाभ्याम् असमानदेशा ये घटादयोऽर्थाः तज्ज्ञानादीनां प्रामाण्यं न स्यादित्यर्थः । सुखादीनां तत्तज्ज्ञानानां चात्मसमवेततया समानदेशत्वमस्तीति तज्ज्ञानप्रामाण्यं सम्भवतीत्यभिप्रायेणाव्याप्तेरित्युक्तम् । **अप्रामाण्यप्रसङ्गादिति** । तथा च याथार्थ्यं दुर्निरूपमिति शङ्कितुराशयः । **परेणाप्यस्येति** । याथार्थ्यशब्दार्थ-स्येत्यर्थः । एवं च तदेवास्माकमपि याथार्थ्यमित्यग्रिमवाक्यं श्लिष्टं भवतीति ध्येयम् ।

**वं०प०**— धूमादौ वह्निव्याप्तत्वरूपस्यैवाव्यभिचारस्य दृष्टत्वात् तदनुसारेण प्रमेयव्याप्तत्वमित्याद्यः कल्पः । **यद्वा यावदिति** । किञ्चिज्ज्ञेयं विषयीकरोति किञ्चिज्ज्ञेयं नेत्येवंरूपो व्यभिचारो न । किन्तु यावज्ज्ञेयविषयकत्वं लभ्यत इति भावः । **प्रमाणेत्यादि** । प्रमाणेनासमानदेशो भिन्नदेशो योऽर्थस्तद्विषयाणि यानि प्रमाणानि तेष्वव्याप्तिरित्यर्थः । ततश्च यत्र ज्ञानरूपं प्रमाणं तत्र ज्ञेयमिति न व्याप्तिः । आत्मनि ज्ञानस्य सत्त्वेन तत्र ज्ञेयभूतघटादेरभावादिति ध्येयम् । ननु नाव्याप्तिः । यत्र ज्ञानं तत्र ज्ञेयमिति व्याप्तेः सत्त्वात् । सुखादिज्ञानस्यात्मनिष्ठत्वेन तद्विषयसुखादेरप्यात्मनिष्ठतया समानदेशत्वादित्यतः प्रमाणासमानदेशार्थेत्युक्तम् । **अतीतादीति** । तथा च यदा ज्ञानं तदा ज्ञेयमिति नास्ति व्याप्तिः । अतीतादिविषयज्ञानस्येदानीं सत्त्वेऽपि तद्विषयवस्तुनोऽतीतादेरिदानीमभावादव्याप्तिरित्यर्थः । **असर्वज्ञेति** । असर्वज्ञानां पुरुषाणामित्यर्थः । यावत्प्रमेय-गोचरत्वाभावोपपादनार्थमिदं विशेषणम् । **अस्येति** । तत्त्वावेदकत्वरूपप्रामाण्यलक्षणस्यार्थस्येत्यर्थः ।





**कं०रा०— यावदिति** । सकलप्रमेयगोचरत्वमित्यर्थः । **प्रमाणासमानाधिकरणविषयेति** । अनेन तादृशप्रमाणेषु देशतः प्रमेयव्याप्यत्वाभावादव्याप्तिरित्युपपादयति **असर्वज्ञेति** । असर्वज्ञानामस्मदादीनां यानि विज्ञानानि तेषां तत्करणानां च सकलप्रमेयगोचरत्वाभावेनाप्रामाण्यप्रसङ्ग इति भावः ।

**शे०वा०— ** ज्ञेयाव्यभिचारित्वं किं तत्त्वविषयकत्वमभिमतं किंवा ज्ञेयव्यभिचारशून्यत्वम् । नाद्यः । वक्ष्यमाणरीत्या विभ्रमेऽतिव्याप्तेरित्यभिप्रेत्य द्वितीयं पक्षं प्रतिक्षेप्तुं विकल्पयति **नन्विति** । धूमादौ वह्निव्याप्यत्वरूपतया तदव्यभिचारित्वप्रसिद्धेराद्यकोटिप्रसक्तिः । आभिमुख्येन चारोऽभिचारस्तदभावो व्यभिचारस्तदभावोऽव्यभिचारित्वम् । ततश्च द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायाद्यावत्प्रमेयगोचरत्वं लक्ष्यत इत्यभिप्रायेण द्वितीयकोटिप्रसक्तिरिति ध्येयम् । यद्वा प्रमेयं न व्यभिचरति परित्यजति सर्वमपि गृह्णातीति यावदित्यभिप्रायेण द्वितीयकोटिलाभः । अथवा प्रमाणस्य किञ्चित्प्रमेयमविषयीकृत्य विद्यमानत्वमेव प्रमेयव्यभिचारित्वं, तदभावो यावत्प्रमेयगोचरत्वमेव तदव्यभिचारित्वमित्याशयेन द्वितीयकोटिप्रसक्तिरिति द्रष्टव्यम् । दूषणभागप्रज्ञप्तये आद्यं विकल्पयति **आद्येऽपीति** । धूमाग्न्योरिव किमिहैकदेशसम्बन्धो व्याप्तिः किंवा समुद्रवृद्धिचन्द्रोदयवदेककालनियम इति **प्रश्नार्थः** । तत्राद्यमपवदति **नेति** । हेतुमाह **प्रमाणेति** । ज्ञानतत्करणरूपप्रामाण्येन सह विभिन्नदेशा ये घटाद्या अर्थास्तज्ज्ञानादीनां प्रामाण्यं न स्यात् । ज्ञानस्यात्मैकगुणस्यात्मनिष्ठत्वात् करणानां च देहनिष्ठत्वात् घटादीनां धराद्यधिकरणत्वादिति भावः । आत्मसमवेता ये सुखादयः तज्ज्ञानानामप्यात्मसमवेतत्वेन समानदेशत्वात् प्रमाणत्वं सम्भवतीत्याशयेनोक्तं **प्रमाणासमानदेशेति** । उपलक्षणं चैतत् । देहादावात्मत्वादिभ्रमेऽतिव्याप्तिः । तत्रात्मत्वादिधर्मस्यान्यत्र देहादावारोपकज्ञानानामारोप्यमाणधर्मस्यात्मत्वादेश्चात्ममात्रनिष्ठत्वेन देशाव्यभिचारस्य सत्त्वादित्यपि द्रष्टव्यम् । एककालसम्बन्ध एव प्रमाणप्रमेययोर्व्याप्तिरिति द्वितीयोऽपि नेत्याह **नेति** । कुत इत्यत आह **अतीतेति** । अतीतानागतविषयानुमानागमयोरव्याप्तेरित्यर्थः । विशिष्टनदीपूरेण लिङ्गेनाभूद्वृष्टिरित्यनुमीयते मेघोदयदर्शनाच्च भविष्यति सेति । तत्रानुमेयार्थेन वृष्ट्यनुमानस्यासमानकालत्वादनुमाने, कालान्तरभाविनियोगादिबोधकागमादेरप्यर्थेन असमानकालत्वादागमे चाव्याप्तिरिति भावः । **असर्वज्ञविज्ञानानामिति** । तेषां यावत्प्रमेयगोचरत्वाभावात् तद्भावे च सर्वेषामपि सार्वज्ञ्यं स्यादित्याशयेनासर्वज्ञेति हेतुगर्भं विशेषणम् । तत्त्वविषयकत्वमेव ज्ञेयाव्यभिचारित्वमिह विवक्षितमिति न ज्ञेयाव्यभिचारित्वस्य दुर्निरूपत्वमित्याशयेनाद्यपक्षोक्तदोषपरिहारं परेणैव वाचयितुं गूढाभिसन्धिः प्रतिबन्दीमुपादत्ते **मैवमिति** । **अस्यार्थस्येति** । भ्रमव्यावृत्ततत्त्वावेदकत्वशब्दार्थस्येत्यर्थः ।

**वा०र०— वक्ष्यमाणरीत्येति** । इदमाकारस्य सत्त्वेन भ्रमेऽतिव्याप्तेरित्यर्थः । समुद्रवृद्धिचन्द्रोदयवत् एककालनियमोऽविनाभाव इत्येकं शृङ्गिग्राहकमाह **किमिति** । धूमाग्न्योरिव एकदेशसम्बन्धोऽविनाभावः इत्यपरं शृङ्गमाह **धूमाग्न्योरिवेति** । यद्यपि व्याप्तिशब्दार्थं पृथगेव विवक्षितत्वात् तच्छरीरान्तर्गताधिकरणं किं देशरूपं उत कालरूपं इत्येव प्रष्टुः अभिप्रायः प्रतीयते इति व्याप्तिशरीरे द्वैविध्यप्रदर्शनं अयुक्तमित्याभाति तथापि





व्याप्तिशरीरान्तर्गतताधिकरणे विशेषविकल्प्ये सति तच्छरीरस्यैकदेशसम्बन्धनीयमादावेव पर्यवसानं इत्याशयेन किं एकदेशसम्बन्धो व्याप्तिः इत्याद्युक्तम् । अत्र च खण्डनटीकानुसारेण एकदेशसम्बन्धः इत्युक्तत्वेऽपि असाधारण्येन व्यपदेशा भवन्तीति अन्या येन एकदेशसम्बन्धनियमः इति व्याख्येयम् । अत एव खण्डनादौ यत्राग्निः तत्रैव धूम इत्याद्युक्तम् । कालनियम इत्यनन्तरं व्याप्तिरिति वर्तते । कालनियमः इत्येतत् व्यभिचारराहित्यार्थतया व्याख्येयम् । तेन नियमरूपव्याप्तिघटितव्याप्तिशरीराङ्गीकारे आत्माश्रयशङ्कानवकाशः । अत एव वक्ष्यति **एककालसम्बन्ध एवेति** । तथा च व्यभिचारितो देशसम्बन्धः तादृशः कालसम्बन्धो वेति फलतीति बोध्यम् । **ज्ञानस्यात्मैकेति** । न्यायरीत्या चेदम् । स्वमतेऽन्तःकरणगुणस्येति वाच्यम् । एवमुत्तर-त्रापि ज्ञानसमानदेशमर्थं अन्यत्रारोपयतोऽप्यनुभवस्य प्रमात्वापातः इत्येतत् अव्याप्तिपरखण्डनानुसारेणोप-लक्षणमाह **उपलक्षणं चैतदिति । आत्मत्वादिधर्मस्येति** । आत्मत्वादिधर्मस्यान्यत्र धर्मादावारोपकाणि यानि ज्ञानानि तेषाम् । देहादौ आत्मत्वादिप्रकाशयतां आरोपरूपज्ञानानामिति यावत् । आरोपयतोऽपि अनुभवस्येत्येतत् खण्डनस्यायं अर्थानुवादः इति बोध्यम् । **मेघोदय इति** । विशिष्टमेघोदयेत्यर्थः । **अनुमान इति** । अव्याप्तिरिति वक्ष्यमाणेनान्वयः । **कालान्तरेति** । कालान्तरभावि यत् नियोगादि अपूर्वस्वर्गादि तत् बोधकेत्यर्थः । शब्दार्थत्वसम्भवात् इत्यनन्तरं न हि अस्य भ्रमः इति पाठः । न भ्रमेऽतिव्याप्तिरिति पाठेऽपि न हि अस्य भ्रमेऽतिव्याप्तिः इत्येवार्थः ।

**स०व्र०— नन्विति** । धूमादौ वह्नेः व्याप्यत्वरूपस्यैव अव्यभिचारस्य दृष्टत्वात् तदनुसारेण आद्यः कल्पः । आभिमुख्येन चारः तदभावो व्यभिचारः । तदभावः अव्यभिचारित्वम् । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति न्यायेन यावत्प्रमेयगोचरत्वं लक्ष्यत इत्यभिप्रायेण द्वितीयः कल्पः इति ध्येयम् । धूमाग्न्यो-रिवैकदेशसम्बन्धः अविनाभावः इत्येकं शृङ्गमाह **किं देशत इति** । समुद्रवृद्धिचन्द्रोदयवत् एककालनियमः अविनाभावः इत्यपरं शृङ्गमाह **किं वेति** । एकदेशसम्बन्धो ज्ञानज्ञेययोरविनाभाव इति प्रथमं निराह **प्रथम इति** । प्रमाणेन सह विभिन्नदेशा ये घटाद्यर्थाः तज्ज्ञानानां प्रमात्वं न स्यात् । ज्ञानादिरूपप्रमाणस्य आत्मगुणस्य तन्निष्ठत्वात् घटादीनां धराद्यधिकरणत्वादिति भावः । आत्मसमवेताः सुखादयः । तज्ज्ञानानामात्मसमवेततया समानदेशत्वात् प्रमात्वं सम्भवतीत्यत उक्तम् **प्रमाणासमानदेशेति** । अव्याप्तेरित्युपलक्षणम् । देहादावात्म-त्वादिभ्रमे अतिव्याप्तेरिति द्रष्टव्यम् । नान्त्य इत्याह **नेति** । तत्र हेतुमाह **अतीतेति** । विशिष्टनदीपूरलिङ्गेन अभूद्वृष्टिरित्यनुमीयते । विशिष्टमेघोदयदर्शनात् भविष्यतीति । न चानुमानकाले सोऽर्थोऽस्तीति तत्राव्याप्ति-रित्यर्थः । न चानुमितिकाले अर्थातीतत्वस्य सत्त्वात् कालतः समानदेशत्वोपपत्तिरिति वाच्यम् । तावता-प्यर्थस्यापि विषयत्वात् तस्य चासमानकालत्वाभिप्रायेण तदभिधानात् । आदिपदेन कालान्तरभाविनियोगा-दिबोधकागमाद्युपादीयते । **तस्यार्थस्य निर्वक्तव्यत्वादिति** । तत्त्वावेदकत्वलक्षणस्यार्थस्य निर्वक्तव्यत्वा-दित्यर्थः । तथा च परस्य यत्तत्त्वावेदकत्वशब्दार्थत्वेनाभिप्रेतं, तदेवास्माकमपि ज्ञेयव्यभिचारित्वाभावेऽप्यस्तीति भावः ।





**विठ्ठल०— प्रमाणासमानेति** । देशान्तरीयघटादिविषयकप्रमाणतत्साधनेष्वित्यर्थः । सुखादिविषयकसाक्षिणस्त्वस्ति सामानाधिकरण्यमित्यव्याप्तेरित्युक्तम् **असमानदेशेति** । क्वचित्पाठः **परेणाप्यस्येति** । याथार्थ्यशब्दार्थस्येत्यर्थः ।

* * *

**॥ अथ 'पराङ्गीकृतेन व्यवहारो, न किमपि लक्षणं व्यवस्थाप्यते' इतिमतस्य दूषणम् ॥**

**९० सु०— परेणाङ्गीकृतमुपादा(य मया व्यव)यास्माभिर्व्यवह्रियते न तु किमपि लक्षणं व्यवस्थाप्यत इति चेन्न, स्वप्रतिपत्तावव्श्याश्रयणीयत्वाद्व्यवस्थायाः; न हि स्वप्रकाशं तत्त्वमित्येतावता, विना वेदान्ताधिगमं, तदधिगमः शक्योऽङ्गीकर्तुम् ।**

**अथावेदितस्य सत्त्वं तत्त्वावेदकत्वमिति निर्ब्रूयात्तदा विभ्रमेऽतिव्याप्तिः स्यात्, तत्राप्यावेदितस्येदमाकारस्य सत्त्वात् ।**

**अथ यावदावेदितस्य सत्त्वं तत्त्वावेदकत्वं सदेकगोचरत्वमिति यावदिति वदेत्; तदेवास्माकमपि याथार्थ्यमिति वदामः ।**

**परि०— तस्येति** । तत्त्वावेदकत्वरूपप्रामाण्यस्येत्यर्थः । शङ्कते **परेणेति** । द्वैतवादिनेत्यर्थः । **(अस्माभिरिति) मयेति** । अद्वैतवादि(भिः)ना । **स्वप्रतिपत्तौ** स्वस्य ज्ञानार्थम् । ननु तत्त्वस्य स्वप्रकाशतया प्रमाणानपेक्षत्वान्न तत्त्वप्रतिपत्त्यर्थं प्रामाण्यं मया निर्वक्तव्यमित्यत आह **न हीति** । निर्वचननिर्बन्धेऽवश्यम्भाविनि परस्तत्त्वावेदकत्वरूपप्रामाण्यं निर्वक्ति **अथेति** । यावदावेदितसत्त्वस्य प्रमाणनिष्ठतया असम्भववारणायाह **सदेकेति** ।

**यादु०—** नन्वस्मन्मते यत्तत्त्वं मतं तत्स्वप्रकाशं न प्रमाणवेद्यमतो मया न प्रमाणस्य तत्त्वावेदकत्वं निर्वक्तव्यमित्यत आह **न हि स्वप्रकाशमिति** । अन्यथा दर्शनार्थं श्रवणादिविधिवैयर्थ्यप्रसङ्गादिति भावः । यावदावेदितसत्त्वस्य प्रमाणनिष्ठत्वाभावादाह **सदेकगोचरत्वमिति** ।

**वं०प०— तदधिगमः** तत्त्वाधिगमः । तथा च वेदान्तेनैव तत्त्वाधिगमस्य जायमानत्वेन तत्त्वावेदकत्वरूपं प्रामाण्यमवश्यमभ्युपेयम् । तच्च त्वया निर्वक्तव्यमेवेत्यर्थः । आवेदितस्य विषयीकृतस्य । **यावदिति** । तथा च न भ्रमेऽतिव्याप्तिः । रजतादेरसत्त्वेन यावदावेदितस्य सत्त्वाभावादित्यर्थः । **एवमपि** सदेकगोचरत्वमेव याथार्थ्यमित्यङ्गीकार इत्यर्थः ।





**कं०रा०—** नन्वस्मन्मते चैतन्यं तत्त्वं तच्च स्वप्रकाशत्वेन स्वतःसिद्धत्वान्न प्रमाणाधीनसिद्धिक्रमतो न प्रमाणलक्षणमस्माभिर्निर्वक्तव्यमित्यत आह **न हीति** । तत्त्वं स्वप्रकाशमित्येतावता वेदान्तज्ञानं विना विप्रकाशतत्त्वस्याधिगमोऽङ्गीकर्तुं न हि शक्यः । अत्रायं पुरुषः स्वयंज्योतिरित्यादि वेदान्तेनैव स्वप्रकाशरूपतत्त्वस्य ज्ञेयत्वादिति भावः ।

**श्रीनिधि०—** **स्वप्रतिपत्ताविति** । व्यवहारस्यान्यथोपपत्तावपि स्वप्रतिपत्तिर्नान्यथोपपन्नेत्यर्थः । तदेवोपपादयति **न हीति** । **विना वेदान्ताधिगममिति** । तदधिगमश्च न प्रमाणादिस्वरूपज्ञानमन्तराशक्य इति भावः । तथा च स्वव्याहतिरिति हृदयम् । **सदेकगोचरत्वमिति** । केवलसद्गोचरत्वमित्यर्थः ।

**शे०वा०—** परं प्रति व्यवहारदशायां पराङ्गीकृतमुपादाय व्यवहारोपपत्तावपि स्वस्य प्रामाण्यप्रतिपत्त्यर्थं लक्षणव्यवस्थाऽवश्याश्रयणीयेत्याह **स्वप्रतिपत्ताविति** । अन्यथा तत्त्वप्रतिपत्त्यर्थं तदुपादानं न स्यादिति भावः । ननु स्वप्रनिपत्तावपि न मया व्यवस्थाऽवश्याश्रयणीया तत्त्वस्य स्वप्रकाशत्वेन प्रमाणावेद्यत्वादित्यत आह **न हीति** । अन्यथा दर्शनार्थं श्रवणादिविधिवैयर्थ्यप्रसङ्गादिति भावः । भ्रमव्यावृत्तं तत्त्वावेदकत्वं निर्वक्तव्यमिति प्रतिबन्दीमाददानस्याशयमजानानः शङ्कते **अथेति** । भ्रमसाधारणत्वान्नायं तत्त्वावेदकत्वशब्दार्थ इति स्वाभिसन्धिमुद्घाटयति **सत्त्वादिति** । रजतं नेति रजतांशे बाधवदिदं नेति बाधाभावान्नेदमास्पदस्य भ्रमेऽसत्त्वमिति भावः । भ्रमव्यावृत्ततत्त्वावेदकत्वशब्दार्थं परेणैव वाचयति **अथेति** । तथा च न भ्रमेऽतिव्याप्तिः । तत्रेदमास्पदस्य सत्त्वेऽपि यावदावेदितं तस्य सत्त्वाभावादिति भावः । नन्वेवं माऽस्त्वतिव्याप्तिर्यावदावेदितसत्त्वरूपतत्त्वावेदकस्य यावदावेदितमात्रवृत्तित्वेन प्रमाणमात्रवृत्तेरसम्भवः स्यादित्यत आह **सदेकेति** । तथा च नोक्तदोषद्वयमपीति भावः । एवं तर्हि मन्मतेऽपि न ज्ञेयाव्यभिचारित्वस्य दुर्निरूपत्वरूपतत्त्वावेदकत्वस्यैव ज्ञेयाव्यभिचारित्वशब्दार्थत्वसम्भवात् ततश्च न भ्रमेऽतिव्याप्तिरिति स्वाभिसन्धिमुद्घाटयति **तदेवेति** ।

**स०व्र०—** **तदधिगम इति** । स्वप्रकाशत्वाधिगम इत्यर्थः ।

**विठ्ठल०—** नन्वस्मन्मते यत्तत्त्वं तत्स्वप्रकाशं न प्रमाणवेद्यं अतो न मया तत्त्वावेदकत्वरूपप्रमाणलक्षणं निर्वक्तव्यमित्यत आह **न हीति** । यावदावेदितस्य सत्त्वस्य प्रमाणनिष्ठताया असम्भववारणायाह **सदेकेति** । तर्हि नास्मन्मतेऽप्यतिव्याप्तिरित्यत आह **मायावादीति** । परिहरति **मैवमिति** ।

**९१ सु०— ननु एवमपि भ्रमेऽतिव्याप्तिः । न हि इदमंशो वा रजतत्वादिजातिर्वा तत्सम्बन्धः समवायो वा तत्तादात्म्यं वा न सत् । अन्यत्र सत्त्वेऽप्यत्रासदिति चेत्, न हि देवदत्तो गृहेऽसन्नित्यसन्नेव । न चायमस्त्यस्माकं प्रसङ्गः, अधिष्ठानेतरस्य सर्वस्य अनिर्वचनीयतयाऽङ्गीकारादिति । मैवम्, अस्माभिरपि तस्यात्यन्तासत्त्वस्वीकारात् ।**





**परि०**— न्यायमतरीत्या शङ्कते **नन्वेवमिति** । **तत्तादात्म्यमिति** । रजततादात्म्यमित्यर्थः । **तस्येति** । अधिष्ठानेतरस्येत्यर्थः । तादृशस्याप्यारोपो जिज्ञासाधिकरणे समर्थित इति भावः ।

**यादु०**— विशेष्यं विशेषणं तत्संसर्गश्चेति त्रयमेव विशिष्टज्ञानेऽवभासते । इदं रजतमिति विशिष्टज्ञानेऽवभासमानं तत्त्रयं सदेव । अतः सदेकगोचरत्वं तत्रातिव्याप्तमित्याशयेनोपपादयति **न हीति** । रजतत्वजातिरित्युपलक्षणम् । रजतमित्यपि ग्राह्यम् । तादात्म्यारोपे रजतस्य विशेषणत्वम् । अत एवाह **तत्तादात्म्यं वेति** । **न हि देवदत्त इति** । तथा च सदेकगोचरत्वमक्षतमेवेति भावः । **तस्येति** । अधिष्ठानेतरस्येत्यर्थः ।

**वं०प०**— **समवायो वेत्यादि** । संसर्गतादात्म्यारोपद्वयाभिप्रायेण । **अत्र** पुरोदेशे । **असन्नेव** सर्वथेति शेषः । तथा च पुरोदेशेऽत्रासत्त्वमात्रेण सर्वत्राप्यसत्त्वं न वाच्यम् । तथात्वे गृहेऽसत्त्वमात्रेण देवदत्तोऽप्यसन्नेव स्यादतो रजतत्वादेरन्यत्र सत्त्वेन भ्रमस्यापि सदेकगोचरत्वादतिव्याप्तिः स्यादेवेत्यर्थः । ननु यावदावेदितस्य सत्त्वं तत्त्वावेदकत्वमित्यङ्गीकर्तुस्तव मतेऽप्यस्य तत्त्वावेदकत्वलक्षणस्योक्तरीत्या भ्रमेऽतिव्याप्तिः स्यादेवेत्यत आह **न चायमिति** । **अस्माकम्** एवंविधं तत्त्वावेदकत्वलक्षणं वदताम् । प्रतीयमानरजतादेरिति शेषः । यावदावेदितस्य सत्त्वं मया नाङ्गीक्रियत इति मन्मते नातिव्याप्तिरित्यर्थः । **अस्माभिः** यावदावेदितस्य सत्त्वमेव याथार्थ्यमिति वदद्भिः । **तस्य** अधिष्ठानेतरस्य सर्वस्य । तथा च त्वद्वदेव मयाऽप्यतिव्याप्तिः परिह्रियते । परन्त्वेतावान्विशेषः । त्वयाऽधिष्ठानेतरस्य सर्वस्य प्रतीयमानस्यानिर्वचनीयत्वमङ्गीकृत्यातिव्याप्तिः परिह्रियते । मया त्वत्यन्तासत्त्वमङ्गीकृत्येति । तथा च सदेकगोचरत्वमेव याथार्थ्यमिति भावः ।

**कं०रा०**— **तस्येति** । अधिष्ठानेतरस्येत्यर्थः ।

**शे०वा०**— सदेकगोचरत्वं भ्रमव्यावृत्तत्वात् स्वमते भवति प्रामाण्यं न त्वन्मते भ्रमसाधारणत्वादिति वैषम्यान्न प्रतिबन्दीग्रहणमुपपद्यत इत्याशयेन शङ्कते **नन्वेवमपीति** । कथं भ्रमस्य सदेकगोचरत्वमित्यतो भ्रमस्य संसर्गारोपत्वेन तादात्म्यारोपत्वेन च द्वैविध्याद् द्विविधारोपविषयप्रदर्शनपूर्वकं तत्सत्त्वमुपपादयति **न हीति** । भ्रमस्य विशिष्टज्ञानत्वात् तत्र विशेष्यविशेषणतत्संसर्गाणामेव भानं वाच्यम् । तत्र इदमिति द्विविधारोपेऽपि भासमानविशेष्यप्रदर्शनम् । तादृशं विशेषणं दर्शयति **रजतत्वादिजातिरिति** । एतच्च संसर्गारोपाभिप्रायेण । तादात्म्यारोपे रजतमित्यपि ग्राह्यम् । संसर्गारोपे भासमानं संसर्गं दर्शयति **तत्सम्बन्धः समवायो वेति** । रजतत्वादिजातिसम्बन्ध इत्यर्थः । तादात्म्यारोपे भासमानं सम्बन्धमाह **तदिति** । विशेषणीभूतरजतादितादात्म्यमित्यर्थः । यद्वा नन्वेवमिति ग्रन्थस्यायमर्थः । सद्गोचरत्वं प्रामाण्यमित्युक्ते भ्रमेऽतिव्याप्तिस्तन्निरासार्थमेकेति विशेषणमिति वक्तव्यम् । न च तद्युक्तम् । एवं विशेषणेऽप्यतिव्याप्तेस्तादवस्थ्यादिति । मिथ्याध्यवसायो विपर्यय इति तल्लक्षणपर्यालोचनया सदेकगोचरत्वाभावादुक्तलक्षणव्यावृत्तिः प्रतीयते तत्कथं





ऽनुत्पादकत्वमित्यर्थः । पूर्वयोजनायां वाक्यभेददूषणं मन्वान आह **यद्वेति** । ज्ञातताऽनुत्पादकत्व-हेतोरत्र पक्षे को दोष उक्त इत्यत आह **तथा चेति** । **व्यापकेति** । प्रामाण्यस्य व्यापकभूत-ज्ञाततोत्पादकत्वस्य या अनुपलब्धिस्तल्लिङ्गकमित्यर्थः ।

**यादु०— तदभावादिति** । ततश्च स्मृत्यादिकं न प्रमाणं ज्ञातताऽजनकत्वाद्विभ्रमादिवदिति प्रयोगो द्रष्टव्यः । अत्र व्यभिचारमाह **तथा चेति** । 'न परिच्छेदकार्येव प्रमाणमि'ति मूलांशस्याभिप्रायान्तरमाह **किञ्च धारावाहिकेति** । 'प्रमाणमेव परिच्छेदकारीति च ने'त्यपि योजनामभिप्रेत्याह **अपि चेति** ।

**वं०प०— न चेत्यादि** । तथा च स्मृतिरप्रमाणं ज्ञातताऽजनकत्वात् संशयादिवदित्यनुमानं बोध्यम् । **वर्तत** ज्ञातताया एवाप्रामाणिकत्वादिति भावः । **(न) ज्ञाततेति** । ज्ञाते पुनर्ज्ञातताया अजननादित्यर्थः । **समानेति** । घटादिज्ञानसमानेत्यर्थः । अनुभवेनैव ज्ञातताजननाङ्गीकारात् संशय-विपर्यययोरप्यनुभवत्वादित्यर्थः । **विपक्षात** प्रत्यक्षादेः । **सपक्षात्** संशयादेः । **तथा चेति** । परिच्छेद-कारित्वस्य प्रामाण्यव्यापकत्वे एव प्रमाणाभावाद्व्यापकीभूतपरिच्छेदकारित्वाभावेन स्मृत्यादेरप्रामाण्यानुमानं दूरनिरस्तं ध्येयम् ।

**कं०रा०— तथा चेति** । ज्ञाततायां प्रमाणाभावेन ज्ञातताया एवासत्त्वे स्मृत्यादिकमप्रमाणम् । ज्ञातताजनकत्वाभावादित्यप्रामाण्यसाधकत्वेनोक्तां ज्ञाततां प्रत्यक्षे जनकत्वसपक्षे विभ्रमादाविव विपक्षे प्रत्यक्षादावपि वर्तत इति साधारणानैकान्त्यमित्यर्थः । **व्यापकेति** । प्रामाण्यव्यापकज्ञाततोत्पादकत्वस्य या अनुपलब्धिस्तल्लिङ्गकतेत्यर्थः ।

**श्रीनिधि०— सपक्षे विभ्रमादाविवेति** । अप्रामाण्यानुमाने अप्रामाण्यस्य विभ्रमादेः सपक्षत्वात् । प्रमाणस्य च प्रत्यक्षादेः विपक्षत्वात् । **धारावाहिकविज्ञानानीति** । तेषां प्रमाणादिति भावः । **स्मृत्यादिक-मिवेति** । पूर्वोक्तन्यायसाम्यादिति भावः । **व्यापकानुपलब्धिलिङ्गमिति** । ज्ञातताजनकत्वानुपलब्धिलिङ्ग-मित्यर्थः ।

**शे०वा०—** परिच्छेदकार्येव प्रमाणमित्यवधारणनिषेधेन नियममात्रनिराकरणस्यैव लाभात् तस्य च क्वचित्परिच्छेदकारिणः प्रामाण्येऽप्युपपन्नत्वात् क्वचित्परिच्छेदकारिणः प्रामाण्यमनुमतमिति शङ्कानिरासार्थमाह **एवेति प्रतिवाद्युक्तानुवाद इति** । **तदभावादिति** । अनेन स्मृत्यादिकमप्रमाणं ज्ञातताऽजनकत्वाद्विभ्रमवदिति प्रयोगः सूचितो भवति । ननु मूले ज्ञाततायां प्रमाणाभावोक्त्या परकीयप्रयोगे किं दूषणमुक्तं भवति । ज्ञातताऽजनकत्वहेतोः पक्षसपक्षवृत्तित्वानपायेनासिद्ध्यादेरसम्भवादित्यत आह **तथा चेति** । सपक्षे विभ्रमा-दाविवेत्युपलक्षणम् । पक्षीकृते स्मृत्यादावित्यपि द्रष्टव्यम् । एवं ज्ञाततामनङ्गीकृत्यानैकान्त्योपपादकतया मूलं





योजितम् । इदानीमङ्गीकृत्यापि तामनैकान्त्योपपादकतया मूलं योजयति **किञ्चेति** । अनेन, 'इति' इति 'तदभावात्' इति प्रकृतानुमानपरामर्शः, तस्य साधारणानैकान्त्येनाप्रमाणत्वादिति मूलयोजना सूचिता भवति । कुतो न धारावाहिकज्ञानानां तज्जनकत्वमित्यतस्तेषां स्मृत्यादिसमानयोगक्षेमत्वादिति भावेनोक्तं **स्मृत्यादिकमिवेति** । यथा ह्यनुभवेनैवार्थे ज्ञातताया उपजनितत्वान्न स्मृत्यादेरप्यर्थे तज्जनकत्वमित्युच्यते तथा धारावाहिकेऽपि पूर्वज्ञानेनैवार्थे तज्जननान्नोत्तरज्ञानानां तज्जनकत्वमित्यनैकान्त्यम् । अन्यथा तद्वदेव स्मृत्यादेरप्यर्थे तज्जनकत्वप्रसक्त्या हेतोरसिद्धिः स्यादिति भावः । प्रकृतानुमानस्यासाधारणानैकान्त्येनाप्यप्रमाणत्वादित्यपि योजनामभिप्रेत्याह **अपि चेति** । **समानन्यायत्वादिति** । संशयविपर्ययविषययोर्ज्ञातत्वव्यवहारस्य संशयविपर्यययोर्ज्ञातताजनकत्वकल्पकस्य तुल्यत्वादित्यर्थः । एवं 'परिच्छेदकार्येव प्रमाणमि'ति पर्यवसितानुमानमूलभूतव्याप्तावौदासीन्येनानैकान्त्येन तदनुमानदूषणपरतया मूलं योजितम् । अत्र च पक्षे प्रतिज्ञांशस्य 'इति च प्रमा' इत्यनेन समर्पितहेत्वंशस्य च साक्षाद्धेतुहेतुमद्भावात्तल्लाभाय पर्यवसितानुमानमूलभूतोक्तव्याप्तिखण्डनेन अप्रयोजकत्वलक्षणानुमानदूषणपरत्वेनापि तद्योजयति **यद्वेति** ।

**वा०र०— परिच्छेदकार्येव प्रमाणं इत्यवधारणनिषेधेनेति** । परिच्छेदकार्येव प्रमाणमिति यदवधारणं तन्निषेधेनेत्यर्थः । **प्रामाण्यमनुमतमिति इति** । ननु घटोऽयं इत्यनुभवे परिच्छेदकारित्वप्रामाण्ययोः उभयोः सत्त्वात् । कथं तदनुमितिरनिष्टेति चेत् न । तत्र प्रामाण्यस्य यथार्थज्ञानत्वप्रयुक्तत्वेन परिच्छेदकार्यत्वप्रयुक्तत्वाभावात् । अन्यथा स्वमते अव्याप्तेरदूषणत्वेन तदेव लक्षणं अङ्गीकार्यं स्यात् इत्यतिप्रसङ्गः । न चानुगतलक्षणसम्भवे तदङ्गीकरणं युक्तमिति भावः । तदभावात् इति प्रकृतेति । यद्यपि तदभावादिति भाष्ये नास्ति किन्तु परिच्छेदकार्येव प्रमाणं इत्येवोक्तं तथापि उक्तव्याख्यानावसरेऽभिप्रेततया परिच्छेदकार्येव प्रमाणं तदभावात् स्मृत्यादिकमप्रमाणं इत्येतावतोऽर्थस्य मूले उक्तत्वेन तदनुसारेण तथोक्तमिति ध्येयम् । स्मृतेरर्थे ज्ञातताजनकत्वमनुभवेन तज्जननादिवत् धारावाहिकस्थलेऽपि अनुभवेन तज्जननात् इति विशिष्टहेतूपन्यासानुपपत्तिः । स्मृत्यपेक्षया पूर्वज्ञानस्यानुभवत्वोक्तिसार्थक्येऽपि तत्र तदुक्तेर्व्यर्थत्वात् इत्यतो धारावाहिकस्थले पूर्वं तु ज्ञानत्वरूपेण पूर्वज्ञानं विवक्षितम् । न तु अनुभवत्वेनापीति न दोषः इत्याशयेन दृष्टान्तदार्ष्टान्तिके विशदयति **यथा हीति** । **पक्षादपीति** मूलम् । पक्षमात्रवृत्तिरसाधारण इति तल्लक्षणादिति भावः । **व्याप्तावौदासीन्येनेति** । व्याप्तिसद्भावे प्रमाणाभावात् व्याप्तिरेवानुपपन्ना । ततो व्यापकानुपलब्धिकं अनुमानं दूरापास्तम् इत्येवं वक्ष्यमाणयोजनायां परिच्छेदकार्येव प्रमाणमित्येतत् तस्य भाष्यार्थस्यानुमानौदासीन्येन व्याप्तिखण्डनपरत्वपक्षे भाष्यार्थस्य एकवाक्यता आयाति । भिन्नवाक्यत्वमाश्रित्य उक्तरीत्या अनुमानदूषणपरत्वेनैव योजनायां तु व्याप्तिखण्डने औदासीन्यम् । व्याप्तिपुरस्कारेण प्रमाणाभावकथनस्याव्याप्तेः । ततश्च प्रतिज्ञाहेत्वंशयोः साक्षाद्धेतुहेतुमद्भावप्रतीयमानो न प्राप्नोति । अत एव वाक्यतासिद्ध्यर्थं उक्तरीत्या व्याप्तिखण्डनमेव मूलार्थः । अनुमानखण्डनं तु व्याप्त्यभावादेवार्थलभ्यं इति योजना क्रियते इति समुदायार्थः । यद्येवं अनुमानमूलव्याप्तिनिराकरणपरत्वेन योजनया वाक्यत्वापलापः क्रियते तर्हि अनुमानदूषणलाभो न स्यात् इत्यत आह मूले





**तथा च व्यापकेति** । परिच्छेदं करोतीत्यर्थविवक्षायां परिच्छेदकरं इत्यापद्यते इत्यतः ताच्छीलिकार्थे णिनिमाश्रित्यार्थो विवक्ष्यते ।

**स०व्र०**— परिच्छेदकार्येव प्रमाणमिति नेति नियमनिषेधात् क्वचित्परिच्छेदकारिणः प्रमाणत्वमिति लभ्यते । तच्चानुपपन्नम् । क्वचिदपि परिच्छेदकारिणः प्रमाणत्वस्यासम्मतत्वात् इत्यत आह **एवेति प्रतिवाद्युक्तानुवाद इति** । तदेवोपपादयति **परिच्छेदकारीति** । वाक्यभेदेनान्वये 'न' इत्यनुकर्षः कर्तव्यो भवतीत्यरुचिं मनसि निधायैकवाक्यतया योजयति **यद्वेति** । 'ज्ञाततालक्षणस्य परिच्छेदस्यैवाप्रामाणिकत्वादि'त्येतत् बहिरेव वक्तव्यमिति भावः । **व्यापकेति** । ज्ञाततायाः प्रामाण्यव्यापकत्वात् तस्याश्च स्मृतावभावेन तदभावेनाप्रामाण्यानुमानमित्यर्थः । स्मृतिः अप्रमाणम् ज्ञातताऽजनकत्वादित्यनुमानप्रकारः । अज्ञातज्ञापनमेव प्रमाणमित्येतदर्थतयाऽपि तद्व्याख्याति **यद्वेति** ।

**विठ्ठल०**— एवं स्मृतिरनुवादश्चाप्रमाणं निष्फलत्वादित्यस्य हेतोर्दुष्टत्वेऽपि स्मृत्यादिकमप्रमाणं ज्ञाततानुत्पादकत्वादित्यनुमानेनाप्रामाण्यं स्मृत्यनुवादयोर्भविष्यतीत्याशयेन शङ्कते **अथापि स्यादिति** । इति च प्रमेत्यस्य फलितार्थमाह **ज्ञाततायामिति** । किमेतेनानुमानस्य दूषणमित्यत आह **तथा चेति** । **ज्ञातताऽजनकत्वमिति** । ज्ञाततानुत्पादकत्वमित्यर्थः । **प्रत्यक्षादावपीति** । ज्ञाततायाः एवाप्रामाणिकत्वेन तदजनकत्वं प्रत्यक्षादावपि वर्तत इति भावः । ज्ञाततामङ्गीकृत्यापि । व्यभिचारमाह **किञ्चेति** । प्रमेव परिच्छेदकारीति च नेति योजनामभिप्रेत्याह **अपि चेति** । परिच्छेदकार्येव प्रमाणमित्यत्र न प्रमेति योजनामुपेत्याह **यद्वा ज्ञाततेति** । अस्मिन्पक्षे उक्तानुमानस्य को दोष इत्यत आह **तथा चेति** । **व्यापकेति** । प्रमाणं प्रति व्यापकं यदज्ञाततोत्पादकत्वं तदनुपलब्धिलिङ्गकमित्यर्थः । व्यापकस्यैवासिद्धेरिति भावः ।

**चषकः**— बाधप्रतिरोधनिरासः साध्यांशोपादानस्य, सिद्धसाधनतानिरासः सावधारणसाधनांशोपादानस्य प्रयोजनमिति विवृण्वते **तदभावादिति** । स्मृत्यादिपक्षकप्रमात्वाभावसाध्यकज्ञातताजनकत्वाभावहेतुकविभ्रमनिदर्शनकमनुमानमनेनाभिप्रैति । **साधारणानैकान्तिकम्** । साध्याभाववन्निरूपितवृत्तित्वावच्छिन्नम् । **धारावाहिकज्ञानानि** । स्वाव्यवहितपूर्वक्षणावच्छिन्नस्वाधिकरणनिरूपिताधेयताकज्ञानीयविषयतात्वावच्छिन्नसमनियतस्वनिरूपितविषयतात्वावच्छिन्नकद्वितीयादिज्ञानानि । तेन घटज्ञानानन्तरोत्पन्नदण्डपटादिज्ञानानां न्यूनाधिकगोचराणां च व्युदासः ।

**॥ इति 'प्राकट्यापरपर्यायामर्थगतां ज्ञाततां जनयदेव प्रमाणम्' इति मतस्य निरासः ॥**

* * *





**॥ अथ 'अज्ञातज्ञापकत्वमेव प्रमाणम्' इति मतस्य निरासः ॥**

१११ **सु०— ननु चाज्ञातज्ञापकमेव प्रमाणम्, अज्ञातज्ञानमेव वा; न चैतत्स्मृत्यादावस्तीति तदप्रमाणमित्यतो वाऽऽह नेति । परिच्छेदः** अज्ञातज्ञानं, तत्कर्तुं शीलमस्य अस्तीति **परिच्छेदकारि(री) । यद्वा परिच्छेद** एव **कार** आकारः परिच्छेदकारः, सोऽस्य अस्तीति **परिच्छेदकारि ।**

**किं परिच्छेदकारित्वं प्रामाण्यस्य व्याप्यव्यापकभूतं लक्षणमिति तदभावात् स्मृत्यादेरप्रामाण्यमुच्यते, किंवा व्यापकमेवेति ।**

**परि०—** स्मृतिरप्रमाणं ज्ञातगोचरज्ञानत्वात्, अनुवादो न प्रमाणं ज्ञातज्ञापकत्वात् व्यतिरेकेण प्रत्यक्षवदिति हेत्वन्तरनिरासकतयापि योजयति **नन्वित्यादिना । शीलमस्येति ।** ताच्छीलिकणिनिप्रत्यये कारीति रूपमिति भावः । आकारतद्वतोरसविशेषाभेदात् सोऽस्यास्तीति युज्यत इति भावेनोक्तम् **सोऽस्यास्तीति । व्याप्यव्यापकभूतं** प्रमाण्यं प्रति व्याप्यत्वे सति व्यापकभूतं, समव्याप्तमित्यर्थः । अव्याप्त्यतिव्याप्तिशून्यतया लक्षणत्वोपपादनायैतदुक्तिः । न्यूनवृत्तित्वे अधिकवृत्तित्वे चाव्याप्त्यतिव्याप्त्योरवर्जनात् ।

**यादु०— स्मृत्यादाविति ।** आद्यपक्षविवक्षायां स्मृतिशब्देन करणव्युत्पत्त्या संस्कारो ग्राह्यः । आदिपदेनानुवादो द्वितीयपक्षविवक्षायामादिपदेनानुवादजन्यज्ञानं ग्राह्यम् । स्मृतिपदं च भावव्युत्पत्त्या स्मरणपरमेवेति ध्येयम् । द्वितीयपक्षलाभायापि मूलं योजयति **यद्वेति** । सोऽस्यास्तीत्येतत्तादात्म्येन सम्बन्धेनेति ज्ञेयम् । **व्याप्यव्यापकभूतमिति** । समव्याप्तमित्यर्थः । एतच्च लक्षणत्वोपपादनाय । व्यापकमात्रत्वेऽतिव्याप्तेः । व्याप्यमात्रत्वे चाव्याप्तेः । समव्याप्तत्वे च तदुभयनिरासात् । इदं च परिच्छेदकार्येव प्रमाणं, प्रमाणमेव परिच्छेदकारीत्येवकारस्योभयत्र सम्बन्धेन लभ्यते, समभिव्याहृतपदार्थतावच्छेदकस्येतरपदार्थतावच्छेदकव्यापकत्वस्य एवकारार्थत्वादिति ज्ञातव्यम् । तथा च किं परिच्छेदकारित्वस्य प्रमाणलक्षणत्वात् तदभावेन स्मृत्यादेः प्रामाण्याभावोऽभिप्रेतः । किंवाऽस्यालक्षणत्वेऽपि प्रामाण्यव्यापकत्वात् तदभावेन प्रामाण्याभाव इति विकल्पार्थः । अत एव व्यापकमेवेति एवकारेण लक्षणत्वमेव व्यावर्तितं न तु व्याप्यत्वमित्यवधेयम् । मूले एवकारस्य यथाश्रुतसम्बन्धमेवाश्रित्य द्वितीयपक्षस्य प्रसक्तिरुपपादनीया ।

**वं०प०—** अज्ञातस्य ज्ञानम् **अज्ञातज्ञानम् । एतत्** द्वयमपीत्यर्थः । किं परिच्छेदकारीत्यादावुक्तं द्वयमपि विवक्षितं मन्तव्यम् । व्याप्येति स्वरूपसङ्कीर्तनमत एव क्वचित्तद्विहायैव पाठः । अत्र लक्षणपदोपरि





भारः । तथा च यथा कृतकत्वस्यानित्यत्वं व्यापकमेव न तु लक्षणम् । एवं न भवति, किन्तु व्यापकभूतं लक्षणत्वेन विवक्षितमित्यर्थः । **व्यापकमेवेति** । न लक्षणत्वेन विवक्षितमित्यर्थः ।

**श्रीनिधि०— व्याप्यव्यापकभूतं लक्षणमिति** । एवं च लक्षणमित्यर्थः ।

**शे०वा०— स्मृत्यादाविति** । स्मृतेर्ज्ञातज्ञानत्वेनाज्ञातज्ञापकत्वस्याज्ञातज्ञानत्वस्य चाभावादनुवादस्य च ज्ञातज्ञापकत्वेऽप्यज्ञातज्ञापकत्वाज्ञातज्ञानत्वयोरभावादित्यर्थः । अज्ञातज्ञापकमेव प्रमाणमित्येतदर्थपरतया परिच्छेदकारीति मूलं व्याख्यायाज्ञातज्ञानमेव तदित्यर्थपरतयाऽपि तद्व्याचष्टे **यद्वेति** । समव्याप्तमित्यर्थः । इदं च परिच्छेदकार्येव प्रमाणमिति, प्रमाणमेव परिच्छेदकारीति चैवकारस्योभयत्र सम्बन्धाल्लभ्यते । समभि-व्याहृतपदार्थतावच्छेदकस्येतरपदार्थतावच्छेदकव्यापकताया एव एवकारार्थत्वात् । समव्याप्तत्वकथनं च लक्षणत्वनिर्वाहार्थम् । तथा चाद्यपक्षप्रवृत्तिः । परिच्छेदकार्येव प्रमाणमिति यथाश्रुतमूलाच्च द्वितीयपक्षस्य प्रसक्तिः । ततश्च परिच्छेदकारित्वस्य प्रमाणलक्षणत्वात् तदभावात्स्मृत्यादेर्न प्रामाण्यमिति मतं, किंवा तस्यालक्षणत्वेऽपि प्रामाण्यव्यापकत्वात् तदभावेन प्रामाण्याभाव इति विकल्पो द्रष्टव्यः । **व्यापकमेवेति** । अत्रैवशब्देन लक्षणत्वस्य व्यावृत्तिरिति ध्येयम् । क्वचित्तु प्रामाण्यव्यापकभूतं लक्षणमित्येव पाठः । तत्रायं भावः । न लक्षणाभावेन प्रामाण्याभावोऽभिधातुं युज्यते । लिङ्गतया हि लक्षणमुपयुज्यते । न च व्यापकता लिङ्गत्वोपयोगिनी व्याप्यत्वेनैव तदुपपत्तेः । इतरथा धूमादीनामलिङ्गत्वापातात् । तथा च कथं व्याप्यभूतस्य परिच्छेदकारित्वरूपतल्लक्षणस्याभावेन तद्व्यापकीभूतस्य प्रामाण्यस्याभावः सिद्ध्येत् । अन्यथा धूमाभावेन वह्न्यभावस्यापि सिद्धिप्रसक्तिरित्यतः सत्यमियं वस्तुस्थितिस्तथाऽपि अतिव्याप्त्यसम्भवाविवाव्याप्तिरपि लक्षणदोष एवेति वदद्भिः परैर्लक्षणस्य लक्ष्यतावच्छेदकव्यापकतायाः स्वीकृतत्वाद्व्यापकीभूतस्य तस्याभावेन तद्व्याप्यप्रामाण्याभावाभिधानमुपपन्नमेवेति भावेन व्यापकभूतमिति व्यापकत्वाभिधानमिति । अत्र च व्यापक-भूतं लक्षणमित्येव स्वरसः पाठः । दर्शनान्तरोक्तलक्षणकक्षीकारे तु तैः स्वलक्षणस्य व्यापकतयाऽङ्गीकृतत्वात् स्मृत्यादौ च तदभावादिति पूर्वग्रन्थानुसाराल्लक्षणत्वमात्रव्यावृत्तिपरव्यापकमेवेत्युत्तरग्रन्थानुसाराच्च । अन्यथा व्याप्यव्यापकत्वपक्षस्यैव व्याप्यव्यापकभूतलक्षणत्वप्रतिद्वन्द्वितया व्याप्यव्यापकमेवेत्येव वक्तव्यतया व्यापक-मेवेत्युक्त्यस्वारस्यापातादिति द्रष्टव्यम् । अत एव व्याप्यव्यापकभूतमिति पाठे व्याप्यमिति स्वरूपसङ्कीर्तनमेव व्यापकभूतं लक्षणमित्येव च विवक्षितमतो न पूर्वोत्तरग्रन्थास्वारस्यमिति ध्येयम् ।

**वा०र०—** तथा च परिच्छेदकारीति प्राप्यते इत्याशयेन मूले **तत्कर्तुं शीलं इत्यादि** । **सोऽस्यास्तीति** मूलम् । आनन्दमयपूर्वीणां इत्यत्रेव बहुव्रीहिकर्मधारयमत्वर्थीययोः शब्दसाम्ये अन्येन लाघव-मूलकन्यायाप्रवृत्तेः युक्तः कर्मधारयादपि इनिरिति ज्ञेयम् । **समेति** । अनेन व्याप्यं भूतं यत् तत् व्यापकभूतमिति विग्रहः सूचितः । उक्तार्थस्य भाष्यादप्रतीतेः । योजनाभेदाश्रयणेन तत्प्रतीतिरुपपन्नेत्याह **इदं चेति** । उभयत्र सम्बन्धेऽपि कथं व्याप्यत्वादेर्लभः इत्यतस्तं उपपादयति **समभिव्याहृतेति** । एवकारसमभिव्याहृतेत्यर्थः । तथा





च परिच्छेदकार्ये वेति सम्बन्धपक्षे प्रमाणत्वरूपं यत् इतरपदार्थतावच्छेदकं तत् व्यापकत्वं परिच्छेदकारित्वे लभ्यते । प्रमाणमेवेति सम्बन्धपक्षे तु एवकारसमभिव्याहृतप्रमाणपदार्थतावच्छेदकप्रमाणत्वे परिच्छेदकारित्व-रूपेतरपदार्थतोऽवच्छेदकव्यापकत्वं लभ्यते । तथैव पार्थ एव धनुर्धरः शङ्खः पाण्डुरः एवेत्यादौ दृष्टत्वादिति भावः । **लक्षणत्वनिर्वाहार्थमिति** । व्यापकत्वमात्रत्वे विषाणित्वादिसाधारण्यम् । व्याप्यत्वमात्रत्वे च शबलत्वादि साधारण्यम् । अतस्तदुभयनिरासाय लक्षणत्वनिर्वाहकव्याप्यत्वव्यापकत्वयोः उभयोरपि उपादाने लक्षणत्वनिर्वाहः इति भावः । अनेन व्याप्यव्यापकभूतं लक्षणमिति विशिष्टे उक्तेऽपि किंलक्षणमित्यत्रैव भारः । लक्षणाभावादित्येव तदभावात् इत्यत्र तच्छब्दार्थो मूल इति प्रतिपादितं भवति । निर्वाहार्थं इत्यनन्तरं इति ध्येयमिति । **व्यापकमेवेति** । अत्र एवशब्देन लक्षणत्वस्य व्यावृत्तिरिति ध्येयम् । तथा च उभयत्र एवकार-सम्बन्धात् आद्यपक्षप्रसक्तिः । परिच्छेदकार्येव प्रामाण्यमिति मूलाच्चेत्यारभ्य द्रष्टव्य इत्यन्तपाठानन्तरं क्वचित्तु प्रामाण्येत्यादि पाठः स्वरसः । तेन सम्पूर्णमूलव्याख्यानोत्तरं तत्प्रापकपक्षद्वयस्य स्पष्टीकरणस्य सङ्गतत्वेऽपि मध्ये तदसङ्गतिः इति पाठान्तर इव शङ्कानवकाशः । पाठान्तरेऽपि प्रथमपक्षप्रामाण्योक्त्यनन्तरं तत्प्रसङ्गात् द्वितीयपक्षस्यापि व्याप्तिवर्णनपूर्वकं पक्षद्वयं मध्य एव विलम्बमसहमानेन स्पष्टीकृतमिति नानुपपत्तिरिति ज्ञेयम् । **द्वितीयपक्षस्य प्रसक्तिरिति** । समभिव्याहृत इत्युक्तोपपादकसत्त्वात् इति भावः । **अलक्षणत्वे-ऽपीति** । पूर्वकल्पे परिच्छेदकारित्वस्य लक्षणत्वे भारः । अत्र च व्यापकत्वे भारः । न तु लक्षणत्वेऽपि भारः इत्याशयः । **इत्येव पाठ इति** । न तु व्याप्यपदमपि तत्पाठ इत्येवकारार्थः । अव्याप्तिदूषणत्वविचारपर-पूर्वमूलानुसारेणाह **लिङ्गतया हीत्यादिना** । व्यापकत्वाभिधानमितीत्येवं इतियुक्तपाठः । एवं यथाश्रुतपाठ-मुपवर्ण्य पाठद्वयमध्ये वस्तुतः कः सम्मतः इत्यत आह **अत्र चेति** । **पूर्वग्रन्थेति** । प्रामाण्यं नानुवादस्य इत्येतत् विवरणमूलग्रन्थेत्यर्थः । **मात्रव्यावृत्तिपरेति** । एवकारेण लक्षणत्वमात्रव्यावृत्तिकरणात् प्रागेव टीकाया-मुक्तम् । पूर्वकल्पेऽपि व्यापकत्वसत्त्वेऽपि लक्षणप्राप्यभावेन प्रामाण्याभावसाधनस्य विवक्षितत्वात् लक्षणत्वमात्रं विवक्षितम् । ननु व्यापकत्वमपि तत्र प्रयोजनान्तरार्थं कीर्तितम् । द्वितीयकल्पे तु न लक्षणत्वं विवक्षितं किन्तु व्यापकत्वमेवेति पक्षयोर्भेदोऽनेनैव स्पष्टीकृत इति ज्ञेयम् । **स्वरूपसङ्कीर्तनमिति** । लक्षणत्वस्याविवक्षितत्वेन उक्तरीत्या तन्निर्वाहाय विषाणित्वादिसाधारण्यनिरासाय व्याप्यत्वस्यावक्तव्यत्वात् इति भावः ।

**स०व्र०— प्रामाण्यस्य व्याप्यव्यापकभूतं लक्षणमिति** । अत्र व्याप्यत्वग्रहणं स्वरूपकथनार्थम् । अत एव क्वचित् प्रामाण्यव्यापकभूतं लक्षणमित्येव पाठः । तथा च परिच्छेदकारित्वस्य प्रामाण्यलक्षणत्वात् तदभावेन प्रामाण्याभावोऽभिप्रेतः, किंवा तस्यालक्षणत्वेऽपि व्यापकत्वात् तदभावेन प्रामाण्याभाव इति विकल्पार्थः । वस्तुतस्तु लक्षणत्वोपपादनार्थं व्याप्यत्वग्रहणम् । केवलव्यतिरेकिहेतुविशेषो लक्षणमित्युक्तत्वात् तदभावेन प्रामाण्याभावमुपपादयितुं व्यापकत्वमित्युभयोरपि सार्थक्यं द्रष्टव्यम् ।

**विट्ठल०—** अनधिगतार्थगन्तृ इति लक्षणानुरोधेन स्मृतिरप्रमाणम् । ज्ञातज्ञातरूपत्वात् । व्यतिरेकेण प्रत्यक्षवदित्यनुमाननिरासपरतयापि योजयति **नन्विति** । अज्ञातज्ञानमेवेत्युक्तं तदनुसारेणाह **यद्वा परिच्छेद**





**एवेति** । लक्षणत्वोपपादनाय व्याप्यव्यापकमित्युक्तम् । समव्याप्तमित्यर्थः । तेन हि यथाक्रममिति व्याप्त्या व्याप्ती निरस्ते भवतः ।

**चषकः— व्याप्यव्यापकभूतं** समनियतम् । **लक्षणमिति** । प्रमाणलक्षणमित्यर्थः । लक्ष्यतावच्छेदकव्यापकमेयत्वादावतिप्रसङ्गव्युदासाय व्याप्यत्वांशस्य तद्व्याप्यतत्तद्व्यक्तित्वादौ तदपनोदाय व्यापकत्वांशस्य च निवेशनमित्यवसेयम् । इदं च परिच्छेदकार्येव प्रमाणं प्रमाणमेव परिच्छेदकारीति च विन्यासोपगमेन द्रव्यमेव गुणवद्गुणवदेव द्रव्यमित्यादाविव समभिव्याहृतपदार्थतावच्छेदक इतरपदार्थतावच्छेदकव्यापकता लभ्यत इति समनैयत्यनिर्वाह इति मन्तव्यम् । नित्यविषयाणामिति बहुव्रीहिः । भवस्यानादितया नित्यपदार्थानामवगतत्वसम्भवादिति भावः ।

**११२ सु०— आद्ये परिच्छेदकार्येव प्रमाणमिति** लक्षणं **न प्रमा नोपपन्नमिति योजना; अव्याप्तेरतिव्याप्तेश्चेति । तथाहि । धर्मिणमादायानधिगतार्थगन्तृत्वमुच्यते, प्रकारं वा ॥ आद्ये नित्यविषयाणामप्रामाण्यापातः, व्याप्यवत्तयाऽवगतं धर्मिणं व्यापकवत्तया विषयीकुर्वतोऽनुमानस्य पृथगवगतानर्थान्त्संसृष्टतया गोचरयतः शब्दस्य चाप्रामाण्यप्रसङ्गः ॥ द्वितीये तु धारावाहिकविज्ञानानामप्रामाण्यं स्यात् । न हि वैनाशिकानामिव मीमांसकानामन्य एव घटः, नापि साङ्ख्यानामिव परिणामी; नापि प्रकारमप्युपजनापायवन्तमीक्षामहे ॥**

**परि०— इति योजनेति** । लक्षणपदाध्याहारेण योजनेत्यर्थः । अव्याप्तिं तावदुपपादयति **धर्मिणमित्यादिना ईक्षामह इत्यन्तेन** । **नित्येति** । नित्यवस्तुविषयकाणामित्यर्थः । कस्मिंश्चिज्जन्मनि तेन तस्य ज्ञातत्वसम्भवात् तत्राव्याप्तिरिति भावः । तज्जन्मन्यनवगतत्वं ब्रूम इत्यतोऽन्यत्राव्याप्तिमाह **व्याप्यवत्तयेति** । **धर्मिणं** पर्वतादिकम् । **पृथगिति** । अन्वयविशेषं विनाऽवगतानित्यर्थः । **वैनाशिकानां** क्षणिकवादिनाम् । ननु वस्तुनस्तथात्वेऽपि धर्ममात्रमन्यथेत्यतः अनुभवविरोध इत्याह **नापीति** ।

**गु०दी०— न हि वैनाशिकानाम्** इत्यत्र **वैनाशिकानां** क्षणिकत्ववादिनामित्यर्थः ।

**यादु०— नित्यविषयाणामिति** । अनादौ संसारे नित्यानां धर्मिणां पूर्वमवगतत्वादिति भावः । **धारावाहिकेति** । तत्र पूर्वज्ञानेनावगतस्य घटत्वादेः प्रकारस्य द्वितीयादिज्ञानैरवगतादिति भावः । ननु तत्राप्यनधिगतार्थविषयकत्वमस्त्येवेति गूढाभिसन्धेराशङ्कायां, किं घटादिस्वरूपस्यैव प्रतिक्षणमुत्पत्त्याऽनधि-





गतार्थविषयकत्वं ज्ञानानामभिप्रेतम् उत प्रकारस्यैव कस्यचिदिति विकल्पं मनसि निधायाद्यं दूषयति **न हीत्यादिना** । वैनाशिकानां क्षणिकत्ववादिनां मत इवेत्यर्थः । मीमांसकानां मत इति शेषः । एवं साङ्ख्यानामित्यत्रापि । साङ्ख्यैरचेतनमात्रं फलाङ्कुरशरीरादिवत्प्रतिक्षणं विक्रियाविशेषवदित्यङ्गीकारादिति भावः । द्वितीयं दूषयति **नापि प्रकारमिति** । **उपजनेति** । प्रतिक्षणमुत्पत्तिनाशवन्तमित्यर्थः । अनुपलम्भान्नास्तीति भावः ।

**वं०प०— प्रमा** प्रमितिविषयः । न प्रमेत्यस्य नोपपन्नमिति तात्पर्यतो व्याख्यानम् । अव्याप्तिमुपपादयति **धर्मिणमित्यादिना** । धर्मिणं धर्म्यंशमिति यावत् । **नित्येति** । तेषां पदार्थानां नित्यत्वादेवानादौ संसारे कस्मिंश्चिद्वा जन्मन्यधिगतिसम्भवेन धर्म्यंशे नानधिगतार्थगन्तृतेति ध्येयम् । **अनुमानस्य** धूमवान्पर्वतो वह्निमानित्यस्य । धर्म्यंशेऽनधिगतार्थगन्तृत्वाभावमुपपादयितुं व्याप्यवत्तयाऽवगतमित्युक्तम् । एवमेव पृथगवगतान् विशकलिततयाऽवगतार्थानित्यस्यापि विशेषणस्य कृत्यं ज्ञेयम् । **शब्दस्य** नदीतीरे पञ्चफलानि सन्तीत्यादिरूपस्य । **धारेति** । घटत्वादिरूपप्रकारस्य पूर्वं ज्ञातस्यैवोत्तरत्रापि ज्ञाने भानान्न प्रकारमादायाप्यनधिगतार्थगन्तृतेत्यर्थः । ननु पूर्वज्ञानाविषय एव प्रकार उत्तरज्ञानेऽवभासत इति प्रकारमादायानधिगतार्थत्वं युक्तमिति चेत् । अत्रापि पृच्छामः । बौद्धानामिव प्रतिक्षणं घटादेर्भेदमङ्गीकृत्य, साङ्ख्यानामिव प्रतिक्षणं परिणामं वाऽङ्गीकृत्य प्रकारस्याप्युपजननापायौ स्वीक्रियेते उत धर्मिणः स्थायित्वमङ्गीकृत्य धर्माणामेवोत्पत्तिविनाशौ । नाद्य इत्याह **न हीत्यादिना** । द्वितीयं निराह **नापीति** । धर्मिणः स्थायित्वेऽपीति शेषः ।

**कं०रा०—** ननु प्रतिक्षणं घटस्यान्यत्वेन धारावाहिकविज्ञानेष्वनधिगतार्थगन्तृत्वस्य सत्त्वान्न तेषामप्रामाण्यापत्तिरित्यत आह **न हीति** । प्रतिक्षणविनाशवादिनां बौद्धानामिव मीमांसकानां प्रतिक्षणं न हि घटोऽन्यः येन धारावाहिकविज्ञानानामनधिगतार्थगन्तृत्वं स्यादिति भावः । ननु प्रतिक्षणं घटस्य परिणामेन धारावाहिकविज्ञानेष्वनधिगतार्थगन्तृत्वस्य सुवचत्वान्न तेषामप्रामाण्यप्रसङ्ग इत्यत आह **नापीति** । साङ्ख्यानामिव मीमांसकानां प्रतिक्षणं घटः परिणामी येन धारावाहिकविज्ञानानामनधिगतार्थगन्तृत्वं सुवचं स्यादिति भावः । ननु प्रतिक्षणमुपजननापायवान् यः प्रकारस्तद्विशिष्टघटविषयकृतया धारावाहिकज्ञानानामनधिगतार्थगन्तृत्वस्य सत्त्वान्नाप्रामाण्यप्रसङ्ग इत्यत आह **नापि प्रकारमिति** ।

**श्रीनिधि०— परिच्छेद एव कार आकार इति** । ननु परिच्छेदाकारवतो ह्यस्याभावात् तस्यैव तद्वत्वात् कथं मत्वर्थीयः तस्य सम्बन्धसापेक्षत्वात् तस्य च भेदाविनाभावादिति चेन्न । घटस्य स्वरूपमित्यादिवदुपचारादुपपत्तेः । **धारावाहिकविज्ञानानामिति** । तत्राधिगतस्यैव प्रकारस्याधिगमादिति भावः । नन्वयं नास्तीति चेत् किं प्रकारप्रकारिणोरुभयोरन्यान्यत्वेनैवं उत प्रकारस्यैव प्रतिक्षणमुपजननापायवत्वेन इति विकल्पं मनसि निधाय नाद्य इत्याह **न हि वैनाशिकानामिवेति** । न द्वितीय इत्याह **नापीति** ।





**शे०वा०**— किमत्र सामान्यतोऽनधिगतत्वं विवक्षितं किंवा विशेषतः । नाद्यः । सामान्यतः प्रमेयत्वादिना सर्वेषामेव सर्वैरवगमादसम्भवप्रसङ्गादिति भावेन द्वितीयं दूषयितुं विकल्पयति **धर्मिणमादायेति** । **नित्यविषयाणामिति** । नित्यपदार्थविषयाणामित्यर्थः । नित्यपदार्थेषु नानधिगतत्वं सम्भवति । यदि हि नेह जन्मनि, जन्मान्तरे; यदि च न प्रत्यक्षेण, तदाप्यनुमानोपदेशाभ्यामेवानादौ संसारे तेषामधिगतत्वात् । ततश्च तत्राव्याप्तिरिति भावः । अत्रैव दोषान्तरमाह **व्याप्यवत्तयेति** । **धारावाहिकेति** । तत्र पूर्वज्ञानेन विषयीकृतस्य घटत्वादेः प्रकारस्य द्वितीयादिज्ञानैरवगमान्न प्रकारमादायानधिगतार्थगन्तृत्वं तेषामिति भावः । ननु च प्रतिक्षणं घटभेदेन घटत्वभेदात्पूर्वपूर्वज्ञानाविषयघटत्वान्तरविषयकत्वादुत्तरोत्तरज्ञानानां न तत्र प्रकारमादायानधिगतार्थत्वानुपपत्तिः । यद्वा घटाभेदेन प्रतिक्षणं घटत्वभेदाभावेन तदादाय धारावाहिकज्ञानेष्वर्थस्यानधिगतत्वासम्भवेऽपि क्षणिकप्रकारान्तरमादायैवानधिगतार्थगन्तृत्वमुपपद्यते तत्कथं तत्राव्याप्तिरित्यतो भवेदेवं कथञ्चिद्यदि प्रतिक्षणं घटभेदः स्यात् । न चासावस्ति । तथा हि । स किं घटस्य क्षणिकत्वाद्वा परिणामित्वाद्वेति विकल्पद्वयं मनसि निधायाद्यं दूषयति **न हीति** । क्षणिकत्ववादिनां सौगतानामित्यर्थः । वैनाशिकानां मीमांसकानामित्युभयत्र मत इति योज्यम् । तथा च क्षणिकत्ववादिमते घटस्य प्रतिक्षणमन्यत्वेऽपि न मीमांसकमतेऽस्य प्रतिक्षणमन्यत्वम् । अन्यथा बौद्धमतप्रवेशापत्तेरिति भावः । द्वितीयं दूषयति **नापीति** । साङ्ख्यानां मत इव मीमांसकानां मते न प्रतिक्षणं घटः परिणामीत्यर्थः । तथा च साङ्ख्यैरचेतनमात्रस्य फलाङ्कुरशरीरादिवत्प्रतिक्षणविक्रियाविशेषवत्त्वाङ्गीकारात् प्रतिक्षणं तन्मते घटस्य भेदेऽपि मीमांसकैस्तदनङ्गीकारादङ्गीकारे च साङ्ख्यमतप्रवेशापत्तेर्न तन्मते प्रतिक्षणं घटभेद इति भावः । तथा चोक्तप्रकारद्वयेनापि घटभेदासिद्ध्या न प्रतिक्षणं घटत्वभेद इति न पूर्वपूर्वज्ञानाविषयीकृतघटत्वान्तरविषयकतयोत्तरोत्तरज्ञानानामनधिगतार्थगन्तृतेति हृदयम् । क्षणिकप्रकारान्तरमादायैवानधिगतार्थगन्तृत्वमिति पक्षं दूषयति **नापीति** । प्रतिक्षणमुत्पत्तिविनाशवन्तमित्यर्थः । अनुपलम्भान्नासावस्तीति भावः । उपलक्षणं चैतत् । नापि मीमांसकैरभ्युपेत इत्यपि द्रष्टव्यम् ।

केचित्तु धर्मिणमादायेत्यस्य धर्मिमात्रमादायेत्यर्थः । प्रकारं चेत्यत्र वाशब्दस्य समुच्चयार्थत्वेन धर्मिणं प्रकारं चादायेत्यर्थः । आद्ये नित्यविषयाणामित्यादेरुक्त एवार्थः । **द्वितीये त्विति** । घटोऽयं घटोऽयमिति धारावाहिकज्ञानेषु धर्मिणो घटस्य प्रकारस्य च घटत्वस्य च पूर्वज्ञातस्यैवोत्तरज्ञानेन विषयीकरणान्न प्रकारं धर्मिणं चादायानधिगतार्थगन्तृता तत्रेत्यर्थः । ननु धर्मिणो घटस्य प्रकारस्य च घटत्वस्य प्रतिक्षणं भिन्नत्वान्न तदुभयमादायानधिगतार्थगन्तृत्वानुपपत्तिरित्यतो धर्मिणो घटस्य प्रतिक्षणं भिन्नत्वं क्षणिकत्वाद्वा परिणामित्वाद्वेति विकल्पद्वयं मनसि निधाय क्रमेण पक्षद्वयं दूषयति **न हीत्यादिना** । पूर्व(कल्प) एवाभिप्रायः । प्रतिक्षणं घटत्वोपजननापाययोरनुपलम्भबाधितत्वान्न प्रकारस्य घटत्वस्यापि प्रतिक्षणं भिन्नत्वमित्याशयेनाह **नापीति** व्याचक्षते ।

**वा०र०**— नित्याः ये विषयाः तेषामित्यर्थप्रतीतिनिरासाय नित्यो विषयो येषां ज्ञानानामिति बहुव्रीहिः अत्र विवक्षित इति नित्यविषयकज्ञानानामेव प्राप्तिः इत्याह **नित्यपदार्थेति** । पदार्थेत्यधिकपूरणेन एव बहुव्रीहिः





अयं ज्ञानार्थ इति सूचितम् । अन्यथा नित्यपदार्थानां इत्येव व्याकुर्यात् इत्यवधेयम् । नित्यविषयकज्ञानेषु अनधिगतविषयत्वाभावं वक्तुं नित्यविषयाणां अनधिगतत्वाभावं उपपादयति **नित्यपदार्थेष्विति** । **ततश्च तत्रेति** । नित्यपदार्थानामधिगतत्वात् तज्ज्ञानेषु इत्यर्थात् न कश्चित् क्षुद्रोपद्रवः । **अत्रैवेति** । मूले **धर्मिणमादायेति** । पक्ष एवेत्यर्थः । **दोषान्तरम्** अनुमानशब्दयोः अव्याप्तिरूपं दोषान्तरमित्यर्थः । प्रकारमादाय ज्ञानस्यानधिगतार्थगन्तृत्वमिति द्वितीयपक्षनिरासाय धारावाहिकेत्याद्युक्तम् । तत्कथं तद्वाक्येनापि धर्मिण एव तादवस्थ्यापातात् नाधिगतार्थत्वं ज्ञानानामिति प्रमेयप्रतिपादनप्रतीतेरित्यतः तस्य धर्मविषयत्वमेव विवक्षितमित्यतो न दोष इत्याशयेन तद्वाक्यं प्रकारानधिगतत्वाभावपरतया व्याचष्टे **तत्र पूर्वेति** । ननु न हीत्युत्तरत्र पूर्वोपपादकवाक्ये धर्मितादवस्थ्योपपादनप्रतीतेः कथं पूर्ववाक्यं प्रकारपरतया योज्यते इत्यतः तदपि प्रकारविषयमेवेति दर्शयितुं पूर्वोक्तघटादिप्रकारानधिगतत्वाभावाक्षेपप्रदर्शनपूर्वकं तन्निरासपरत्वेन तद्वाक्यमवतारयति **ननु च प्रतिक्षणमित्यादिना** । यद्येवं प्रकारपरत्वेनोक्तवाक्यद्वययोजना तर्हि नापि प्रकारमिति तृतीयवाक्यासङ्गतिः । तदर्थस्य प्रागेव प्रतिपादितत्वात् इत्यतः पूर्ववाक्यद्वयेन घटत्वादिप्रकारमादाय अनधिगतार्थत्वं नास्तीत्युक्तम् । नापि इत्यनेन तु घटत्वादेरक्षणिकत्वेऽपि तत्प्रकारातिरिक्तं क्षणिकं प्रकारं आदायापि अनधिगतार्थत्वं नेत्युच्यते इति न पुनरुक्तिरित्याशयेन तद्वाक्यनिरस्यं पक्षान्तरं उत्थापयति **यद्वेति** । अनेन प्रकारमादायेति द्वितीयेऽपि किं घटाद्यभिन्नो घटत्वादिरेव प्रकारः उत तदन्यः कश्चित् इति कल्पान्तरेऽभिप्रायोऽपि मूलेऽस्तीति सूचयति । अत एव क्षणिकप्रकारान्तरमादाय एवानधिगतार्थगन्तृत्वमिति पक्षमिति वक्ष्यति । तत्र पक्षमित्यस्य प्रकारांशे विकल्पिततयाऽभिप्रेतद्वितीयपक्षमित्यर्थ इति ज्ञेयम् । प्रतिक्षणं विकारवत्वं सिद्धस्थले विद्यमानं दृष्टान्तीकृतम् । **फलाङ्कुरशरीरादिवत् इति** । मूले प्रतिक्षणमिति पूरणीयम् । तेन विवक्षितपक्षलाभः इत्याशयेन व्याचष्टे **प्रतिक्षणमुत्पत्तीति** । एवं स्वपक्षे धारावाहिकेत्यादिकं वाक्यत्रयमपि प्रकारमादायानधिगतार्थत्वं इत्येतत् द्वितीयपक्षनिरासकमेव । न हि इति वाक्ये धर्मिणः तादवस्थ्यप्रतिपादनमपि न धर्मिविवक्षया अपि तु धर्म्यभिन्नप्रकारस्याक्षणिकत्वं उपपादयितुं एवेति नासङ्गतम् । नापीति वाक्यस्य प्रकारविषयत्वे तु न प्रयत्नापेक्षेति मूलाशयो वर्णितः । अन्यैस्तु न हीति वाक्ये धर्मिणः तादवस्थ्योक्तिमनुरुध्य प्रकारं वेति द्वितीयकल्पस्य धर्मिविषयत्वस्यापि सत्त्वात् न हीति वाक्ये धर्मिणस्तदवस्थत्वकथनं सङ्गतमिति वर्णितं, तदनुवदति **केचित्त्विति** । **पूर्वक एवेति** । पूर्वपक्षे घटे भेदनिराकरणं घटत्वभेदनिराकरणार्थम् । एतत्पक्षे तु स्वातन्त्र्येण इत्येव विशेषेऽपि घटभेदनिराकरणमात्रपरतया न हीत्यस्य योजना समानैवेति भावः । आहुरित्युक्तास्वरसस्तु न हि इत्यस्य धर्मिविवक्षयैव प्रवृत्तत्वे धर्मिपक्षदूषणस्य प्राक्कृततया पुनः तदर्थं प्रयत्नायोगः । न हीत्यस्य पूर्वमेव वक्तव्यत्वापत्त्या प्रकारनिराकरणे उक्तिरसङ्गता । अस्मत्पक्षे तु प्रकारतादवस्थ्योपपादनाय प्रकाराभिन्नधर्मिणः तादवस्थ्यवचनं सङ्गतमिति प्रागेवोक्तम् । घटन्यायेनैव घटत्वप्रकारस्यापि अनधिगतत्वनिराकरणलाभात् पृथक्निराकरणायोगश्चेत्यादि ज्ञेयः ।

**स०व्र०— नित्यविषयाणामिति** । तत्र धर्मिणो नित्यत्वेन पूर्वमप्यधिगतिसत्त्वेन न धर्मिणमादाय अनधिगतार्थगन्तृत्वमिति भावः । **धारावाहिकविज्ञानानामिति** । घटत्वादिरूपप्रकारस्य पूर्वं ज्ञातस्यैवोत्तरत्र





भावादिति भावः । ननु तत्रापि पूर्वाज्ञात एव कश्चित्प्रकारोऽभ्युपगम्यते । अतो नोक्तदोष इति चेत् । तत्किं धर्मिण एव प्रतिक्षणं विनाशित्वेन तद्धर्माणामपि विनाशात् धारावाहिकज्ञाने पूर्वज्ञानविषयीकृतप्रकारस्य अभावेन अनधिगतार्थगन्तृत्वान्नाव्याप्तिरित्यभिप्रायः । किंवा धर्मिणोऽविनाशेऽपि तद्धर्माणामेव प्रतिक्षणमुत्पत्तिविनाशयो-रभ्युपगमेन प्रकारमादाय अनधिगतार्थगन्तृत्वान्नाव्याप्तिरिति वेति विकल्पं मनसि निधाय आद्यं दूषयति **न हि वैनाशिकानामिवेति** । नान्त्य इत्याह **नापि प्रकारमिति** । **उपजनम्** उत्पत्तिः ।

**विठ्ठल०— नित्यविषयाणामिति** । सर्वदाविषयभूतात्मादिज्ञानानामिति भावः । **धारावाहिकेति** । तत्र पूर्वज्ञानावगतघटादिप्रकारस्य द्वितीयादिज्ञानेष्ववगमादिति भावः । ननु तत्राप्यनधिगतार्थविषयकत्व-मस्त्येवेत्याशङ्क्य किं घटादिस्वरूपस्यैव प्रतिक्षणमुत्पत्त्यानधिगतार्थविषयकत्वमभिप्रेतमथवा परिणामतया किं वा कस्यचित्प्रकारस्य जननापायवत्वेनेति विकल्पं मनसि निधायाद्यं दूषयति **न हीति** । द्वितीयं दूषयति **नापीति** । तृतीयं प्रत्याख्याति **प्रकारमिति** । प्रकारस्वरूपयोस्तदवस्थेऽपि प्रतिक्षणं वर्तमानतयाकलितत्वा-द्भिन्नत्वमेव तथा चानधिगतार्थत्वमिति ।

**११३ सु०— ननु यद्यपि स्वरूपस्य प्रकारस्य वा तादवस्थ्यम्, तथाऽपि घटोऽयं घटोऽयमिति प्रत्यक्षज्ञानधारायां वर्तमान एवार्थः (परि)स्फुरति । न च क्रमभाविनां ज्ञानानामेक एव वर्तमानकालो विषयः, नानाप्रतिपत्तृवत् ज्ञानयौगपद्यप्रसङ्गात्, (तत्)प्रत्य-भिज्ञानानुपपत्तेश्च । ज्ञानानेकत्वेऽप्येककालावस्थानाकलनात् । तस्मात्पूर्वपूर्वविज्ञानैरना-कलित एव वर्तमानोऽर्थ उत्तरोत्तरैरवसीयत इत्यनधिगतार्थत्वमेवेति ।**

**एवं तर्हि स्मृत्यादेरप्यनधिगतार्थत्वमेव । स्मृतिरपि वर्तमानतत्कालतयाऽनुभूत-मर्थमतीततत्कालतयाऽवगाहते, अन्यथा स इति न स्यात् ।**

**अनुवादोऽपि यदि वादविषयस्तदा स्फुटमनधिगतार्थत्वम् । यदि च पूर्वविज्ञान-विशिष्टार्थगोचरस्तथाऽपि धारावाहिकसमानो न्यायः, अधिकविधानेनैकवाक्यतायामपि तथेति ।**

**संशयविपर्यासयोरप्यनधिगतविषयत्वात् प्रामाण्यं स्यात् । अनधिगततथाभूतार्थ-(गन्तृ)त्वं विवक्षितमिति चेन्न, अनधिगतविशेषणवैयर्थ्यात् । स्मृत्यादिव्यावृत्त्यर्थं तददिति चेत् (न), स्मृत्यादिकमेव कुतो व्यावर्तनीयम् । लक्षणाभावादिति चेत्, तदिदमितरेतरा-श्रयत्वमिति ।**





**परि०**— भिन्नभिन्नकालविशिष्टवस्तुविषयकत्वाद्धारावाहिकज्ञानानामज्ञातविषयकतेति भावेन अव्याप्त्युद्धारमाशङ्क्य तर्हि स्मृत्यादेरपि स्यादेव प्रामाण्यमित्याह **ननु यद्यपीत्यादिना** । **नाना-प्रतिपत्तृवदिति** । एकदैकत्र सन्निकृष्टचक्षुष्मतां पुंसां युगपदेव ज्ञानानामुदयः तथैवैकस्यापि पुंसो जायमानधारावाहिकज्ञानानां यौगपद्यापत्तिरित्यर्थः । **प्रत्यभिज्ञेति** । एकस्यैव वर्तमानकालस्य स्फुरणपक्षे सोऽयमिति कालभेदावगाह्येकज्ञानरूपप्रत्यभिज्ञानायोग इत्यर्थः । ननु स इत्येकं ज्ञानं अयमिति चापरं अतो न दोष इत्यत आह **ज्ञानानेकत्वेऽपीति** । **प्रत्यभिज्ञानस्येति** । वस्तुन इति योज्यम् । **अनेककालेति** । तथा चैककालस्यैव ज्ञानेषु स्फुरणमित्यस्यानुभवविरोध इति भावः । वर्तमानोऽर्थ इति वर्तमानकालविशिष्टोऽर्थ इत्यर्थः । **वादविषय इति** । वादविशिष्टार्थविषय इत्यर्थः । घटोऽस्तीति त्वयोक्तमित्येवमादिरूपः । **पूर्वज्ञानेति** । घटमहं जानामि ज्ञातो घटो मयेत्येवमादिरूप इत्येतद्धारावाहिकस्थलेऽन्यान्यकालविशिष्टार्थगोचरतया यथाऽनधिगतार्थत्वं तथा अत्रापि पूर्वमज्ञातज्ञानविशेषणकार्थविषयतयाऽनधिगतार्थत्वमेवेति भावः । **तथेतीति** । अज्ञाता-धिकविज्ञेयविषयकत्वादनधिगतार्थतेत्यर्थः । अतिव्याप्तेश्चेति प्राक् प्रतिज्ञातातिव्याप्तिमुपपादयति **संशयविपर्यासयोरपीति** । **इतरेतराश्रयत्वमिति** । व्यावर्त्यत्वसिद्धौ लक्षणे विशेषणमर्थवत् । सिद्धे च तत्सार्थक्ये लक्षणाभावेन स्मृत्यादेर्व्यावर्त्यत्वसिद्धिरित्येवंरूपेणेति भावः । इतिशब्दः प्रामाण्यस्य व्याप्यव्यापकभूतं लक्षणमित्युक्ताद्यपक्षदूषणसमाप्तौ ।

**गु०दी०**— **प्रत्यभिज्ञानानुपपत्तेश्च** इत्यत्र एको वर्तमान एव प्रतीयत इति नियमस्य प्रत्यभि-ज्ञायामभावादित्यर्थः । **अनुवादोऽपि यदा वादविषय** इत्यत्र परोदितपदमालारूपवादमात्रविषयो न तु तदभि-प्रेतार्थविषय इत्यर्थः । **धारावाहिकसमानो न्याय** इत्यत्र अत्र घटोऽस्तीति वाक्यस्य लटा प्राग्वादकालः कथ्यते । अनुवादे त्वनुवादकाल इति कालभेदप्रत्ययो भवतीत्यर्थः । अयं च दोषोऽध्येतॄणामनुवादवत् केवलानुवादविषयः । या गौरस्तीत्युक्ता तामानयेति वाक्ये तु स्पष्टमधिकविषयत्वमिति भावेनाह **अधिक-विधानेनेति** । विचारे क्रियमाणे व्यभिचारादर्शनं वा तत्रोदासीनस्य व्यभिचारादर्शनं वेति विकल्पं मनसि निधायाह **धारावाहिक** इत्यादि ।

**यादु०**— पूर्वपक्षी स्वाशयमुद्घाटयितुमाह **ननु यद्यपीति** । **नानाप्रतिपत्तृवदिति** । यथाऽनेकप्रति-पत्तॄणामेकक्षणरूपकालविषयकेषु ज्ञानेषु यौगपद्यम् एवमेकप्रतिपत्तृकाणां वस्तुतः क्रमभाविनामेककालविषयकत्वे यौगपद्यं स्यादित्यर्थः । ननु ज्ञानयौगपद्ये न विषयीभूतकालैक्यं तन्त्रं, किन्त्वधिकरणक्षणैक्यमेवेत्यरुचेराह **प्रत्यभिज्ञेति** । यदि क्रमभाविष्वनेकेषु ज्ञानेष्वेक एव स्थूलकालोऽवभासेत, तदैकज्ञानरूपा प्रत्यभिज्ञा नोपपद्येत, किन्तु सोऽयमिति स्मृत्यभिज्ञारूपं ज्ञानद्वयमेव स्यादित्यर्थः । नन्वेवं पूर्वकालीनेन एतत्कालीनस्याभेदासिद्ध्या





पदार्थानां स्थायितासिद्धिर्न स्यादित्यत आह **ज्ञानानेकत्वेऽपीति** । प्रत्यभिज्ञास्थले स्मृत्यभिज्ञारूपयोर्ज्ञानयोरनेकत्वेऽपि वस्तुनः संवत्सरादिरूपैकस्थूलकालावस्थानाकलनसम्भवादित्यर्थः । यथा धारावाहिकज्ञानस्थले त्वयैक एव घटिकादिरूपः स्थूलकालो भासत इत्युच्यते तथा प्रत्यभिज्ञास्थले मयाऽपि संवत्सरादिरूपः स्थूलकाल एक एव ज्ञानद्वये भासत इति वक्तुं शक्यते ततश्च ज्ञानद्वयविषयस्य वस्तुनः संवत्सरादिरूपकालावस्थानसिद्ध्या स्थायिता ज्ञानानेकत्वेऽपि सिद्ध्यतीति भावः । यद्वा प्रत्यभिज्ञाऽनुपपत्तिः कुत इत्यत आह **ज्ञानानेकत्वेऽपीति** । धारावाहिकज्ञानानामनेकत्वेऽपि तद्विषयस्य वस्तुन एककालावस्थानस्यैककालसम्बन्धित्वस्याकलनं भानं तस्याङ्गीकारादित्यर्थः । अयमाशयः । एकस्य वस्तुनः कालद्वयसम्बन्धावगाहिज्ञानं हि प्रत्यभिज्ञा । यदि च धारावाहिकज्ञानेष्वेक एव वर्तमानकालोऽवभासत इत्युच्यते, तर्हि पूर्वानुभवप्रत्यभिज्ञयोरप्येकस्यैव वर्तमानकालस्य भानप्रसङ्गोऽविशेषात् ततश्चोक्तरूपप्रत्यभिज्ञाऽनुपपत्तिरिति । एवं च प्रत्यभिज्ञासंरक्षणाय यदनेकं ज्ञानं न तदेककालविषयकमिति नियमोऽङ्गीकार्यः । ततश्च धारावाहिकज्ञानानामनेकत्वान्नैककालविषयकत्वमिति । **वर्तमानार्थ इति** । वर्तमानकालरूपतत्तत्क्षणविशिष्ट इत्यर्थः । **वादविषयो** वादावच्छिन्नार्थविषयः । यथा शब्दो नित्य इति यदुक्तं त्वयेत्यादिरूपः । **तदा स्फुटमिति** । वादे वादस्याभानादिति भावः । **यदि च पूर्वविज्ञानेति** । पूर्वविज्ञानेन विशिष्टः सम्बद्धो विषयीकृत इति यावत् । यथा 'अग्निर्हिमस्य भेषजम्' इत्यादिरूपः । पूर्वविज्ञानविषयीभूतार्थगोचररूपेऽनुवादेऽपि द्रष्टव्यम् । किं तत्राधिकविधानादिकं नास्त्युतास्तीत्याद्ये आह **तथापीति** । धारावाहिकज्ञानेष्विवात्रापि कालविशेषमादाय न अधिगतार्थत्वमुपपादनीयमिति भावः । द्वितीये त्वाह **अधिकविधानेनेति** । तथेत्यनेन स्फुटमनधिगतार्थत्वमित्यस्य परामर्शः । तथा च यदाऽधिकविधानार्थमुक्तमेवोच्यते तदोक्तेऽर्थे विधीयमानान्वयस्य पूर्वमनधिगतत्वात् अनधिगतार्थत्वमेव स्पष्टमिति भावः । एवमव्याप्तिमुपपाद्यातिव्याप्तिमप्युपपादयति **संशयविपर्यासयोरिति** । **इतरेतराश्रयत्वमिति** । अनधिगतेति विशेषणस्य लक्षणानुप्रवेशे सिद्धे लक्षणाभावात् स्मृतेर्व्यावर्त्यतासिद्धिः तत्सिद्धौ चानधिगतविशेषणस्य लक्षणे प्रवेशसिद्धिः इतीतरेतराश्रयत्वमित्यर्थः ।

**वं०प०— तादवस्थ्यं** तथा च तदंशोऽप्यधिगतार्थगन्तृत्वमेवेत्यर्थः । तर्हि कथं घटादिज्ञानेऽनधिगतार्थत्वमित्यतोऽखण्डः काल एक एव प्रतीयत इति पक्षस्यायुक्तत्वादन्यान्यलक्षणविशिष्टार्थविषयीकरणस्यैव वक्तव्यत्वादनधिगतार्थगन्तृतैवास्तीत्याह **तथाऽपीत्यादिना** । **वर्तमान एवार्थः** वर्तमानतत्तत्क्षणलवादिविशिष्टोऽर्थः । ननु वर्तमानकालस्य वा पूर्वोत्तरज्ञाने प्रतीतस्यैकत्वे पुनरनधिगतार्थत्वायोग एवेत्यत आह **न चेति** । वर्तमानकालस्याविषयत्वे । क्रमभाविनामिति हेतुगर्भम् । क्रमभाविज्ञानानां वर्तमानैककालरूपस्थूलकालविषयकत्वे प्रत्यभिज्ञा न सम्भवति । पूर्वकाले ज्ञातस्यैव पुनः कालान्तरे ज्ञाने हि प्रत्यभिज्ञात्वम् । पूर्वोत्तरज्ञानयोरेककालविषयकत्वे ज्ञानयोरभिज्ञात्वस्यैव प्राप्त्या प्रत्यभिज्ञात्वं न स्यादित्याह **प्रत्यभिज्ञेति** । एतदेवोपपादयति **ज्ञानेति** । ज्ञानानामनेकत्वेऽप्येकस्मिन्नखण्डे काल एवावस्थानस्य सम्यग्ज्ञातत्वादित्यर्थः । **वर्तमानोऽर्थः** तत्तक्षणविशिष्टोऽर्थः । तदुपपादयति **स्मृतिरपीति** । अनुभूतमनुभवेन विषयीकृतम् । **अन्यथा**





अतीततत्कालतया नावगाहत इत्यधिगतार्थगन्तृत्वं यदि ब्रूषे । **वादविषय इति** । 'यदुक्तं त्वया तन्ने'त्येवं वादविषय इत्यर्थः । **स्फुटमिति** । अनुवादे वादविषयकत्वस्य प्रतीयमानत्वेनास्य च वादेऽप्रतीतत्वादनधिगतार्थत्वमित्यर्थः । **विशिष्टो** विषयीभूतः । तथा चाधिगतार्थत्वं यद्युच्यत इति भावः । **समान इति** । अन्यान्यक्षणादिविषयीकरणेनानधिगतार्थत्वमित्यर्थः । अतिव्याप्तिमुपपादयति **संशयेति** । **इतरेतरेति** । अनधिगतेति विशेषणस्य लक्षणप्रवेशे सिद्धे लक्षणाभावात् स्मृतेर्व्यावर्त्यत्वसिद्धिः तत्सिद्धौ च तद्व्यावर्तकत्वेन अनधिगतविशेषणस्य लक्षणे प्रवेशसिद्धिरित्यन्योन्याश्रय इत्यर्थः ।

**कं०रा०— वर्तमान इति** । वर्तमानकालविशिष्ट इत्यर्थः । **नानेति** क्रमभाविनां ज्ञानानामेकवर्तमानकालविषयत्वे नानाप्रतिपत्तॄणामेकस्मिन् घटज्ञानयौगपद्यस्य प्रसङ्गादित्यर्थः । प्रत्यभिज्ञानानुपपत्तिमेव दर्शयति **ज्ञानानेकत्व इति** । ज्ञानैक्यस्थले इव ज्ञानानेकत्वस्थलेऽप्येककालावस्थायिनाकलनस्याङ्गीकारात् सोऽयमिति तदेतत्कालावगाहिप्रत्यभिज्ञानानुपपत्तिरिति भावः । **तस्मादिति** । उक्तरीत्या धारावाहिकविज्ञानानामेककालविषयत्वायोगात् पूर्वपूर्वविज्ञानैरनाकलित एव वर्तमानकाल उत्तरोत्तरे विषयीक्रियत इति तेषामनधिगतार्थत्वमेवेत्यर्थः । **अतीतेति** । अतीततत्कालसम्बन्धितयेत्यर्थः । **अन्यथेति** । स्मृतेः अतीततत्कालसम्बन्धितया अर्थानवगाहित्वे स इत्याकारो न स्यादित्यर्थः । **अनुवादोऽपीति** । अनुवादोऽपि यद्ययमित्याहेति वादविषयस्तदा वादस्य प्रतिपत्त्यनधिगतत्वेन तद्विषयस्यानुवादस्यानधिगतार्थत्वं स्फुटमित्यर्थः । **यदि चेति** । यदि च गेहे घटोऽस्तीत्यादिज्ञातवन्तं प्रति प्रयुक्तः पूर्वज्ञानविषयकतार्थगोचरो गेहे घटोऽस्तीत्यादिवाक्यरूपोऽनुवादस्तथापि धारावाहिकस्थल इव पूर्वानधिगतकालविशेषविशिष्टार्थविषयीकरणेन अनधिगतार्थगन्तृत्वं तत्रास्त्येवेति भावः । **अधिकविधानेनेति** । दध्ना जुहोतीत्यादौ जुहोतीत्यादेरनुवादस्य दध्नेत्यादिगुणविधानेन यत्रैकवाक्यता तत्राप्यनधिगतदध्यादिहोमसाधनत्वविषयीकरणेनानधिगतार्थगन्तृत्वमस्त्येवेत्यर्थः । **इतरेतराश्रयत्वमिति** । स्मृत्यादेर्व्यावर्तनीयत्वसिद्धानधिगतविशेषणप्रवेशस्य कर्तव्यतया लक्षणाभावसिद्धिः तत्सिद्धौ च स्मृत्यादेर्व्यावर्तनीयत्वसिद्धिः इति इतरेतराश्रयत्वमित्यर्थः ।

**श्रीनिधि०— नानाप्रतिपत्तृवदिति** । वर्तमानकालैक्ये बहूनां प्रतिपत्तॄणां एकविषयकं युगपदेव जायते तद्वत्स्यादित्यर्थः । **एककालावस्थानाकलनादिति** । अतीतवर्तमानरूपभिन्नकालवैशिष्ट्यविषयकत्वेन खलु प्रत्यभिज्ञा । स चेद्भेदो नास्ति तदा प्रत्यभिज्ञा नोपपद्यत इत्यर्थः । **इतरेतराश्रयत्वमिति** । स्मृत्यादेर्व्यावर्त्यत्वे सिद्धे विशेषणस्य सार्थक्यात् तद्घटितस्य लक्षणत्वसिद्धिः । तद्घटितस्य लक्षणत्वे सिद्धे तदभावेन स्मृत्यादेर्व्यावर्त्यत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः ।

**शे०वा०—** प्रत्यक्षस्य वर्तमानमात्रग्राहित्वनियमेन स्वाश्रयक्षणविशिष्टस्तम्भादिग्राहित्वेनागृहीतग्राहित्वं भविष्यतीति शङ्कते **नन्विति** । **नानेति** । नानाप्रतिपत्तृकैककालविषयकज्ञानानां यौगपद्यवदेकप्रतिपत्तृकानेकज्ञानानामप्येककालविषयत्वाद्यौगपद्यं स्यादित्यर्थः । न च स्थूलकालस्यैकस्यैव विषयत्वेऽप्यौपाधिकसूक्ष्मकालानामनेकत्वेन तत्रोत्पत्त्या न यौगपद्यमिति वाच्यम् । औपाधिककालाभ्युपगमे तस्यैव विषय-





त्वेनानधिगतार्थगन्तृत्वापत्त्या स्थूलकालस्यैव विषयत्वेनाधिगतार्थत्वं वदता तथा वक्तुमशक्यत्वात् । तथा च ज्ञानमात्रस्यैककालविषयकत्वाद्यौगपद्यापत्तिर्दुर्वारैवेति भावः । यद्वैतदस्वरसादाह **प्रत्यभिज्ञेति** । तदनुपपत्तिमेवोपपादयति **ज्ञानेति** । धारावाहिकज्ञानानामनेकत्वेऽपि तद्विषयस्य वस्तुन एककालावस्थानस्यैककालसम्बन्धित्वस्याकलनाद्धानादित्यर्थः । अयम्भावः । एकस्य वस्तुनः पूर्वापरकालावस्थानं हि प्रत्यभिज्ञाविषयः । तथा च धारावाहिकज्ञानेषु यदि पूर्वज्ञानकालावस्थानमेवोत्तरज्ञानविषयः स्यात्तदा प्रत्यभिज्ञानस्यापि पूर्वानुभवकालावस्थानमेव विषयः स्यादविशेषात् । यदि च प्रत्यभिज्ञानेनापि पूर्वानुभवकालावस्थानमेव विषयीक्रियेत । तदैकस्य वस्तुनः पूर्वापरकालावस्थानरूपप्रत्यभिज्ञाविषयशून्यत्वेन सोऽयमित्यादिज्ञानस्य प्रत्यभिज्ञात्वं न सिद्ध्येत । तदसिद्धौ च न तया स्थैर्यमपि सिद्ध्येदित्यत उक्तरूपप्रयोजनसिद्ध्यर्थं सोऽयमित्यादिज्ञानस्य प्रत्यभिज्ञात्वसंरक्षणाय तस्य पूर्वानुभवकालावस्थानमात्रविषयकत्वाभावे वक्तव्येऽनेकज्ञानानामेककालावस्थानविषयकत्वाभावसिद्धेर्न धारावाहिकस्थलेऽप्यनेकज्ञानानामेककालावस्थानविषयकत्वमित्यनधिगतार्थगन्तृता तस्य युक्तैवेति । यद्वा क्रमभाविष्वनेकेष्वपि ज्ञानेष्वेक एव स्थूलकालोऽवभासत इति यद्युच्यते तदा सोऽयमित्येकज्ञानरूपा प्रत्यभिज्ञा दत्तजलाञ्जलिः स्यात् । अत्रापि सोऽयमिति स्मृत्यभिज्ञारूपज्ञानद्वयस्यैव सम्भवेनैकज्ञानत्वकल्पकाभावादित्यर्थः । नन्वेवं पूर्वकालीनेनैतत्कालीनस्याभेदासिद्ध्या पदार्थानां स्थायित्वं न स्यादित्यत आह **ज्ञानानेकत्वेऽपीति** । प्रत्यभिज्ञास्थले स्मृत्यभिज्ञारूपयोर्ज्ञानयोरनेकत्वेऽपि वस्तुन संवत्सरादिरूपैकस्थूलकालावस्थानाकलनसम्भवादित्यर्थः । यथा हि धारावाहिकज्ञानस्थले त्वयैक एव घटिकादिरूपस्थूलकालो भासत इत्युच्यते तथा प्रत्यभिज्ञास्थले संवत्सरादिरूपः स्थूलकाल एव ज्ञानद्वये भासत इति वक्तुं शक्यत एव । ततश्च ज्ञानद्वयविषयत्वेऽपि वस्तुनः संवत्सरादिरूपैककालावस्थानसिद्ध्या स्थायित्वस्य ज्ञानानेकत्वेऽपि सिद्धेरिति भावः । **वर्तमान इति** । स्वाश्रयेण विशिष्ट इत्यर्थः । **अनधिगतार्थत्वमेवेति** । तथा च तदभावस्यासिद्धत्वान्न तेन प्रामाण्याभावसाधनोपपत्तिरिति भावः । कथं स्मृत्यादेरनधिगतार्थगन्तृत्वमित्यतः स्मृतेस्तावत् तदुपपादयति **स्मृतिरपीति** । **अन्यथेति** । वर्तमानतत्कालतयाऽनुभूतस्यार्थस्य वर्तमानतत्कालतयैव स्मृत्याऽवगाहनेऽनुभवस्येव स्मृतेरप्ययमित्याकारत्वापत्त्या स इत्याकारत्वं न स्यादित्यर्थः । अनुवादस्य तदुपपादयति **अनुवाद इति** । **स्फुटमिति** । वादे वादस्याभावेन वादाविषयवादविषयकत्वादित्यर्थः । **पूर्वज्ञानेति** । वादविषयीकृतार्थगोचर इत्यर्थः । अत्र प्रष्टव्यम् । किमत्र वादविषयीकृतार्थमात्रप्रतिपादनमुताधिकविधानार्थं तदिति विकल्पद्वयं मनसि निधायाद्यं दूषयति **तथाऽपि धारावाहिकेति** । धारावाहिकज्ञानेष्विवात्रापि कालविशेषमादायानधिगतार्थगन्तृत्वस्य सूपपादनत्वादिति भावः । द्वितीयं दूषयति **अधिकेति** । **तथेति** । स्फुटमनधिगतार्थत्वमित्यर्थः । यदा ह्यधिकविधानार्थमुक्तमनूद्यते तदा पूर्वानुवादेन विधीयमानस्यान्यस्य प्रागनधिगतस्यैव प्रतिपादनादनधिगतार्थत्वं तस्य स्फुटमिति भावः । एवमव्याप्तेरतिव्याप्तेश्चेति प्रतिज्ञातामव्याप्तिमुपपाद्यातिव्याप्तिमप्युपपादयति **संशयेति** । **इतरेतराश्रयत्वमिति** । अनधिगतविशेषणस्य लक्षणानुप्रवेशसिद्धौ लक्षणाभावात् स्मृतेर्व्यावर्त्यत्वसिद्धिः तत्सिद्धौ चानधिगतविशेषणस्य लक्षणानुप्रवेशसिद्धिरितीतरेतराश्रयत्वमित्यर्थः ।





**वा०र०—** यद्यपि स्वरूपस्य प्रकारस्य वा तथाविधस्य तादवस्थ्यमित्येतत् निबन्धव्याख्यानरूपतया च प्रत्यक्षस्य वर्तमानमात्रग्राहित्वनियमेन स्वाश्रयलक्षणाविशिष्टस्तम्भादिग्राहकत्वेन गृहीतग्राहित्वं भविष्यतीत्येतत् वर्धमानानुसारेणावतारयति **प्रत्यक्षस्य वर्तमानेति** । **स्वाश्रयक्षणेति** । अत्र क्षणपदं कालपरम् । स्वयं तत्कालेऽस्ति तत्कालविशिष्टेत्यर्थः । **एक एव वर्तमानः इति** मूले स्वाश्रय इति पूरणीयम् । **उक्तं च स्वाश्रयक्षणेति** । प्रत्यक्षस्य वर्तमानमात्रेत्यादि च । **न च क्रमभाविनामिति** मूलम् । अनेन धारावाहिकज्ञानानि न स्वाश्रयैकवर्तमानकालमात्रविषयाणि, क्रमभाव्यनेकज्ञानत्वात्, अनुभवप्रत्यभिज्ञादि ज्ञानद्वयवत् इति प्रयोगः सूचितः । अत्र युगपदुत्पन्नेषु घटपटादिज्ञानेषु व्यभिचारवारणाय क्रमभावीति विशेषणम् । न च क्रमभावीत्यनेनैव एकैकज्ञानत्वेन सम्मतः घटः पटः इत्यादि ज्ञानस्य एकैककालमात्रविषयकस्य निवृत्तिसिद्धेः अनेकपदं अनर्थकमिति वाच्यम् । तस्य तदर्थत्वानङ्गीकारात् । किन्तु तत्पदं अन्यथाप्रत्यभिज्ञानस्यापि एकानुभवकालविषयकत्वमेव स्यादिति वक्ष्यमाणबाधकप्रदर्शनार्थम् । एककालविषयकेष्वपि आसीदस्तिभविष्यतीत्यादिज्ञानेषु स्वाश्रय एककालविषयकत्वाभावस्यापि सत्त्वान्न व्यभिचारः । एक एवेत्यस्यापि भिन्न एवेत्यर्थः । एकोऽन्यार्थे प्रधाने च प्रथमे प्रत्यभिधानेन समानार्थकत्वात् एकशब्दस्य गुणगुणिनोरेककालोत्पत्तिस्वीकार इत्यादौ काले एकत्वसङ्ख्यार्थो न भवति । एकत्वसङ्ख्यावत्कालजन्यत्वस्य भिन्नकालोत्पन्नघटपटादिसाधारणत्वेन सामग्र्यैक्यप्रयोजकत्वाभावात् । किन्तु अभेद एव एकशब्दार्थ इति सर्वसिद्धत्वात् । घटपटगतं रूपं अनेकं न तु संयोगवत् एकं इत्युक्ते अभेदस्यैव प्रतीतेश्चेति ज्ञेयम् । एवं प्रत्यभिज्ञानाख्यदृष्टान्तेऽपि अनुभवकालेन एको यः कालः तद्विषयत्वमात्रं नास्ति । तदन्यकालगोचरत्वादिति युक्तं दृष्टान्तत्वम् । एवं घटः पटः इत्यादि ज्ञानेषु क्रमभाविषु पृथक् पृथक् कालविषयत्वेन सम्भवेषु उक्तसाध्यसाधनसद्भावात् तेषामपि दृष्टान्तत्वमित्यवधेयम् । **नानाप्रतिपत्तृकेति** । नानाभूताः प्रतिपत्तारो येषामिति षष्ठ्यर्थः कर्तृत्वम् । तथा च नानाप्रतिपत्तृकाणां इति सिद्ध्यति । एतेन नानाप्रतिपत्तृकत्वं प्रतिपत्तव्यविषयधर्मः कथं ज्ञानस्य स्यात् इति निरस्तम् । एककालविषयकेत्यत्र स्वाश्रयेति योज्यम् । यौगपद्यवत् । एककालेऽवस्थानवत् इत्यर्थः । **एककालविषयत्वादिति** । स्वाश्रय एककालेति सिद्धम् । उक्तरीत्या आश्रयविषयकालयोः ऐक्यमाश्रित्य यौगपद्यापादनस्य विवक्षितत्वादेव नानाप्रतिपत्तृकज्ञाने एककालोत्पन्नत्ववत् धारावाहिकज्ञानेषु तदभावात् कथं यौगपद्यापादनमित्यपि शङ्काऽनवकाशहता । अत एव क्रमभाविनामिति पूर्वमूले हेतुगर्भं विशेषणं यदुक्तं तदभिप्रायः एव क्रमभावित्वं न स्यात् इत्यर्थकेण यौगपद्यप्रसङ्गात् इत्युत्तरमूलेन विशदीकृतः । एतदभिप्रेत्यैव टीकाकृता न च स्वस्थलेत्यादिना आश्रयविषयकालयोः भेदमाशङ्क्य निराकरणमुत्तरवाक्ये करिष्यते । एवमाश्रयकालस्य विषयकालेन ऐक्यस्य यौगपद्यप्रयोजकत्वेनाश्रयणात् एव एकस्मिन्नेव घटे क्रमभाविना घटो भविष्यति घटोऽस्ति घट आसीत् इत्येवंरूपेण जायमानज्ञानानां एककालविषयत्वसत्त्वेऽपि युगपदवस्थानाभावात् इति शङ्कापि अनवकाशेति ज्ञेयम् । आश्रयविषयकालयोः ऐक्यमाश्रित्य यौगपद्यमापादितम् । तन्न तयोर्भेदात् इत्याशङ्कते **न च स्थूलेति** । **तत्रोत्पत्त्येति** । तथा च विषयभूतस्थूलकालान्य एव सूक्ष्मकालाः आश्रयाः प्राप्ताः इति तदाश्रितज्ञानानां एव एककालावस्थानरूपं यौगपद्यं न प्रसज्यते इत्यर्थः । **कालाभ्युपगम इति** ।





कालस्य आश्रयत्वाभ्युपगमेत्यर्थः । **तस्यैव** औपाधिककालस्यैव । **अनधिगतार्थत्वेति** । तत्र ज्ञानानां स्वस्वोत्पत्त्याश्रयकालविषयत्वपक्षे एतत्कालानां प्रागनधिगतया अनधिगतार्थगन्तृत्वं अवर्जनीयम् । प्रत्यक्षेण यत्कालावच्छिन्नोऽर्थः विषयीक्रियते स वर्तमान एव भवेत् तस्य वर्तमानमात्रग्राहित्वात् । यदि स्थूलकाल एव सूक्ष्मकालघटितः विषयतया विवक्ष्यते तर्हि आश्रयेऽपि स एव विवक्षणीयः । यदि च सूक्ष्म एवाश्रयत्वेन विवक्ष्यते तर्हि स एव विषयत्वेनापि स्वीकार्यः । प्रत्यक्षस्य वर्तमानमात्रग्राहित्वादेव यतः एवं लक्षणसम्भवः आयाति अतः स्थूलकालमादाय अधिगतार्थगन्तृत्वात् लक्षणाभाव इति व्युत्पादनाय प्रवृत्तेन घटिकादि-स्थूलकालाश्रयणेनैव विषयैक्यं वदता तदाश्रयणेनैवाश्रयकालोऽपि वाच्यः इति नौपाधिककालमादाय आश्रय-भेदकल्पना युक्ता इत्याशयः । एतेनैवासीदत्र घटः इति ज्ञानस्य स्वोत्पत्तिकालाविषयत्ववत् एतस्यापि स्वोत्पत्तिकालाविषयत्वं सम्भवत्येव । अन्यथा यः आश्रयः स एव विषयः इत्यस्यासीदत्र पटः इति ज्ञाने व्यभिचार इति शङ्काप्यपास्ता । वर्तमानमात्रग्राही प्रत्यक्ष एव तथात्वस्वीकारात् भविष्यति अस्ति आसीत् इत्येवंरूपैककालविषयकज्ञानानामपि स्वाश्रयैककालाविषयत्वात् न युगपदवस्थानं आपद्यते इति प्रागेवोक्तम् । एवं धारावाहिकज्ञानानां औपाधिककालमादाय अनधिगतार्थत्वशङ्कायाः मूलोपरि प्राप्तायाः उत्तरमूले परिहारा-भावेन स्वयं तत्परिहारः कृतः । इदानीं मूलकारेण उक्तास्वरसं मनसि कृत्वैव दूषणान्तरस्य प्रवर्तितत्वेन तदस्वरसपरिहारस्याकर्तव्यत्वात् किमस्माकं आयासेन इत्याशयेनोक्तास्वरसं मूलीकृत्यैव उत्तरमूलप्रवृत्तिः इत्याह **यद्वेति** । उक्तरीत्या उक्तशङ्कायाः परिहारो वा भवतु । अथवा तत्परिहारो मा भूत् । तथापि न दोषः । तद्दोषाभावेऽपि दोषान्तरसम्भवादित्यर्थं यद्वेति निपातसमुदायः । स व्यावहारिकश्चायं अवतारः स्वपरग्रन्थेषु । अत एव चान्योन्यसिद्धता । चक्रकापत्तिरथवेत्यादि उपाधिखण्डनव्याख्यावसरे मूलकृता पूर्वपूर्वदूषणे परिप्राप्तास्वरसपरिहाराय तत्तद्दूषणपरित्यागेन दूषणान्तरदानपरत्वेन उत्तरोत्तरवाक्यप्रवृत्तिवर्णनं कृतं इत्यादि द्रष्टव्यम् । एवमेवास्तु वेत्यादिग्रन्थेऽपि अङ्गीकारानङ्गीकारयोः विरोधाभावः ऊह्यः । पूर्वदूषणस्यास्वारस्येन त्यागाभिप्रायकल्पने प्रत्यभिज्ञानानुपपत्तेश्चेति पूर्वदूषणसमुच्चायकचशब्दायोगः इत्यपि न शङ्कनीयम् । वान्योन्य-सिद्धता इत्यादौ वाशब्दप्रयोगस्येवान्यत्रापि स्वपरग्रन्थयोः किञ्चेत्यादिरूपेण पूर्वदूषणोपरि प्राप्तास्वरसमभिप्रेत्य दूषणान्तरदानस्थले च शब्दप्रयोगस्येव चात्रापि चशब्दोपपत्तिरिति ज्ञेयम् । **वस्तुन एककालावस्थानस्येति** । अत्र प्रकरणे स्वरूपस्य प्रकारस्य वा तादवस्थ्येऽपि वर्तमानकाल एव परिस्फुरति । एक एव वर्तमानः कालो विषयः । एककालावस्थानाकलनात् इत्यादिकोक्तीनां विचित्रत्वेऽपि स्वाश्रयक्षणविशिष्टस्तम्भादिग्राहकत्वेनेति टीकानुसारेण विशिष्टार्थमादायैव अनधिगतार्थताद्युपपादनस्य प्रवृत्तिसाध्या क्वचित् अर्थावच्छेदककालपुरस्कारेण उक्तेः अवस्थानोक्तेश्च अवस्थितिपर्यन्ततायाः सत्त्वात् नान्यतमं स्वीकृत्य विरोधशङ्कावकाशः । एवमुत्तरत्रापि द्रष्टव्यम् । **पूर्वापरेति** । पूर्वकालसम्बन्धावच्छिन्नेऽपरकालावस्थानमित्यर्थः । प्रत्यभिज्ञानं हि पूर्वकाल-सम्बन्धावच्छिन्नं स इत्यनूद्य तस्मिन् अयं इति एतत्कालावस्थानं विषयीकरोति । ततः प्रत्यभिज्ञायाः तत्कालावच्छिन्ने एतत्कालसम्बन्धविषयकत्वमिति ज्ञेयम् । **उत्तरज्ञानेति** । उत्तरज्ञानानामिति स्पष्टं उक्त्वा उत्तरज्ञानत्वे सङ्गृह्योक्तिस्तु प्रत्यभिज्ञासङ्ग्रहाय । **पूर्वानुभवकालेति** । अनेन प्रत्यभिज्ञास्थले पूर्वानुभव एव





पूर्वज्ञानं प्रत्यभिज्ञानमेवोत्तरज्ञानं इत्येवं उभयं विवक्षित्वैव ज्ञानानेकत्वमिति सूचितम् । एवकारेण तदतिरिक्तं पूर्वकालसम्बन्धावच्छिन्ने उत्तरकालसम्बन्धरूपं पूर्वापरकालावस्थानं व्यावर्तयति । एवं उत्तरत्रापि एवकारार्थो ज्ञेयः । **पूर्वज्ञानकालावस्थानमेवेति** । एवकारेण पूर्वज्ञानकालान्यत् तदुत्तरकालावस्थानं व्यावर्तयति । यत्र धारावाहिकज्ञानानां पूर्वज्ञानकालावस्थानमात्रविषयत्वं तत्र प्रत्यभिज्ञानस्य पूर्वज्ञानकालावस्थानमात्रविषयकत्व-मिति । विशेषव्याप्तौ दृष्टान्ताभावेऽपि अविशेषलक्षणसामान्यव्याप्तिसद्भावात् नानुपपत्तिरित्याह **अविशेषादिति** । यदि धारावाहिकज्ञानानां भिन्नभिन्नकालविषयकत्वसम्भववत्तामपि घटिकादिरूपस्थूलैककालविषयकत्वं स्वीक्रियते तर्हि प्रत्यभिज्ञानस्यापि पूर्वज्ञानकालभिन्नकालावस्थानविषयकसम्भववत् तेऽपि संवत्सरादिरूपकालविषयकत्वं स्यात् इत्यत्र यदविशिष्टस्य यस्य यत् भवति तत्तदविशिष्टस्यापरस्यापि तत् भवति इति सामान्यव्याप्तिसद्भावात् इत्यर्थः । यत्किञ्चित् विशेषकल्पनस्यातिप्रसङ्गमात्रोच्छेदकत्वेनाकल्पनीयत्वादिति भावः । एवमुपयुक्तं उक्त्वा प्रत्यभिज्ञानानुपपत्तेः इति मूलस्य प्रत्यभिज्ञात्वप्रयोजकस्याभावेन प्रत्यभिज्ञात्वानुपपत्तेः इत्यर्थं मनसि कृत्वा अतिप्रसङ्गान्तरपरतया मूलं योजयति **यदि चेति** । **एकस्य वस्तुनः पूर्वेति** । वस्तुनो यत् पूर्वापरकालावस्थानं तत्तद्रूपो यो विषयः इति नित्यसापेक्षत्वात् समासः । उक्तं हि पूर्ववाक्ये वस्तुनः पूर्वापरकालावस्थानं हि प्रत्यभिज्ञाविषय इति । केचित्तु वस्तुनः विषयशून्यत्वेनेति सम्बन्धमिच्छति । तथाहि । यदि प्रत्यभिज्ञानेन पूर्वानुभवकालावस्थानमात्रमेव विषयीक्रियेत तदा तस्य वस्तुनः एककालावस्थानमात्ररूपप्रत्यभिज्ञाविषय-प्रकारैकदेशवत्वप्राप्तावपि तेन ज्ञानेन स्थूलज्ञानविषयकत्वाङ्गीकारपक्षे पूर्वापरकालावस्थानस्याविषयीकरणप्राप्त्या प्रमाणाभावेन तस्मिन् वस्तुनि पूर्वापरकालावस्थानरूपप्रत्यभिज्ञाविषयस्य प्रकारस्यासिद्ध्या एकस्य वस्तुनः उक्तरूपप्रत्यभिज्ञाविषयप्रकारशून्यत्वं प्राप्तम् । ततश्च पूर्वापरकालावस्थितत्वेन एकवस्तुविषयकज्ञानरूपं प्रत्यभि-ज्ञात्वं परस्यापि सोऽयं इत्यादिज्ञाने सम्प्रतिपन्नं स्यात् । विशेषणाभावेऽपि विशिष्टज्ञानस्य जायमानस्य भ्रान्तित्वात् इत्यर्थस्याविवक्षितत्वेन वस्तुनः इत्यस्य शून्यत्वेनेत्यनेनान्वयोपपत्तेरिति । व्याख्यानद्वयेऽपि निष्कर्षस्तु येन पूर्वोत्तरकालावस्थितएकवस्तुविषयकज्ञानरूपां प्रत्यभिज्ञामङ्गीकृत्यापि धारावाहिकज्ञानानां अनेक-त्वेऽपि एकस्थूलकालविषयकत्वमङ्गीकृतं प्रति उक्तलक्षणकप्रत्यभिज्ञात्वेन सम्भूत सोऽयमित्यादिज्ञानस्यापि पूर्वभूतानुभवकालाख्यस्थूलकालविषयत्वस्याविशेषेण प्राप्यापूर्वापरकालावस्थितत्वेन एकवस्तुविषयकत्वाभाव-प्रसङ्गेन उक्तलक्षणकप्रत्यभिज्ञात्वं न स्यादिति आपादनं क्रियत इति । मास्तु प्रत्यभिज्ञात्वमपीति मूलोपरि प्राप्ते इष्टापत्तिशङ्कावारणाय मूलाभिप्रेतमनिष्टान्तरं दर्शयति **तथेति** । एवं प्रसङ्गानुक्त्वा विपर्ययपर्यवसानानि दर्शयन् न च क्रमभाविनां इति पूर्वोक्तैककालविषयत्वाभावः सिद्धः इत्याह **इत्यत उक्तरूपेत्यादिना** । पदार्थ-स्थैर्यवादिभिः प्रत्यभिज्ञाया एव स्थैर्यसाधकत्वेनाङ्गीकारादिति भावः । **प्रत्यभिज्ञात्वसंरक्षणायेति** । उक्ता-पादनक्रमेणैव उत्तरोत्तरापाद्यव्यतिरेकेणापादकव्यतिरेकस्य कथनमेतत् इत्यतः प्रत्यभिज्ञात्वसंरक्षणाय पूर्वेत्यादिकं क्रमेण विपर्ययस्योक्तम् । एवं उत्तरत्रापीति ज्ञेयम् । **अनेकज्ञानानामिति** । अत्र क्रमभाविनामिति पूर्वमूलानुसारेण सिद्धत्वात् नोक्तम् । **तथा वर्तमानेति** । नियमेति च सिद्धम् । तथा च क्रमभाव्यनेकज्ञानानां वर्तमानैक-कालावस्थानविषयत्वनियमसिद्धेरिति फलितं भवति । अधिकं न च क्रमभाविनां ज्ञानानामिति पूर्वमूल-

